# BIBLIOTHECA INDICA:

## COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

## ASIATIC SOCIETY OF BENGAL.

OLD SERIES, NOS. 219, 221, 224, AND 228.

---

# THE SAÑHITÁ OF THE BLACK YAJUR VEDA,

WITH THE

## COMMENTARY OF MÁDHAVA ÁCHÁRYA.

EDITED BY

MAHES'ACHANDRA NYÁYARATNA.

VOL. III.

CALCUTTA:

PRINTED BY C. B. LEWIS, AT THE BAPTIST MISSION.

1872.

# PREFACE.

---

The present edition of the 3rd Káṇḍa of the Taittiríya Saṁhitá was originally commenced by Paṇḍit Rámanaráyaṇa Vidyáratna, whose untimely death stopped the work, when it had reached the 8th Anuváka of the 2nd Prapáṭhaka. From that point the work has been continued by the present editor. His plan has been the same as that followed by his predecessors, the only novel feature being a larger employment, in the Commentary, of punctuation to facilitate its comprehension.

For the *Text*, the MSS. used have been all the same as those used in the preparation of the editions of the preceding Káṇḍas.

For the Commentary, the MSS. used have been the following:—

B.—copied for the Asiatic Society from a codex in the Benares College Library.

C.—purchased by F. E. Hall, Esq. for the Asiatic Society. This has been made the basis of the present edition.

E.—belonging to the Asiatic Society. This is full of errors and omissions. The readings again frequently differ from those of the other MSS. This MS. is entirely free, however, from errors that occur in B., C., and J., which are all traceable to the same source, for the very same errors and omissions are found in all. MS. E., therefore, has been of use in the correction of those errors.

J. A very accurate MS. procured by the editor from a private gentleman of Benares.

The MSS. named here B., C., &c., retain the names given them by the preceding editors. J, is, of course, a new name.

The delay that has occurred in bringing out the work is owing partly to the interval of time that elapsed before the editor could obtain the MSS. necessary to enable him to take the work in hand, and partly to the want of punctuality, for a time, on the part of the Press where the work is being printed. The editor, therefore, hopes the public will not blame him for the delay.

M. C. N.

# INDEX

TO THE

## THIRD VOLUME OF THE TAITTIRÍYA-SAÑHITÁ.

## THIRD KÁNDA—AUPÁNUVÁKYA.

## PRAPÁTHAKAS.—I—XI.

---

### PRAPÁTHAKA I.

## PRAPAṬHAKA II.



---

## PRAPAṬHAKA III.



---

## PRAPA'ṬHAKA IV.



---

## PRAPA'ṬHAKA V.



---

# शुद्धिपत्रम् *

| अशुद्धम्। | शुद्धम्। | पृष्ठा। | पङ्क्तिः। |
|---|---|---|---|
| चिद्धिते | चिद्धि ते | २९६ | १४ |
| गिरिस्पिर्शन | गिरिस्पर्शिन | ३०१ | १० |
| पाषाणमयद्वारं (एवमेव E. पुस्तकं विना सर्व्वत्र पाठः) | पाषाणमयद्वार- | ३०१ | २० |
| अज्ञत्वा | अज्ञात्वा | ३११ | १३ |
| वस्त्र | वस्त्रं | ३१८ | ६ |
| पञ्चदशेषु | पञ्चदशसु | ३२३ | १८ |
| दत | दूत | ३२६ | ५ |
| यत्त | यत्ते | ३२६ | ६ |
| घातिनो | घातिनः | ३२७ | ७ |
| (अस्मान्) (एवमेव E. पुस्तकं विना सर्व्वत्र पाठः) | (अस्मान् प्रति) | ३२८ | १२ |
| भ्रंटव्या | भ्रंाटव्या | ३२८ | १७ |
| 'तरतः' | 'तरत' | ३३२ | १५ |
| 'सभरः' | 'समभरः' | ३३३ | २ |
| 'लोके' | 'लोकेषु' | ३३३ | १० |
| सूर्य्येया | सूर्य्य या | ३३६ | ६ |
| यजमानो | जमानो | ३३६ | १८ |
| लेके | लोके | ३४१ | ७ |
| (प्रेरयतुः) | (प्रेरयतु) | ३४३ | १७ |
| अरिखद्रा | अकखिद्रा | ३५१ | ६ |
| सहस्र | सहस्र | ३६३ | ७ |
| गोपाः(८)" | गोपाः(८)" इति | ३६८ | २ |
| ऋगत्रयम् | ऋकत्रयम् | ३६९ | २२ |

* या या च (यन्त्रेक्षण-दोषादिसङ्कुटिता) भाष्यस्था अशुद्धिः, शुद्धिश्च पाठमात्रादेव विना आयासम् प्रतीयते, न सा सा अत्र प्रदर्शिता। यथा, २९८ पृष्ठायाम् १२ पङ्क्तौ प्रियस्तोचे इत्यशुद्धम् प्रियस्तोचो इति शुद्धम्। ३०० पृष्ठायाम् ५ पङ्क्तौ 'रुद्रः' इत्यशुद्धम् रुद्रः इति शुद्धम्। एवमन्यदपि।

# शुद्धिपत्रम्* ।

| अशुद्धम् । | शुद्धम् । | पृष्ठा । | पङ्क्तिः । |
|---|---|---|---|
| उपयाम | उपयाम— | १९५ | १५ |
| 'त्वाम्' | त्वाम् | १९९ | १ |
| कुर्व्वन्ती | कुर्व्वती | २०३ | ८ |
| वैना | वैनौ | २०४ | ६ |
| पायेति(१४) | पायेति | २०५ | १८ |
| दयनीया | दयनीया | २०७ | १७ |
| षम्याल्ला | षण्मन्त्रा | २१२ | १६ |
| विगर्भं | वि गर्भं | २१८ | १ |
| गभ | गर्भम् | २१८ | ३ |
| अपिहिता | अपिहिताम् | २१९ | ९ |
| दाघयोः | दघायोः | २२३ | ५ |
| सुकृती ह्वे | सुकृता ऊवे | २२४ | १० |
| भूया स्म | भूयास्म | २३० | ६ |
| मुक्थम् | मुक्थ्यम् (एवं परत्र) | २३० | २१ |
| आवर्त्तन | आ वर्त्तन | २३४ | ११ |
| किक्किटा (पु०द्वये एवं पाठः) | किक्किटा (एवं परत्र) | २४१ | २ |
| तस्यवैषा | तस्यैवैषा | २४७ | १३ |
| स्वगाकृत्या | स्वगाकृत्यै | २४७ | १५ |
| देवमाह | एवमाह | २५१ | १९ |
| पातु (परस्थितम्) | पान्तु | २६२ | ९ |
| दूरे हेति | दूरेहेति | २६३ | ३ |
| ओषधि | ओषधि | २६३ | ६ |
| राष्ट्रावा | राष्ट्रैव | २६८ | ७ |

* या या च (यन्त्रेक्षणदोषाद्धिरुद्धटिता) अशुद्धिः शुद्धिश्च पाठमात्रादेव प्रतीयते, सा सा अत्र न प्रदर्शिता। यथा १९६ पत्रे ९ पङ्क्तौ 'गृह्णीतव्याः' इत्यशुद्धम्, 'ग्रहीतव्याः' इति शुद्धम्। १९६ पत्रे १० पङ्क्तौ 'प्रथम' इत्यशुद्धम्, 'प्रथमम्' इति शुद्धम्। एवं अन्यदपि।

श्रीगणेशाय नमः ।



# अथ तैत्तिरीयसंहिताभाष्ये

## तृतीयकाण्डे प्रथमप्रपाठके

### प्रथमोऽनुवाकः ।



॥ हरिः ॐ ॥

प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत स सर्पानसृजत सोऽकामयत प्रजाः सृजेयेति स द्वितीयमपप्यत स वयांऽस्यसृजत सोऽकामयत प्रजाः सृजेयेति स तृतीयमतप्यत स एतं दीक्षितवादमपश्यत् तमवदत् ततो वै स प्रजा असृजत यत् तपस्तप्त्वा दीक्षितवादं वदति प्रजा एव तद्यजमानः ॥ १ ॥

सृजते यद्वै दीक्षितोऽमेध्यं पश्यत्यपास्माद्दीक्षा क्रामति नीलमस्य हरो व्येत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषांऽ श्रेष्ठो दीक्षे मा माहासीरित्याह नास्माद्दीक्षापक्रामति नास्य नीलं न हरो व्येति यद्वै दीक्षि-

तमभिवर्षति दिव्या आपोऽशान्ता ओजो बलं दीक्षां ॥
॥ २ ॥

तपोऽस्य निर्घ्नन्त्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्याहैतदेव सर्वमात्मन्धत्ते नास्यौजो बलं न दीक्षां न तपो निर्घ्नन्त्यग्निर्वै दीक्षितस्य देवता सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तोः ॥ ३ ॥

भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्त्वित्याह ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वारभते स एनꣳ सम्पारयत्येदमगन्म देवयजनं पृथिव्या इत्याह देवयजनꣳ ह्येष पृथिव्या आ ह गच्छति यो यजते विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणा ऋक्सामाभ्यां यजुषा सन्तरन्त इत्याह ऋक्सामाभ्याꣳ ह्येष यजुषा सन्तरति यो यजते रायस्पोषेण समिषा मदेमेत्याहाशिषमेवैतामाशास्ते ॥ ४ ॥

यजमानो दीक्षाꣳ हन्तोर्ब्राह्मणाश्चतुर्विꣳशतिश्च ॥१॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ * ॥

# श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ १ ॥
पशवश्चेष्टयः काम्या विधिशेषस्तथैष्टिकः।
प्रोक्ताः काण्डे द्वितीयेऽथ सोमशेषोऽत्र वर्ण्यते॥२॥

एतच्च तृतीयकाण्डमौपानुवाक्यमिति *काण्डानुक्रमण्यामुक्तं। अनुवाकानां समीपमुपानुवाकं, तत्रान्वेतुं योग्यानामर्थानां प्रतिपादकत्वादिदं काण्डमौपानुवाक्यं। यद्यप्येतत्सर्वमनारभ्याम्नायते,† तथापि‡ तेन तेन प्रमाणेन तत्र तत्रानुवाकेष्वन्वय उत्प्रेक्षणीयः। सोमप्रकरणाम्नातेषु तेष्वन्वयं तत्र तत्रैवोदाहृत्य प्रदर्शयिष्यामः। तदयमर्थः कर्मणि उच्यमानो मन्त्रो वाकः, तद्व्याख्यानरूपं ब्राह्मणमनुवाकः§। तत्रैकैकं मन्त्रमाम्नाय तस्य तस्य समीपे पठितमुपानुवाक्यं। तत्सम्बन्धि काण्डमौपानुवाक्यमुच्यते। अत्र|| दीक्षायाः प्रथमभावित्वात् दीक्षितेन वक्तव्या मन्त्रास्तद्विधयश्चास्य प्रथमप्रपाठकस्य प्रथमानुवाके प्रतिपाद्यन्ते। तत्र दीक्षितवादं विधित्सुः प्रस्तौति, "प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत स सर्पानसृजत सोऽकामयत प्रजाः सृजेयेति स द्वितीयमतप्यत स वयाꣳस्यसृजत सोऽकामयत प्रजाः सृजेयेति स तृतीयमतप्यत स एतं

* काण्डेत्यादेः स्थाने सम्प्रदायविद आहुरिति सो० २ पु०पाठः।

† आम्नायत इत्यत्राधीतमिति सो० २ पु०पाठः।

‡ तेन तेनेत्यत्र वाक्यादिप्रमा० इति सो० २ पु० पाठः।

§ यद्वा मन्त्रमनूच्यमानं तद्व्याख्यानरूपं ब्राह्मणं० इति सो०२पु०पाठः।

|| सोमाङ्गेषु दीक्षा० इति सो० २ पु० पाठः।

दीक्षितवादमपश्यत् तमवदत् ततो वै स प्रजा असृजत” इति। पुरा प्रजापतिः प्रजासृष्टिं कामयमानो नियमविशेषरूपं तप एव द्विवारमनुष्ठितवान्, न तु दीक्षितवादं। अतस्तद्विकले तपसि नीचानां सर्पाणां पक्षिणामेव च सृष्टिमकरोत् न तूत्तमानां मनुष्यादीनां। अग्निष्टोमोऽत्र प्रजापतेस्तपः, ‘अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत ता अग्निष्टोमेनैवापर्यगृह्णात्’ इति सप्तमकाण्डे वक्ष्यमाणत्वात्। तस्य च तपसः तृतीये पर्याये दीक्षितवादवैकल्याभावात् मनुष्याद्युत्तमसृष्टिसाधनत्वं सम्पन्नं। *अथ नियमविशेषरूपतपोयुक्तस्य दीक्षितस्य दीक्षितवादं विधत्ते, “यत् तपस्तप्त्वा दीक्षितवादं वदति प्रजा एव तद्यजमानः सृजते” इति। तपःशब्देन स्नानादिनियमो विधीयते। ‘अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन्नप्सु स्नाति साक्षादेव दीक्षातपसी अवरुन्धे’ इत्याम्नातत्वात्। स्नानादीत्यादिशब्देन दानमनशनं वैदिकमन्त्रपाठश्चेत्येतत् त्रयं विवक्षितं। ‘एतत् खलु वाव तप इत्याहुर्यत् स्वं ददातीति, तपो नानशनात् परं यद्धि परं तपस्तद्दुर्धर्षमिति, स्वाध्यायमधीते तप एव तत् तप्यते तपो हि स्वाध्यायः’ इति वचनानां तत्राम्नातत्वात्। शाखान्तरे च ह्यहं नाश्नातीति दीक्षितस्यानशनं तपो विहितं। ईदृशं तपस्तप्त्वा तन्नियमं स्वीकृत्य दीक्षितवादं वदेत्। दीक्षितेन पठितव्यो मन्त्रो दीक्षितवादः, तत्पाठेन प्रजाः सृजते। तत्रैकमन्त्रमुत्पाद्य तत्पाठं नैमित्तिकत्वेन विधत्ते “यद्वै दीक्षितोऽमेध्यं पश्यत्यपास्माद्दीक्षा क्रामति नीलमस्य

---

* अथ तपःपूर्वं दीक्षितवादमिति से० २ पु० पाठः।

'ह्वरो व्येत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा माहासीरित्याह नास्माद्दीक्षापक्रामति नास्य नीलं न ह्वरो व्येति" इति। अमेध्यदर्शनेन दीक्षाया अपक्रमणं नाम दीक्षायां फलराहित्यं। किञ्चामेध्यं दृष्टवतोऽस्य नीलं भवति कृष्णं पापमित्यर्थः। किञ्च ह्वरो व्येति तेजो विगतं भवति। जुगुप्सया शरीरस्य विक्रियमाणत्वात् शक्तिरपगच्छतीत्यर्थः। अबद्धमित्यादिको मन्त्रः। यदेतन्मदीयं मनः तदेतदबद्धमनियतं। अत एव यद्धि मनसा ध्यायति तद्वाचा वदति सङ्कल्पयति। चक्षुश्च मदीयं दरिद्रं कृपणं। अतः समीचीनमेव प्रकाशयामीत्येतादृशं प्रभुत्वं तस्य नास्ति। अत्र चोभयत्र निमित्तं छन्दोगा उद्गीथविद्यायां देवासुरसंग्रामाख्यया समामनन्ति। 'अथ ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयं पश्यति दर्शनीयञ्चादर्शनीयञ्च पाप्मना ह्येतद्विद्धम्' इति [छा० १।२।४]। अयमेवार्थो वाजसनेयिभिरप्युद्गीथब्राह्मणे प्रपञ्चितः। अतः अवशयोर्मनश्चक्षुषोर्दोषो हे दीक्षे त्वया न गणनीयः। दर्शनहेतुभूतानां ज्योतिषां मध्ये श्रेष्ठोऽयं सूर्यः, स एव चक्षुर्दोषं समाधास्यतीत्यभिप्रायः। तन्मात्रप्रमादकारिणं मां हे दीक्षे माहासीर्मा परित्यजेति मन्त्रार्थः। एतस्य मन्त्रस्य पाठेन दीक्षाप्यस्मान्नापक्रामति नीलञ्चास्य न भविष्यति ह्वरश्च न व्येति। वृष्टिक्लेदनं निमित्तीकृत्य मन्त्रान्तरमुत्पाद्य विनियुङ्क्ते। "यद्वै दीक्षितमभिवर्षति दिव्या आपोऽशान्ता ओजो बलं दीक्षां तपोऽस्य निघ्नन्त्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्याहैतदेव सर्व-

मात्मन्धत्त नास्यौजो बलं न दीक्षां न तपो निघ्नन्ति" इति। दिव्या अन्तरिक्षे वर्त्तमानाः भूमिस्पर्शरहिता या आपस्ता अशान्ताः प्रत्यवायहेतवः। अतएव स्मर्यते, 'न वर्षधारास्वाचामेत्' इति। ताश्च दिव्या आपः ओजोबलदीक्षातपांसि नाशयन्ति। रेतःपरिपाकरूपशरीरबलहेतुरष्टमो धातुरोजः। उन्दतीरित्यादिको मन्त्रः। हे आपः, यूयं उन्दतीः संक्लेदयन्त्यः मयि शारीरबलं स्थापयत। तत्कारणीभूतमोजोऽपि स्थापयत। पुनरपीन्द्रियगतं बलं स्थापयत। मदीयां दीक्षां मा निर्वधिष्ट मा विनाशयत। तपो ऽपि मदीयं मा विनाशयतेति मन्त्रार्थः। अत्र सूत्रकारेण 'स वाग्यतस्तपस्तप्यमान आस्ते' इत्युक्त्वा बहुविधनियमानुपन्यस्य तदुक्तं 'अबद्धं मन इत्यमेध्यं दृष्ट्वा जपत्युन्दतीर्बलं धत्तेत्यववृष्टः' इति। अध्वर्युमन्त्रकाण्डे भद्रादभि श्रेयः' एदमगन्म देवयजनमित्येतौ मन्त्रावाम्नातौ। ब्राह्मणे तु 'अच्छिन्नं तन्तुं पृथिव्याः' इत्येतं पूर्वमन्त्रं व्याख्याय भद्रादभीत्यादिकौ द्वावुपेक्षितौ, तयोर्याजमानत्वेन दीक्षितवादप्रसङ्गादुक्तौ उभावत्र व्याख्यायेते। एतेनाबद्धं मन इत्यादिकौ मन्त्रौ 'दैवी धियं मनामहे' इत्यनुवाके सङ्गताविति सूचितं भवति। भद्रादभीत्येष रथमारुह्य देवयजनमध्यवसितुं गमने विनियुक्तो मन्त्रः। एदमगन्मेति देवयजनाध्यवसाने, तयोराद्यं मन्त्रं व्याचष्टे "अग्निर्वै दीक्षितस्य देवता सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तोर्भद्रादभिश्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्त्वित्याह ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वारभते स एनꣳ सम्पारयति" इति। यदा दीक्षितो गृहात् प्रयाणं करोति

तदा तत्स्वामी वह्निः कोपेन तिरोभूत इव भवति। तेन स्वामिरहितं दीक्षितं रक्षांसि मार्गेऽन्तरा भूत्वा हन्तुमीश्वरं समर्था भवन्ति। तत्परिहाराय भद्रादभीत्यादिमन्त्रं पठेत्। हे रथ भद्रात् मदीयात् गृहात् श्रेयोऽत्यन्तप्रशस्तं देवयजनस्थानं प्रति याहि, तव पुरतो बृहस्पतिर्गन्ताऽस्त्विति मन्त्रार्थः। देवानां मध्ये बृहस्पतेर्ब्राह्मणत्वाद्रक्षांसि शप्तुं सामर्थ्यमस्ति। तादृशं बृहस्पतिं यजमानोऽनुगच्छति, स च बृहस्पतिः सम्यक् पारं नयति। द्वितीयमन्त्रस्य प्रथमभागार्थः प्रसिद्ध इति दर्शयति "एदमगन्म देवयजनं पृथिव्या इत्याह देवयजनꣳ ह्येष पृथिव्या आ ह गच्छति यो यजते" इति। पृथिव्याः सम्बन्धि यत् देवयजनं तदिदमागन्म आगताः स्म इति तस्यार्थः। स च प्रत्यक्षेण दृश्यमानत्वात् प्रसिद्धः। द्वितीयभागे देवशब्देन ब्राह्मणा ऋत्विग्भूता विवक्षिता इत्येतद्दर्शयति "विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणाः" इति। तृतीयभागे यागं कुर्वतो वेदत्रयापेक्षा प्रसिद्धेति दर्शयति "ऋक्सामाभ्यां यजुषा सन्तरन्त इत्याह ऋक्सामाभ्याꣳ ह्येष यजुषा सन्तरति यो यजते" इति। सम्यग्यागस्य पारं प्राप्नोति। चतुर्थभागे धनपुष्ट्याऽन्नेन च सम्भूय हृष्टत्वप्रार्थनमाशीरित्येतद्दर्शयति "रायस्पोषेण समिषा मदेमेत्याहाशिषमेवैतामाशास्ते" इति। अस्मिन् काण्डे यदिदमनारभ्याधीतं तस्य सर्वस्य सामान्येन प्रकृतौ सम्बन्धः, विशेषतस्तु अबद्धमित्यादेरनुवाकसम्बन्धो दर्शितः। अमेध्यदर्शनवर्षणमन्त्रयोस्त्वावृत्त्यभावे दैवीं धियमित्यस्मिन्नेवानुवाके विचारितः।

अत्र मीमांसा। तृतीयाध्यायस्य षष्ठपादे चिन्तितम्। अ०१।

प्रकृतौ विकृतौ वा स्याद्यस्य पर्णत्यसौ विधिः।
प्रकृतावेव वा तुल्याद्वचनादुभयोरसौ॥
जुह्वमाश्रित्य पर्णत्वविधेः प्रकृतिमात्रगः।
चोदकेनोभयप्राप्तेर्विकृतौ विधिनात्र किं॥

अनारभ्य श्रूयते, 'यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति' इति। तत्राव्यभिचरितक्रतुसम्बन्धवतीं जुह्वमाश्रित्य तद्धेतुः पर्णत्वचो वाक्येन विधीयते। या जुहूः सा पर्णमयीति वाक्यं सर्वप्रकृतिविकृत्योस्तुल्यमेव प्रवर्त्तते, उभयत्राश्रयभूताया जुह्वाः सद्भावात्। तस्मात् प्रकृतिविकृत्योरुभयोरप्ययं विधिरिति प्राप्ते ब्रूमः। किमयं विधिर्विकृतौ चोदकात् पूर्वं निविशते पश्चाद्वा। नाद्यः, आश्रयभूताया जुह्वाश्चोदकमन्तरेणासम्भवात्। द्वितीयेऽपि पर्णत्वमपि जुह्वा सहैव चोदकेनातिदिश्यते। तत्र पुनर्विधेर्वैयर्थ्यादयं विधिः प्रकृतिमात्रगः। एवं यस्य खादिरः स्रुवो भवतीत्याद्युदाहरणीयं।

तृतीयाध्यायस्य अष्टमपादे चिन्तितम्। अधि०४।

नाश्नाति द्व्यहमित्येतत् तपः कस्य तयोर्द्वयोः।
दुःखत्वाद्भोक्तृसंस्काराद्ध्वर्योर्युज्यते तपः॥
फलान्तराय पापस्य नाशकत्वेन संस्कृतिः।
लिङ्गात्तपः स्वामिगामि संस्कारान्तरवत्त्वतः॥

ज्योतिष्टोमे द्व्यहं नाश्नाति त्र्यहं नाश्नातीत्यादिनोक्तं तपोऽध्वर्योर्युक्तं, तस्य दुःखात्मकत्वेन परिक्रीतपुरुषैः कर्तुमुचितत्वात्।

दुःखत्वादेव फलभोक्तृसंस्कारत्वाभावाद्यजमानस्य न युक्तमिति चेत्। मैवं। भाविनः सुखरूपस्य फलस्य प्रतिबन्धकं दुःखजनकं यत् पापं तस्य नाशकत्वेन दुःखरूपस्यापि तपसः स्वामिसंस्कारत्वसम्भवात्। अस्मिन्नर्थे वाक्यशेषगतं लिङ्गं कल्पसूत्रकारेणैवोदाहृतं। 'यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति यदास्मिन्नन्तर्न किञ्चन भवत्यथ मेध्यो भवति यदास्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति यदा वास्य त्वचाऽस्थि सन्धीयतेऽथ मेध्यो भवति पीवा दीक्षते कृशो यजते यदस्याङ्गानां मीयते जुहोत्येव तदिति विज्ञायते' इति। नहि दुःखरूपं तपो विना दुःखप्रदं पापं नश्यति। यथा लोके पाटनमन्तरेण विषमव्रणानां नोपशान्तिस्तद्वत्। तस्माद्वपनादिसंस्कारवत् तपोऽपि यजमानस्यैव ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूताद्यो वै सोमꣳ राजानꣳ साम्राज्यं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यं छन्दाꣳसि खलु वै सोमस्य राज्ञः

साम्राज्यो लोकः पुरस्तात् सोमस्य क्रयादेवमभिमन्त्रयेत साम्राज्यमेव ॥ १ ॥

एनं लोकं गमयित्वा क्रीणाति गच्छति स्वानाᳲ साम्राज्यं यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रतितिष्ठतीति प्रजापतौ मनसीति ब्रूयात् त्रिरवजिघ्रेत् प्रजापतौ त्वा मनसि जुहोमीत्येषा वै तानूनप्त्रस्य प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति यः ॥ २ ॥

वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयेदेषा वा अध्वर्योः प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति यदभिक्रम्य जुहुयात् प्रतिष्ठाया इयात् तस्मात् समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै यो वा अध्वर्योः स्वं वेद स्ववानेव भवति स्रुग्वा अस्य स्वं वायव्यमस्य ॥ ३ ॥

स्वं चमसोऽस्य स्वं यद्वायव्यं वा चमसं वानन्वारभ्याश्रावयेत् स्वादियात् तस्मादन्वारभ्याश्राव्यᳲ स्वादेव नैति यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठितः स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानोऽप्रतिष्ठितोऽध्वर्युर्वायव्यं वै

सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोमः स्तोमस्य स्तोम उक्थानां ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात् प्रत्येव सोमꣳ स्थापयति प्रतिस्तोमं प्रत्युक्थानि प्रतियजमानस्तिष्ठति प्रत्यध्वर्युः ॥ ४ ॥

एव तिष्ठति यो वायव्यमस्य ग्रहं वैकान्नविꣳशतिश्च ॥ २ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥*॥

आद्ये सङ्कीर्तितो मन्त्रो वृष्टौ चामेध्यदर्शने ।

द्वितीयानुवाके सोमोपस्थानमन्त्रास्त्वार उत्पाद्यन्ते । "एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतात्" इति । हे देवतात्मक सोम राजन् एष पुरतो दृश्यमानः क्रेतव्यो वल्लीरूपः ते त्वदीयभागः गायत्रः प्रातःसवने गायत्रीच्छन्दसा संस्कार्य इत्येतादृक् यजमानरूपस्य मे गायत्रीदेवता सोमाय ब्रूतात् । एवं त्रैष्टुभो माध्यन्दिने सवने त्रिष्टुप्छन्दसा संस्कार्यः । अस्मिन्नेष ते इति मन्त्रो नानुषज्यते । भाग इति मे सोमाय ब्रूतादित्ययमुत्तरांशोऽनुषज्यते । जागतस्तृतीयसवने जगतीच्छन्दसा संस्कार्यः । अत्रैष ते इत्ययं पूर्वांश एवानुषज्यते । भाग इति मे सोमाय ब्रूतात् इत्ययमुत्तरांशोऽनुषज्यते जागतस्तृतीये । छन्दोभि-

गायत्रीत्रिष्टुप्जगतीभिरक्षरमङ्ख्यया मीयन्त उपमीयन्त इति चतु-र्विंशश्चतुश्चत्वारिंशोऽष्टाचत्वारिंशाख्याः स्तोमास्त्रयश्छन्दोमाः। तेषां साम्राज्यं द्वादशाहादिषु उत्तरक्रतुषु विद्यते। तत् साम्राज्यं गच्छत्वे-तत् यजमानस्य मे वचनं। तेन तेन स्तोमेन आराध्या देवता सोमाय राज्ञे ब्रूतात्। अत्र चतुर्विंशाख्यस्तोमरूपस्य छन्दोमस्य विष्टुतिः सामब्राह्मणे इत्थं समाम्नाता। 'अष्टाभ्यो हिङ्करोति स तिसृभिः स चतसृभिः स एकया। अष्टाभ्यो हिङ्करोति स१ स३ स चतसृभिः। अष्टाभ्यो हिङ्करोति *स४ स१ स३भिरित्येषा वै प्रतिष्ठा चतु-र्विंशस्य विष्टुतिरिति। अस्यायमर्थः। सामाधारभूतस्य तृचस्य प्रथम-पर्याये प्रथमामृचं त्रिर्गायेत्। द्वितीयां चतुर्गायेत्। तृतीयां सकृ-द्गायेत्। द्वितीये पर्याये प्रथमां सकृद्गायेत्। द्वितीयां त्रिर्गायेत्। तृतीयां चतुर्गायेत्। तृतीये पर्याये प्रथमां चतुर्गायेत्। द्वितीयां सकृद्गायेत्। तृतीयां त्रिर्गायेत्। सेयं चतुर्विंशस्तोमसम्बन्धिनी वि-शिष्टा स्तुतिः। अथ चतुश्चत्वारिंशस्तोम एवमाम्नायते। पञ्चदशभ्यो हिङ्करोति स३ स११ स१। चतुर्दशभ्यो हिङ्करोति स१ स३ स१०। पञ्चदशभ्यो हिङ्करोति स११ स१ स३भिरित्येषा वै प्रतिष्ठिता चतुश्चत्वारिंशस्य विष्टुतिरिति। प्रथमपर्याये प्रथमां त्रिर्गायेत्। द्वितीयामेकादशकृत्वो गायेत्। तृतीयां सकृद्गायेत्। द्वितीयपर्याये प्रथमां सकृद्गायेत्। द्वितीयां त्रिर्गायेत्। तृतीयां दशकृत्वो गायेत्। तृतीये पर्याये प्रथमामेकादशकृत्वो गायेत्। द्वितीयां सकृद्गायेत्। तृतीयां त्रिर्गायेत्। सेयं चतुश्चत्वारिंशस्तोमाख्यस्य छन्दोमस्य विष्टु-तिः। अथाष्टाचत्वारिंशस्तोमस्य विष्टुतिरेवमाम्नायते। षोडशभ्यो हि-

* स३ स१ स४ इति सो०२।३ पु० पाठः।

ङ्करोति स३ स१२ स१। षोडशभ्यो हिङ्करोति स१ स३ स१२। षोडशभ्यो हिङ्करोति स१२ स१ स३भिरित्येषा वै प्रतिष्ठिताऽष्टाचत्वारिंशस्य विष्टुतिरिति। प्रथमे पर्याये प्रथमां त्रिर्गायेत्। मध्यमां द्वादशकृत्वो गायेत्। उत्तमां सकृद्गायेत्। द्वितीये पर्याये प्रथमां सकृद्गायेत्। मध्यमां त्रिः। उत्तमां द्वादशकृत्वः। तृतीये पर्याये प्रथमां द्वादशकृत्वो गायेत्। द्वितीयां सकृद्गायेत्। तृतीयां त्रिर्गायेत्। सेयमष्टाचत्वारिंशस्तोमाख्यस्य छन्दोमस्य विष्टुतिरिति। द्वादशाहक्रतोरष्टममहश्चतुर्विंशस्तोमसाध्यं। नवममहश्चतुश्चत्वारिंशस्तोमसाध्यं। दशममहरष्टाचत्वारिंशस्तोमसाध्यं। तस्मात् छन्दोमानां साम्राज्यं द्वादशाहात् उत्तरक्रतुषु प्राप्यते। एष ते गायत्र इत्यादींश्चतुरो मन्त्रान् विनियोक्तुं प्रस्तौति। “यो वै सोमꣳ राजानꣳ साम्राज्यं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यं छन्दाꣳसि खलु वै सोमस्य राज्ञः साम्राज्यो लोकः” इति। यजमानः सोमदेवतारूपं राजानं साम्राज्यरूपं लोकं प्राप्य पश्चाद्वल्लीरूपं सोमं क्रीणाति। स स्वानां मध्ये साम्राज्यं गच्छति गायत्रीत्रिष्टुप्जगतीरूपाणि छन्दांसि तैरुपलक्षितश्छन्दोमाश्च सोमस्य राज्ञः साम्राज्ययुक्तो लोक इत्युच्यते। अथ चतुरो मन्त्रान् सोमाभिमन्त्रणे विनियुङ्क्ते। “पुरस्तात् सोमस्य क्रयादेवमभिमन्त्रयेत साम्राज्यमेवैनं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यं” इति। एवमिति. एष ते गायत्र इत्यादिभिश्चतुर्भिरित्यर्थः। प्राकरणिकानुवाकसम्बन्धस्तु पुरस्तात सोमस्य क्रयादेव स्पष्टमवगम्यते। सोमं ते क्रीणामीति

मन्त्रेण सोमक्रय आरब्धः। तत्पूर्वमंशुना ते अंशुरित्यनुवाकस्यावसाने प्रजास्त्वामनुप्राणन्त्वित्येतदूर्ध्वमेष ते गायत्र इत्यादयश्चत्वारो मन्त्रा द्रष्टव्याः। पूर्वोक्तयोरबद्धं मनः, उन्दतीर्बलमित्येतयोर्मन्त्रयोर्यद्यपीदृशं स्पष्टं वचनं नास्ति तथापि दीक्षितस्य वाद इति वाक्येन प्रकरणप्रसिद्धं दीक्षितमनूद्य वादविधानात् दीक्षितत्वसिद्धेरूर्ध्वभावित्वं गम्यते। दीक्षितत्वं आकूत्यै प्रयुजेऽग्नये स्वाहेत्यनुवाके सम्पन्नं। तदीयब्राह्मणे दीक्षितत्वावेदनस्याम्नातत्वात्। 'स्वाहा यज्ञं वातादारभ इत्याहायं वाव यः पवते स यज्ञस्तमेव साक्षादारभते मुष्टीकरोति वाचं यच्छति यज्ञस्य धृत्या अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह' (ब्रा०) इति। तस्मात् यज्ञं वातादारभ इत्येतस्मादुपरि अबद्धं मन उन्दतीर्बलमित्येतौ द्रष्टव्यौ। एवमुत्तरत्रापि सर्वत्रैषानुवाक्यं योजनीयं। अथ तानूनप्त्राख्यावघ्राणं विधातुं प्रस्तौति। "यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रतितिष्ठतीति प्रजापतौ मनसीति ब्रूयात्" इति। 'तानूनप्त्रे त्वा गृह्णामि' इत्यादिभिर्मन्त्रैश्चमसे यदाज्यं गृह्यते तत्तानूनप्त्रं तस्य प्रतिष्ठा न ज्ञायते। सोमरसस्य तु वह्नौ हुतत्वादृत्विग्भिः पीतत्वाच्चास्ति प्रतिष्ठितत्वं। तानूनप्त्रे तु तदुभयं नास्तीति ब्रह्मवादिभिः पृष्टो बुद्धिमानुत्तरं ब्रूयात्। मनसा प्रजापतौ स्थापनादस्ति प्रतिष्ठेति। इदानीं मन्त्रेणावघ्राणं विधत्ते। "त्रिरवजिघ्रेत् प्रजापतौ त्वा मनसि जुहोमीत्येषा वै तानूनप्त्रस्य प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति" इति। प्रजापतावित्यादिर्मन्त्रः। हे तानूनप्त्र त्वां प्रजापतौ जुहोमीत्येवं

मनसि स्मरामीति शेषः। अयञ्च मन्त्रोऽग्नेरातिथ्यमसीत्यनुवाकस्यान्ते द्रष्टव्यः। ते एते पूर्वोक्तमन्त्रा विधयश्च याजमानाः। इत ऊर्द्धं त्वाध्वर्यवाः। तत्राश्रावणं विधत्ते। "यो वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति यतो मन्ये तानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयेदेषा वा अध्वर्योः प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति" इति। आश्रावणमारभ्य होमपर्यन्तमेकत्रावस्थानमध्वर्योः प्रतिष्ठा। आहवनीयसमीपादिषु होमदेशेषु मध्ये यस्मात् देशादभिक्रामणमकृत्वा यं होमं होष्यामीति मन्ये तत्तद्धोमार्थं तस्मिन्नेव देशे तिष्ठन्नाश्रावयेत्। आश्रावणदेशादन्यत्र गत्वा होमं निन्दति। "यदभिक्रम्य जुहुयात् प्रतिष्ठाया इयात् तस्मात् समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै" इति। इयात् प्रच्यवेत। समानत्र समानदेशे यत्राश्रावणं तत्रैवेत्यर्थः। सोऽयं विधिः सर्वाश्रावणसाधारणत्वात् सर्वत्रान्वेति। प्रयाजेषु तु अभिक्रामं जुहोतीति वाचनिकमभिक्रमणं। आश्रावणकाले होमसाधनस्य हस्ते धारणं विधत्ते "यो वा अध्वर्योः स्वं वेद स्ववानेव भवति। स्रुग्वा अस्य स्वं वायव्यमस्य स्वञ्चमसोऽस्य स्वं यद्वायव्यं वा चमसं वाऽनन्वारभ्याश्रावयेत् स्वादियात् तस्मादन्वारभ्याश्रव्यᳬ स्वादेव नैति" इति। स्रुक् जुह्वादि ऐन्द्रं। वायवादि सोमरसग्रहणाधारभूतं पात्रं वायव्यं। वायुना वरस्य वृतत्वात्। मद्देवत्यान्येव वः पात्राण्युच्यन्त इति। तस्मात् नानादेवत्यानि सन्ति। वायव्यान्युच्यन्त इत्याम्नातः सोमरसोन्नयनपात्रविशेषश्चमसः। यद्यपि स्रुगप्यत्रोपन्यस्ता तथापि सोमब्राह्मणशेषत्वात् वायव्यचमसयोरेवान्वारम्भणं धारणमत्र विधीयते। तेन स्रुचां धारणमप्युपलक्ष्यत इति द्रष्ट-

व्यम्। अन्वारभ्य हस्ते गृहीत्वेत्यर्थः। अथ प्रातःसवनादिस्तोत्राणां कालविशिष्टमुपकरणं विधत्ते। "यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठितः स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानोऽप्रतिष्ठितोऽध्वर्युर्वायव्यं वै सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोमः स्तोमस्य स्तोम उक्थानां ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात् प्रत्येव सोमꣳ स्थापयति प्रति स्तोमं प्रत्युक्थानि प्रतियजमानस्तिष्ठति प्रत्यध्वर्युः" इति। स्तोत्रस्योपाकरणप्रकारमापस्तम्बो दर्शयति। 'वायुर्हिङ्कर्तेति प्रस्तोत्रे बर्हिर्मुष्टिं प्रयच्छति सर्वेषु पवमानेष्वेवमुपाकरणोऽसर्ज्यसर्जि वागसर्ज्यैन्द्रꣳ सहोऽसर्ज्युपावर्तध्वमिति बर्हिर्भ्यामन्यानि पवमानेभ्यः स्तोत्राण्युपाकरोति' इति। ग्रहे चमसे वा सोमरसस्य प्रक्षेपः प्रतिष्ठापनं तदकरणे सोमोऽप्रतिष्ठितो भवति। सोमस्याप्रतिष्ठायां स्तोमस्य प्रगीतमन्त्रसाध्यायास्तुतेनाप्रतिष्ठा भवति। तदप्रतिष्ठायां स्तुतमनुशंसति इति विहितानामप्रगीतमन्त्रसाध्यस्तुतिरूपाणामुक्थशब्दाभिधेयानां शस्त्राणामप्रतिष्ठा भवति तदप्रतिष्ठायां च यज्ञस्यासिद्धेर्यजमानोऽध्वर्युश्चेत्युभावप्रतिष्ठितौ भवतः। कथं तर्ह्युक्तपरम्पराया उत्तरोत्तरप्रतिष्ठा भवतीति तदुच्यते। यदि वायव्ये चमसे वा सोमः प्रतिष्ठितो भवति ततः स्तोत्रशस्त्रयजमानाध्वर्यूणां उत्तरोत्तरप्रतिष्ठा। तस्मात् वायव्यादूर्ध्वपात्रे सोमरसं गृहीत्वा वा चमसं सोमरसेन पूरयित्वा वा सूत्रोक्तप्रकारेण स्तोत्रमुपाकुर्यात्। आश्विनग्रहात् पूर्वभावि ह्यैन्द्रवायवादिग्रहेषु गृहीतेषु बहिष्पवमानस्य यदुपाकरणं तत्र चमसोन्नयनाभावात् ग्रहणमेवो-

पाकरणकालस्योपलक्षकं। तृतीयसवनपात्नीवतान्तेषु ग्रहेषु *हुतेषु चमसान् पूरयित्वा यज्ञायज्ञियस्तोत्रमुपाकरोति तत्र ग्रहग्रहणाभावात् चमसोन्नयनमेवोपाकरणकालोपलक्षणं। अत एवापस्तम्ब आह। 'होतृचमसमुख्यांश्चमसानुन्नयन् सर्वराजानमुन्नीय दशाभिः कलशौ मृशन्नुन्नर्त्ति यज्ञायज्ञियस्य स्तोत्रमुपाकरोति' इति। यदि तृतीयप्रपाठक एतद्वै सर्वमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोतीत्येष उपाकरणविधिः स्यात् तर्हि तदनुवादेनात्र कालविधिरस्तु। ग्रहचमसोन्नयनोर्ध्वकालभाविना स्तोत्रोपाकरणेन सोमस्तोमादिपरम्परायाः प्रतिष्ठा सम्पद्यते। सोमं प्रतिष्ठापयतीत्यन्वयः। स्तोत्रमुक्थानीत्यत्रापि तथान्वेतव्यं॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः॥०॥

---

यज्ञं वा एतत् सम्भरन्ति यत् सोमक्रयण्यै पदं यज्ञमुखꣳ हविर्धाने यर्हि हविर्धाने प्राची प्रवर्त्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्याद्यज्ञमुख एव यज्ञमनुसन्तनोति प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनाꣳसि प्रवर्त्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सोऽनुध्यायति स ईश्वरो रुद्रो भूत्वा॥ १॥

---

* हुतेष्वित्यत्र कृतेषु इति सो०२ पु० पाठः।

प्रजां पशून् यजमानस्य शमयितोर्यर्हि पशुमाप्रीत-मुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणꣳ हरेत् तेनैवैनं भागिनं करोति यजमानो वा आहवनीयो यजमानं वा एतद्विकर्षन्ते यदाहवनीयात् पशुश्रपणꣳ हरन्ति स वैव स्यान्निर्मन्थ्यं वा कुर्याद्यजमानस्य सात्मत्वाय यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येत् सैव ततः प्रायश्चित्तिर्ये पशुं विमथ्नीरन् यस्तान् काम-येतार्त्तिमार्च्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चा-ऽऽग्नीध्रे जुहुयान्नमोवृक्तिमेवैषां वृङ्क्ते ताजगार्त्तिमा-र्च्छन्ति ॥ २ ॥

भूत्वा ततः षड्विꣳशतिश्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपा-ठके तृतीयोऽनुवाकः ॥ * ॥

द्वितीये स्वामिनो मन्त्रास्त्वाध्वर्योर्विधयः श्रुताः।

अत्र तृतीये सोमक्रयणीपदाञ्जनादिविधयः श्रूयन्ते। तत्र षष्ठ-काण्डे यद्विहितं 'पत्न्युपानक्ति पत्नी हि सर्वस्य मित्रम्' इति तस्मिन् हविर्धानयोः रथाञ्जने पूर्वं संगृह्य स्थापितस्य सोमक्रयणीपदपांसोः साधनत्वं विधत्ते। "यज्ञं वा एतत् सम्भरन्ति यत् सोमक्रयण्यै पदं

यज्ञमुखꣳ हविर्धाने यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्ष-मुपाञ्ज्यात् यज्ञमुख एव यज्ञमनुसन्तनोति" इति। सोमक्रयण्याः षट् पदान्यनुनिष्क्रम्य सप्तमे पदे हुत्वा तेनाज्येनाक्तस्य पांसोर्यत् सम्भरणं कृतं तत् यज्ञस्यैव सम्भरणं कृतं, तस्य पांसोर्यज्ञोपकारित्वात्। ये तूभे हविषोर्धारके शकटे यज्ञमुखस्थानीये, प्रधानहविषः सोमस्य धारकत्वेन मुख्यत्वात्। एवं सति यदा गार्हपत्यसमीपस्थे ते उभे शकटे प्राङ्मुखे प्रवर्तयेयुः तदा तेन पदपांसुना घृताक्तेनाक्षस्य धुरमुपाञ्ज्यात् तथा सति हविर्धानात्मन्येव यज्ञमुखे पदपांसुरूपे यज्ञमनुसन्ततं कृतवान् भवति। अथ प्राचीनवंशस्य पश्चिमदेश-स्थितात् पुरातनगार्हपत्यादग्नीषोमीयपशुश्रपणार्थस्याग्नेः श्रपणदेशं प्रतिनयनं विधत्ते। "प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनाꣳसि प्रवर्तयन्त्यथवा अस्यैष धिष्णियो हीयते सोऽनुध्यायति स ईश्वरो रुद्रो भूत्वा प्रजां पशून् यजमानस्य शमयितोर्यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणꣳ हरेत् तेनैवैनं भागिनं करोति" इति। षष्ठकाण्डे यदाम्नातं 'आसोमन्ददत आ ग्राव्णा आ वायव्या-न्याद्रोणकलशमुत्पत्नीमानयन्त्यन्वनाꣳसि प्रवर्तयन्ति' इति। यद-पि सूत्रकारेणोक्तं। 'अयं नो अग्निर्वरिवः कृणोत्वित्यग्निप्रथमाः सोमप्रथमा वा प्राञ्चोऽभिप्रव्रजन्ति' इति। तत्र पूर्वपश्चिमदिगवस्थिते गार्हपत्ये स्थितोऽग्निः शालामुखीये पुरातनहवनीये प्रथमं नीतः अनन्तरं ततोऽपि प्राङ्मुखोद्धृत' तदिदमुच्यते प्राञ्चमग्निं प्रहरन्ति इति। पश्चिमदिगवस्थितायां पत्नीशालायामवस्थितां पत्नीमपि शालामुखीयं पुरातनाहवनीयं प्रत्युदानयन्ति प्रतीचीनगार्हपत्य-

समीपस्थितानि शकटान्यपि प्राग्देशेऽनुक्रमेण प्रवर्तितानि। यदै-तत्सर्वं सम्पद्यते तदानीमेवास्य पुरातनगार्हपत्यस्य धिष्णियः स्थान-विशेषो हीयते शून्यो भवति। स चाग्निः पुनः पुनः मनसि चिन्तयति। चिन्तयमानश्चासौ रुद्रः क्रूरो भूत्वा यजमानस्य प्रजां पशून् शम-यितोर्विनाशयितुं समर्थो भवति। तस्य कः प्रतीकार इति त-दुच्यते। आप्रीमन्त्रकाभिः प्रयाजयाज्याभिराप्रीतन्तोषितं पशुं यदोदङ्मुखं नयन्ति तदा तस्य प्रतीचीनगार्हपत्यस्य सम्बन्धिनं पशुश्रपणकारिणमग्निं हरेत् तेनैव हरणेनैनं प्रतीचीनगार्हप-त्याग्निं भागयुक्तं करोति। ततः प्रजाद्यविनाश इति द्रष्टव्यं। नन्वाहवनीयादेव पशुश्रपणमग्निं कुतो न हरेयुरित्याशङ्क्य तत्र दोषं दर्शयति। "यजमानो वा आहवनीयो यजमानं वा एतद् विकर्षन्ते यदाहवनीयात् पशुश्रपणꣳ हरन्ति स वैव स्यात् नि-र्मन्थ्यं वा कुर्यात् यजमानस्य सात्मत्वाय" इति। आहवनीयादग्निं विकृष्य हरणे यजमानस्यायं विकर्षः स्यात्। आहवनीयस्य प्रधानत्वेन यजमानरूपत्वात्। तस्मात् पूर्वोक्तः सोऽग्निरेव वा स्यात्। अथवा निर्मथनेन लौकिकेन कश्चिदग्निं श्रपणार्थमुत्पादयेत्। एवं सति यजमानो विकर्षरहितः सम्पूर्णस्वरूपो भवति। अथ पशुप्रसङ्गेन किञ्चित्प्रायश्चित्तं विधत्ते। "यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येत् सैव ततः प्रायश्चित्तिः" इति। प्रत्याख्याय प्रत्येकं गणयित्वा यावन्त्यवदानानि नष्टानि तावत्कृत्व आज्यमवद्येत् सेय-मवदानक्रियैव ततो दोषात् विमोचनाय प्रायश्चित्तिर्भवति। अथ प्रासङ्गिकं काम्यं विधत्ते। "ये पशुं विमथ्नीरन् यस्तान् कामयेता-

र्तिमार्च्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाऽऽग्नीध्रे जुहुयात् नमोवृक्तिमेवैषां वृङ्क्ते ताजगार्तिमार्च्छन्ति" इति। ये वैरिणः पशुमुद्दिश्य विमथ्नीरन् कलहं कुर्वीरन् अस्मदीयोऽयं पशुरिति यदि हरेयुस्तदानीमपहर्तृन् प्रति यो यजमान आर्तिमाप्नुयुरिति कामयेत सोऽयं कुविदङ्गेत्यृचाऽऽग्नीध्रधिष्ण्यस्थवह्नौ जुहुयात्। तस्या ऋचः सामर्थ्यन्द्योतयितुं नमोवृक्तिवत्येत्युक्तं ये बर्हिषो नमोवृक्तिं न जग्मुरित्येवं। नमोवृक्तिशब्दोऽस्यामस्तीति नमोवृक्तिमती। एषामपहर्तृणां नमोवृक्तिमेव वृङ्क्ते नमस्कार्यत्ववर्जनमेव करोति। बन्धुमित्रादयः शिष्टादयोऽन्यजना अपि यथा तान्न नमस्कुर्वन्ति तथा बहिष्करोतीत्यर्थः। ते मानहानिं प्राप्तास्तदानीमेव म्रियन्ते॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः॥०॥

---

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः। तस्मै प्रतिप्रवेदय चिकित्वाꣳ अनुमन्यतां। इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यं। प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तं। सुवर्गं या-

हि 'पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः। येषामीशे ॥ १ ॥

पशुपतिः पशूनां चतुष्पदामुत च द्विपदां। निष्क्रीतो यं यज्ञियं भागमेतु रायस्पोषाय यजमानस्य सन्तु। ये बध्यमानमनुबध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च। अग्निस्ताँ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः। य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः। वायुस्ताँ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः। प्रमुञ्चमानाः ॥ २ ॥

भुवनस्य रेतो गातुं धत्त यजमानाय देवाः उपाकृतँ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः। नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः। जीवं देवानामप्येतु पाथः सत्याः सन्तु यजमानस्य कामाः। यत् पशुर्मायुमकृतोरो वा पद्भिराहते। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः। शमितार उपेत न यज्ञं ॥ ३ ॥

देवेभिरन्वितं। पाशात् पशुं प्रमुञ्चत बन्धाद्यज्ञपतिं परि। अदितिः पाशं प्रमुमोक्तैतं नमः पशुभ्यः पशुपतये करोमि। अरातीयं तमधरं कृणोमि यं द्वि-

षस्तस्मिन् प्रतिमुञ्चामि पाशं। त्वामु ते दधिरे हव्यवाहꣳ शृतं कर्त्तारमुत यज्ञियञ्च। अग्ने स दक्षः स तनूर्हि भूत्वाथ हव्या जातवेदो जुषस्व। जातवेदो वपया गच्छ देवान् त्वꣳ हि होता प्रथमो बभूथ। घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः। स्वाहा देवेभ्यो देवेभ्यः स्वाहा ॥ ४ ॥

ईशे प्रमुञ्चमाना यज्ञं त्वꣳ षोडश च ॥ ४ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

पदाञ्जनं पशोः पाकवह्निश्चोक्तौ तृतीयके।

अथ चतुर्थे पशूपाकरणमन्त्रा आम्नायन्ते। कल्पः। 'बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात् प्रत्यञ्चं पशुमुपाकरोत्युपदेवान्दैवीर्विशः प्रजापतेर्जायमाना इति चैताभ्यामुपस्पृशन्निति'। प्रजापतेरित्यादिके द्वे ऋचौ। तत्रेयं प्रथमा। "प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः तस्मै प्रतिप्रवेदय चिकित्वाꣳ अनुमन्यतां" इति। याः प्रजाः इदानीं जायमानाः याश्चेमाः पूर्वं जाताः ताः सर्वाः प्रजापतेरेव यत्प्रसूताः अतः तस्मै प्रजापतये प्रति प्रत्येकं रहसि गत्वा प्रवेदय। हे पशो त्वदीयं वृत्तान्तं कथय। स च प्रजापति-

श्चिकित्वान् त्वदीयां स्वर्गप्राप्तिं जानन्ननुमन्यतां। अथ द्वितीया। "इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये। अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यं" इति। हे पशुपते अग्ने यस्मिन्दिने सुकृतस्य मध्ये सम्यगनुष्ठितस्य ज्योतिष्टोमस्य कर्मणो मध्ये इमं पशुं बध्नामि अतस्तमनुमन्यस्व। वयं सुयजा शोभनेन यज्ञेन यजाम। इदं हव्यं देवानां जुष्टं प्रियमस्तु। कल्पः। 'प्रजानन्तः प्रतिगृह्णन्ति पूर्वं इति पञ्च हुत्वा' इति। तत्रेयं प्रथमा। "प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तं। सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः" इति। हे पशो पूर्वदेवाः त्वदीयं वृत्तान्तं जानन्तः अङ्गेभ्यः परि त्वदीयावयवेभ्य ऊर्ध्वं आचरन्तं ते त्वदीयं प्राणं प्रतिगृह्णन्ति, अस्माकमधीनोऽयमिति स्वीकुर्वन्ति। त्वं तु देवाः येषु पथिषु यान्ति तैः पथिभिः स्वर्गं याहि। प्राणरूपेण स्वर्गं गत्वा अवशिष्टैः शरीरावयवैरोषधीषु प्रतितिष्ठ पुरोडाशादिवद्धविर्भवेत्यर्थः। अथ द्वितीया। "येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदां निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषाय यजमानस्य सन्तु" इति। पशुस्वामी रुद्रो द्विपदां चतुष्पदां च येषां पशूनामीशे स्वामित्वेन वर्त्तते तेषां पशूनां मध्ये स्वामिनः सकाशादस्माभिर्निष्क्रीतोऽयं यज्ञयोग्यं भागमेतु भागत्वं प्राप्नोतु। यजमानस्य रायस्पोषाः धनपुष्टयः सन्तु। अथ तृतीया। "ये बध्यमानमनुबध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च। अग्निस्ताꣳ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः" इति। अस्य पशोः पितृमातृभ्रातृसगर्भ्यसयूथ्यरूपा ये पशव एतदीयस्नेहेन स्वयमपि

बध्यमानमेनं पशुमनुबध्यमानाः सन्तो मनसा चक्षुषा चाभित ऐक्षन्त तान् पशूनग्निरग्रे प्रकर्षेण मोचयतु। ततः प्रजापतिर्देवः स्वकीयया प्रजया संविदान ऐकमत्यं गतस्तान् पशून् मोचयतु। अथ चतुर्थी। "य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः। वायुस्ताꣳ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः" इति। जातिभेदैर्विश्वरूपाः वर्णभेदेनोच्चनीचत्वादिभेदैश्च बहुधा विविधरूपाः सन्तोऽपि पशुत्वेनैकरूपाः। शेषं पूर्ववत्। अथ पञ्चमी "प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः। उपाकृतꣳ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः" इति। हे देवा भुवनस्य रेतः यागद्वारेणोत्पत्तिहेतुमिमं पशुं प्रमुञ्चमानाः प्रकर्षेण प्राणं मातृपित्रादिभ्यो यज्ञार्थं मोचयन्तः यजमानस्य गातुं धत्त स्वर्गलोकप्राप्तिं धत्त। उपाकृतं उपाकरणक्रियया संस्कृतं शशमानं हविर्भुञ्च। देवेषु व्याप्रियमाणं यदस्थाद्यदङ्गजातमस्मिन् पशौ स्थितं तत् पाथोऽन्नं भूत्वा देवानां जीवमेतु जीवनार्थमुपाकरोतु। अपिशब्दात् यजमानस्य स्वर्गं ददात्विति गम्यते। कल्पः। 'नाना प्राणो यजमानस्य पशुनेत्यध्वर्युर्जपति' इति। पाठस्तु। "नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः। जीवं देवानामप्येतु पाथः सत्याः सन्तु यजमानस्य कामाः" इति। यजमानस्य प्राणः पशुना सह नाना पृथक् भवतु। अयमनुष्ठीयमानो यज्ञो देवेभिर्देवनशीलैः पशुप्राणैः सह देवयानो भवतु हविर्भुजो देवान् प्रति गच्छतु। पाथः पशुरूपमन्नं देवानां जीवमप्येतु जीवनहेतुत्वं प्राप्नोतु। तेन यजमानस्य कामाः सत्याः सन्तु।

कल्पः'। 'यत् पशुर्मायुमकृतेति मन्त्रप्रहोमं जुहोति' इति। पाठस्तु। "यत् पशुर्मायुमकृतोरो वा पद्भिराहते। अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः" इति। अयं पशुर्मारणवेलायां मायुं दुःखहेतुकशब्दमकुरुत। अथवा यतस्ततश्चाल्यमानैः पादैरुरस्ताडयति। तत्र यदेनो निष्पन्नं तस्मादेनसोऽग्निर्मां मोचयतु। किञ्चान्येनापि बन्धनाद्युपद्रवेण यद्यदंहो निष्पन्नं तस्मात् सर्वस्मादंहसो मां मोचयतु। कल्पः। 'शमितार उपेतनेति वपाश्रपणीभ्यां पशुमुपेतोऽध्वर्युर्यजमानश्च' इति। पाठस्तु। "शमितार उपेतन यज्ञं देवेभिरिन्वितं। पाशात् पशुं प्रमुञ्चत बन्धाद्यज्ञपतिं परि" इति। हे शमितारो विशसनस्य कर्तारो देवा देवेभिरिन्वितं देवैर्व्याप्तं यज्ञमुपेतन प्राप्नुत। प्रवर्तयतेत्यर्थः। इमं पशुं पाशात् बन्धनरज्वाः यज्ञे प्रमुञ्चत। जज्ञपतिञ्च बन्धनजन्याद्दोषात् परिमुञ्चत। अनेन मन्त्रेणाध्वर्युयजमानौ वपाश्रपणहेतुभ्यां काष्ठनिर्मिताभ्यां एकशूलाभ्यां युक्तौ सन्तौ शामित्रदेशं समागच्छतः। कल्पः। 'पशोः पाशं प्रमुञ्चत्यदितिः पाशं प्रमुमोक्तैतम्' इति। पाठस्तु। "अदितिः पाशं प्रमुमोक्तैतं नमः पशुभ्यः पशुपतये करोमि" इति। अदितिः पृथिवी पशोरेतत्पाशं प्रमुञ्चतु। अहञ्च पशुभ्यः पशुपतये च मदपराधनिवृत्त्यर्थं नमस्करोमि। कल्पः। 'यद्यभिचरेदरातीयन् तमधरं कृणोमि यं द्विष्मस्तस्मिन् प्रतिमुञ्चामि पाशमिति तया वृक्षं स्थाणुं स्तम्भं वापिदध्यात्' इति। पाठस्तु। "अरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन् प्रतिमुञ्चामि पाशम्" इति। यः पुरुषोऽस्माकमरातित्वं कर्तुमि-

च्छति तमधरं मत्तोऽवरं करोमि। यश्चिदानीमरातित्वं नेच्छति तथापि कालान्तरे तत्सम्भावनया वयमिदानीं तं द्विष्मः। तस्मिन् पुरुषे पाशमिमं प्रतिमुञ्चामि अनया रशनया तं बध्नामीत्यर्थः। कल्पः। 'त्वामु ते दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति' इति। पाठस्तु। "त्वामु ते दधिरे हव्यवाहꣳ शृतं कर्त्तारमुत यज्ञियञ्च। अग्ने स दक्षः सतनुर्हि भूत्वाथ हव्या जातवेदो जुषस्व" इति। हे अग्ने देवेभिरिन्धितमिति पूर्वोक्ता ये देवास्ते त्वां दधिरे त्वामेव कार्यकरत्वेन निश्चितवन्तः। कीदृशं त्वां हव्यवाहं देवान् प्रति हविषो वोढारं। शृतं कर्तारं आर्द्रकं हविः पक्वं कुर्वन्तं। अपि च यज्ञियं यज्ञसम्पादनार्हं। हे जातवेदः हि यस्मात्त्वं सतनुः दृढशरीरो भूत्वा सदक्षः सोत्साहः, अथ तस्मात् कारणात् हव्या जुषस्व हवींषि वोढुं प्रीतियुक्तो भव। कल्पः। 'जातवेदो वपया गच्छ देवानिति वषट्कृते हुत्वा' इति। पाठस्तु। "जातवेदो वपया गच्छ देवान् त्वꣳ हि होता प्रथमो बभूथ। घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः" इति। हे जातवेदः त्वं वपया सह देवान् गच्छ। हि यस्मात्त्वं प्रथमो होता बभूथ मनुष्यहोतुः पूर्वभावी बभूविथ तस्मात् त्वं घृतेन देवानां तनूर्वर्धयस्व। ते च देवाः स्वाहाकारेण समर्पितमिदं हविर्भक्षयन्तु। कल्पः। 'स्वाहा देवेभ्य इति पूर्वं परिवप्यं हुत्वा' इति। 'देवेभ्यः स्वाहेत्युत्तरं परिवप्यं हुत्वा' इति च। पाठस्तु। "स्वाहा देवेभ्यो देवेभ्यः स्वाहा" इति। ये देवाः पुरस्तात् स्वाहाकारास्तेभ्य इदमाज्यं वपाहोमात् पूर्वं स्वाहाकृतमस्तु। तस्य च होमस्य वपाहोमाङ्गत्वात्

वपात्वं। ये तु देवा उपरिष्टात् स्वाहाकारास्तेभ्यो वपादूर्ध्वमिदमाज्यं हुतमस्तु। वपाया उभयपार्श्वस्थितानां स्वाहाकारेण वपासामीप्यविच्छेदो माभूदिति स्वाहाकारस्य पुरस्तादुपरिष्टाच्च प्रयोगः।

अत्र विनियोगसंग्रहः।

प्रजापतिरिति द्वाभ्यां स्यादुपाकरणं पशोः।
प्रजा पञ्च जुहोत्यग्नौ नानातन्नयने जपेत्॥
यत्पशुर्म्हतहोमः स्याच्च मिता गच्छतः पशुं।
अध्वर्युयजमानौ द्वावदि पाशप्रमोचनम्॥
अरा वृत्तादिषु ज्ञेयम् त्वां जुहोति वपोपरि।
या त्वपाकृतिरेतस्याः स्वाहा इत्यभितो हुतिः॥
अनुवाके चतुर्थेऽस्मिन् मन्त्राः षोडश वर्णिताः।

अत्र मीमांसा। नवमाध्यायस्य तृतीयपादे चिन्तितम्। अ०४।

पाशं पाशान् द्वयोः पश्वोरेको मन्त्रोऽथवा द्वयं।
एकत्वे च द्वयत्वे किं ह्येकस्योहोऽथवा द्वयोः॥
एकेनैव कृतार्थत्वादेको मन्त्रस्तदापि च।
अविकारेण बह्वर्थ एकार्थासमवायतः।
प्राकृतत्वादभावूह्यावेकार्थोऽत्र विवक्षया॥
बह्वर्थोऽप्यूहनीयोऽत्र द्वयोः शक्तेरक्लृप्तितः।

ज्योतिष्टोमेऽग्नीषोमीयपशावेकवचनान्तबहुवचनान्तौ द्वौ पाशमन्त्रौ भिन्नयोः शाखयोराम्नातौ। 'अदितिः पाशं प्रमुमोक्त्वेतम्' इत्येकत्र। पाशान् प्रमुमोक्त्वेतानित्यपरत्र। तावुभौ पशुद्वयोपेतायां विकृतौ चोदकेनातिदिष्टौ। सा च विकृतिरेवमाम्नायते।

'मैत्रꣳ श्वेतमालभेत वारुणं कृष्णमपाञ्चौषधीनाञ्च सन्धावन्नकामः' इति। तत्रैकेनैव मन्त्रेण चरितार्थत्वान्न द्वयोरतिदेश इत्याद्यः पक्षः। तदाप्यविकृतस्य प्रयोक्तुं शक्यत्वात् बहुवचनान्तो मन्त्रो युक्तः। प्रकृतावेकस्मिन् पशावसमवेतार्थतया बहुवचनस्य विकृतावनूहनीयत्वादित्येकः पक्षः। तादृग्बहुवचनोपेतत्वादेव मन्त्रोऽप्यसावसमवेतार्थः प्रकृतौ भवति, एकवचनान्तस्तु मन्त्रः प्रकृतौ समवेतार्थत्वात् विकृतावतिदिश्यतां। स च द्विवचनान्तत्वेनोहनीय इति पक्षान्तरं। प्रकृतौ विद्यमानयोरुभयोर्मन्त्रयोर्विकृतावतिदेशस्य वारयितुमशक्यत्वादेकमन्त्रपक्षस्यावान्तरत्वेनोपन्यस्तौ उभावपि पक्षावनुपयुक्तौ। मन्त्रद्वयातिदेशपक्षे तु एकवचनान्तः प्रकृतौ समवेतार्थतया विकृतावूहनीयः। बहुवचनान्तो यथावस्थितएव पठनीय इति पूर्वपक्षः। लोके वेदे वा बहुवचनस्य द्वयोरर्थयोरक्लृप्तशक्तित्वात् द्विवचनान्ततया सोऽप्यूहनीय इति राद्धान्तः॥

तत्रैवान्यच्चिन्तितं। अ०५।

उत्कृष्टव्यो न वा मन्त्रो बह्वर्थो सङ्गतत्त्वतः।
उत्कर्षो न विकल्प्योऽसौ गुणे त्वन्याय्यकल्पना॥

योऽयं पूर्वत्रोदाहृतो बहुवचनान्तः पाशमन्त्रः तस्य प्रकरणादुत्कर्षो बहुपाशयुक्तेषु पशुगणेषु कर्तव्यः। कुतः, एकस्मिन् पशौ प्रकृते तस्यानन्वितत्वादिति चेत्। नासावुत्कृष्टव्यः, किन्त्वेकवचनान्तेन मन्त्रेण सह विकल्पनीयः। नहि पाशं पाशानित्यत्र प्रधानस्यांशस्यानन्वितत्वमस्ति। प्रातिपदिकविभक्त्योः प्रातिपदिकं प्रधानं, धर्मिवाचकत्वात्। विभक्तिस्तु कर्मत्वकरणत्वादिधर्मवाचकत्वात्

गुणभूता। तथा विभक्तिवचनयोर्विभक्तेः कर्मादिकारकवाचित्वात् प्राधान्यं। वचनस्य कारकगतसङ्ख्याभिधायित्वात् गुणत्वं। तथा सति बहुवचनान्ते पाशशब्दे प्रातिपदिकं कर्मकारविभक्तिश्चैकस्मिन्नपि पाशे सङ्गच्छेते। गुणभूते तु बहुवचने लक्षणावृत्तिः कल्पनीया। पाशावयवगतं बहुत्वं लक्ष्यत इति, तस्मात् गुणभूतं वचनमात्रमनुसृत्य कृत्स्नस्य मन्त्रस्य प्रकरणपाठो न बाधनीयः। किन्तु प्रधानानुसारेण मन्त्रयोः समानबलत्वात् विकल्पः कर्तव्यः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥४॥

---

प्राजापत्या वै पशवस्तेषाꣳ रुद्रोऽधिपतिर्यदेताभ्यामुपाकरोति ताभ्यामेवैनं प्रतिप्रोच्यालभत आत्मनो नाव्रस्काय द्वाभ्यामुपाकरोति द्विपाद्यजमानः प्रतिष्ठित्या उपाकृत्य पञ्च जुहोति पाङ्क्ताः पशवः पशूनेवावरुन्धे मृत्यवे वा एष नीयते यत् पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्यान्नाना प्राणो यजमानस्य पशुनेत्याह व्यावृत्त्यै ॥ १ ॥

यत् पशुर्मायुमकृतेति जुहोति शान्त्यै शमितार उपेतनेत्याह यथायजुरेवैतद्वपायां वा आह्रियमाणाया-

मग्नेर्मेधोपक्रामति त्वामुते दधिरे हव्यवाहमिति वपामभिजुहोत्यग्नेरेव मेधमवरुन्धेऽथो शृतत्वाय पुरस्तात् स्वाहाकृतयो वा अन्ये देवा उपरिष्टात् स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति तानेवोभयान् प्रीणाति ॥ २ ॥

व्यावृत्त्या अभितो वपां पञ्च च ॥ ५ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥*॥

चतुर्थे वर्णिता मन्त्राः पशूपाकरणादिगाः।

अथ पञ्चमे तेषां मन्त्राणां ब्राह्मणमभिधीयते। तत्रादावुपाकरणं विधत्ते। "प्राजापत्या वै पशवस्तेषाꣳ रुद्रोऽधिपतिर्यदेताभ्यामुपाकरोति ताभ्यामेवैनं प्रतिप्रोच्यालभत आत्मनो नाव्रस्काय" इति। प्रजापतिः पशूनां जनकः, अग्निश्च रुद्रशब्दाभिधेयस्तेषां स्वामी, अतस्तदुभयप्रतिपादकाभ्यां 'प्रजापतेर्जायमानाः, इमं पशुम्' इत्येताभ्यां मन्त्राभ्यामुपाकुर्यात्। तथा सति ताभ्यां देवाभ्यां प्रतिप्रोच्यायं पशुरालब्धवान् भवति। तच्च कथनं स्वस्यानपराधत्वाय भवति। मन्त्रद्वित्वं प्रशंसति। "द्वाभ्यामुपाकरोति द्विपाद्यजमानः प्रतिष्ठित्यै" इति। उपाकरणादूर्ध्वं प्रजानन्त इत्यादिभिः पञ्चमन्त्रैर्होमं विधत्ते। "उपाकृत्य पञ्च जुहोति

पाङ्क्ताः पशवः पशूनेवावरुन्धे" इति। पुच्छसंहतेषु पादेषु पञ्च-सङ्ख्यायोगात् पशूनां पाङ्क्तत्वं। संज्ञपनाय पश्वानयनकालेऽध्वर्यो-र्जपमन्त्रस्य नानाशब्दस्य तात्पर्यं दर्शयति। "मृत्यवे वा एष नीयते यत् पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्यान्नाना प्राणो यजमानस्य पशुनेत्याह व्यावृत्त्यै" इति। पशोः पृष्ठतो हस्ते-न स्पर्शोऽन्वारम्भः। व्यावृत्तिवाचकस्य नानाशब्दस्य प्रयोगो यज-मानप्राणस्य म्रियमाणत्वात् पशोर्व्यावृत्त्यै भवति। संज्ञप्तहोमं वि-धत्ते। "यत् पशुर्मायुमकृतेति जुहोति शान्त्यै" इति। अंहसो मुञ्चत्वित्यनया मन्त्रगतप्रार्थनया पापस्य शान्तिर्भवति। अध्वर्यु-यजमानयोर्वपाश्रपणीव्यवधानेन पशुप्राप्तिमन्त्रस्य स्पष्टार्थतां दर्श-यति। "शमितार उपेतनेत्याह यथायजुरेवैतत्" इति। यद्य-प्येषो मन्त्रः पादबद्धत्वादृगेव तथापि यजुर्वेदाम्नातत्वात् कर्मणि विनियोज्यमानत्वाद्वा यजुरित्युच्यते। वपाया उपरि होमं विधत्ते। "वपायां वा आह्रियमाणायामग्नेर्मेधोपाक्रामत् त्वामु ते दधिरे हव्यवाहमिति वपामभिजुहोत्यग्नेरेव मेधमवरुन्धेऽथो शृतत्वाय" इति। यदा वपा होतुमाह्रियते तदानीमग्नेः सकाशात् यज्ञो-ऽपक्रामति तस्य च यज्ञस्यानेन होमेनापक्रमणं निवारितं भवति। अत एव मन्त्रे दधिर इति प्रयुज्यते। अग्निं यज्ञस्य धारकं कृत-वन्त इत्युक्तं भवति। किञ्च शृतं कर्त्तारमिति विशेषितत्वादयं होमो वपायाः पक्वत्वाय सम्पद्यते। परिवप्यहोमौ विधत्ते। "पुरस्तात् स्वाहाकृतयो वा अन्ये देवा उपरिष्टात् स्वाहाकृतयो-ऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति तानेवो-

भयान् प्रीणाति" इति। वपासामीप्यं वाञ्छतां स्वाहाकारव्यवधानाद् बिभ्यतामुभयविधानां देवानां प्रीत्यै स्वाहाशब्दस्य मन्त्रयोर्व्यत्यासेन प्रयोग इत्यर्थः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान् भवति यो यथादेवतं न देवताभ्य आवृश्च्यते वसीयान् भवत्याग्नेय्यर्चाग्नीध्रमभिमृशेद् वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदो यथादेवतमेव यज्ञमुपचरति न देवताभ्य आवृश्च्यते वसीयान् भवति युनज्मि ते पृथिवीं ज्योतिषा सह युनज्मि वायुमन्तरिक्षेण ॥ १ ॥

ते सह युनज्मि वाचꣳ सह सूर्येण ते युनज्मि तिस्रो विपृचः सूर्यस्य ते। अग्निर्देवता गायत्री छन्द उपाꣳशोः पात्रमसि सोमो देवता त्रिष्टुप् छन्दोऽन्तर्यामस्य पात्रमसीन्द्रो देवता जगती छन्द इन्द्रवायुवोः पात्रमसि बृहस्पतिर्देवताऽनुष्टुप् छन्दो मित्रावरुणयोः

*पात्रमस्यश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि सूर्यो देवता बृहती* ॥ २ ॥

छन्दः शुक्रस्य पात्रमसि चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि विश्वेदेवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसीन्द्रो देवता ककुच्छन्द उक्थानां पात्रमसि पृथिवी देवता विराट् छन्दो ध्रुवस्य पात्रमसि ॥ ३ ॥

अन्तरिक्षेण बृहती चत्वारिंशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥*॥

पूर्वानुवाकमन्त्राणां पञ्चमे ब्राह्मणं श्रुतं।

अथ षष्ठेऽभिमर्शनविधयो मन्त्रविशेषाश्च केचिदाम्नायन्ते। तत्र सुत्यादिना तत्प्रयोगारम्भे अभिमर्शनं विधत्ते। "यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान् भवति यो यथादेवतं न देवताभ्य आवृश्च्यते वसीयान् भवत्याग्नेय्यर्चाऽऽग्नीध्रमभिमृशेद् वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदो यथादेवतमेव यज्ञमुपचरति न देवताभ्य आवृश्च्यते वसीयान् भवति" इति। आग्नीध्रहविर्धानादीनां मध्ये यस्य या देवता तां देवतामभिक्रम्य तस्योपचारे सति देवताभ्यो-

ऽवच्छिद्यते दरिद्रश्च भवति, अतस्तत्तद्देवताप्रतिपादकमन्त्रैरेव तस्याऽभिमर्शने सति नोक्तदोषो भवति। तांश्च मन्त्रविशेषानापस्तम्ब उदाजहार । 'महारात्रे बुद्धाग्रे नयेत्याग्नीध्रमभिमृशतीदं विष्णुर्विचक्रम इति हविर्धानमग्न आयूꣳषि पवस इति स्रुच आ वायो भूष शुचिपा इति वायव्यान्याद्या ये अग्निमिन्धत इति सदः' इति । तेषु चत्वारो मन्त्रा प्रथमकाण्ड एवाम्नाता व्याख्याताश्च। आद्या ये अग्निमिति मन्त्रस्तु ब्राह्मणग्रन्थे द्वितीयकाण्डस्य चतुर्थप्रपाठके 'वृषासो अꣳशुः' [ब्रा०२।४।५] इत्यस्मिन्ननुवाके आम्नास्यमानत्वात् तत्रैव व्याख्यास्यते। कल्पः। 'युनज्मि ते पृथिवीं ज्योतिषा सहेति दक्षिणस्य हविर्धानस्याधस्तात् पश्चादक्षं द्रोणकलशꣳ सदशापवित्रं युनज्मि. वायुमन्तरिक्षेण ते सहेत्युत्तरस्य हविर्धानस्योपरिष्टान्नीड आधवनीयं युनज्मि. वाचꣳ सह सूर्येण त इति प्रधुरे पूतभृतम्' इति। अत्र सर्वत्र युनज्मीति पदमनुवर्तते। हे द्रोणकलश ते तव स्वरूपभूतां पृथिवीं ज्योतिषाऽग्निना सहैतस्मिन् स्थाने युनज्मि सादयामि। हे आधवनीय ते स्वरूपभूतं वायुं तदाधारेणान्तरिक्षेण सहास्मिन् स्थाने युनज्मि। उच्यते नानाविधैर्मन्त्रैः प्रतिपाद्यते इति द्युलोको वाक्। हे पूतभृत् तव स्वरूपभूतां वाचं सूर्येण द्युलोकस्थेन सहास्मिन् स्थाने युनज्मि। कल्पः। 'युनज्मि तिस्रो विपृचः सूर्यस्य ते' इति। स्रुचः सन्ना अभिमन्त्रयते। जुहूपभृत्ध्रुवाख्यास्तिस्रो याः स्रुचः ता विपृचः परस्परसम्पर्करहिता यथा भवन्ति तथा सूर्यस्य तव प्रकाशेन परीक्ष्य युनज्मि। कल्पः। 'अथैतानि वायव्यान्यभिमृशत्यग्निर्देवता गायत्री छन्द उपांशोः पात्रमसीति दशभिर्दश'

पात्रमस्यश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि सूर्या देवता बृहती ॥ २ ॥

छन्दः शुक्रस्य पात्रमसि चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि विश्वेदेवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसीन्द्रो देवता ककुच्छन्द उक्थानां पात्रमसि पृथिवी देवता विराट् छन्दो ध्रुवस्य पात्रमसि ॥ ३ ॥

अन्तरिक्षेण बृहती त्रयस्त्रिंशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥*॥

पूर्वानुवाकमन्त्राणां पञ्चमे ब्राह्मणं श्रुतं।

अथ षष्ठेऽभिमर्शनविधयो मन्त्रविशेषाश्च केचिदाम्नायन्ते। तत्र सुत्यादिना तत्प्रयोगारम्भे अभिमर्शनं विधत्ते। "यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान् भवति यो यथादेवतं न देवताभ्य आवृश्च्यते वसीयान् भवत्याग्नेय्यर्चाऽऽग्नीध्रमभिमृशेद् वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदो यथादेवतमेव यज्ञमुपचरति न देवताभ्य आवृश्च्यते वसीयान् भवति" इति। आग्नीध्रहविर्धानादीनां मध्ये यस्य या देवता तां देवतामभिक्रम्य तस्योपचारे सति देवताभ्यो-

ऽवच्छिद्यते दरिद्रश्च भवति, अतस्तत्तद्देवताप्रतिपादकमन्त्रैरेव तस्याऽभिमर्शने सति नोक्तदोषो भवति। तांश्च मन्त्रविशेषानापस्तम्ब उदाजहार। 'महारात्रे बुद्ध्वाग्रे नयेत्याग्नीध्रमभिमृशतीदं विष्णुर्विचक्रम इति हविर्धानमग्न आयूꣳषि पवस इति स्रुच आ वायो भूष शुचिपा इति वायव्यान्याद्या ये अग्निमिन्धत इति सदः' इति। तेषु चत्वारो मन्त्रा प्रथमकाण्ड एवाम्नाता व्याख्यातास्च। आद्या ये अग्निमिति मन्त्रस्तु ब्राह्मणग्रन्थे द्वितीयकाण्डस्य चतुर्थप्रपाठके 'वृषासो अꣳशुः' [ब्रा० २।४।५] इत्यस्मिन्ननुवाके आम्नास्यमानत्वात् तत्रैव व्याख्यास्यते। कल्पः। 'युनज्मि ते पृथिवीं ज्योतिषा सहेति दक्षिणस्य हविर्धानस्याधस्तात् पश्चादक्षं द्रोणकलशꣳ सदशापवित्रं युनज्मि. वायुमन्तरिक्षेण ते सहेत्युत्तरस्य हविर्धानस्योपरिष्टान्नीड आधवनीयं युनज्मि. वाचꣳ सह सूर्येण त इति प्रधुरे पूतभृतम्' इति। अत्र सर्वत्र युनज्मीति पदमनुवर्तते। हे द्रोणकलश ते तव स्वरूपभूतां पृथिवीं ज्योतिषाऽग्निना सहैतस्मिन् स्थाने युनज्मि सादयामि। हे आधवनीय ते स्वरूपभूतं वायुं तदाधारेणान्तरिक्षेण सहास्मिन् स्थाने युनज्मि। उच्यते नानाविधैर्मन्त्रैः प्रतिपाद्यते इति द्युलोको वाक्। हे पूतभृत् तव स्वरूपभूतां वाचं सूर्येण द्युलोकस्थेन सहास्मिन् स्थाने युनज्मि। कल्पः। 'युनज्मि तिस्रो विपृचः सूर्यस्य ते' इति। स्रुचः सन्ना अभिमन्त्रयते। जुह्वपभृत्ध्रुवाख्यास्तिस्रो याः स्रुचः ता विपृचः परस्परसम्पर्करहिता यथा भवन्ति तथा सूर्यस्य तव प्रकाशेन परीक्ष्य युनज्मि। कल्पः। 'अथैतानि वायव्यान्यभिमृशत्यग्निर्देवता गायत्री छन्द उपांशोः पात्रमसीति दशभिर्दश'

इति। हे ऊर्ध्वपात्र अग्निर्देवता त्वां रक्षतु। गायत्री छन्दस्त्वां रक्षतु। त्वमुपांशुनामकस्य सोमरसग्रहणस्य पात्रमसि। एवमुत्तरेषु नवसु मन्त्रेषु योज्यं। तेषां पाठस्तु। "सोमो देवता त्रिष्टुप् छन्दोऽन्तर्यामस्य पात्रमसीन्द्रो देवता जगती छन्द इन्द्रवायुवोः पात्रमसि बृहस्पतिर्देवताऽनुष्टुप् छन्दो मित्रावरुणयोः पात्रमस्यश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि सूर्यो देवता बृहती छन्दः शुक्रस्य पात्रमसि चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि विश्वेदेवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसीन्द्रो देवता ककुच्छन्द उक्थानां पात्रमसि पृथिवी देवता विराट् छन्दो ध्रुवस्य पात्रमसि" इति। इन्द्रवायुवोरित्यादिभिर्देवतावाचकैः शब्दैस्तदीयं सोमरसग्रहणमुपलक्ष्यते। *आग्रयणादिषु हे स्थालीति सम्बोधनीयं। शस्त्रवाचकेनोक्थानामितिशब्देन तत्तच्छस्त्रसम्बन्धि सोमरसग्रहणमुपलक्ष्यते। अस्मिन्ननुवाके प्रोक्ताः सर्वे मन्त्रा हृदे त्वा मनसे त्वेत्यनुवाकात् प्रागेव द्रष्टव्याः।

अत्र विनियोगसंग्रहः।

आग्नेय्यग्ने नयेतीदं विष्णुरित्येव वैष्णवी।
अग्न आयूंषि चाग्नेयी आ वायो इति वायवी॥
आद्या ये अग्निमैन्द्री स्याद्युनज्मीति त्रिभिः क्रमात्।
साद्यन्ते द्रोणकलशाधवनीयौ च पूतभृत्॥
युनेति मन्त्रणं कुर्यात् सवनीयस्रुवस्रुचां।

---

* आग्रयणादिष्वित्यारभ्य लक्ष्यते इत्यन्तः पाठ आदर्शपुस्तके नास्ति भ्रमपतितत्वादित्यनुमीयते।

अग्निरित्यादिदशभिर्ग्रहपात्राणि संस्पृशेत् ॥
षष्ठेऽनुवाके संप्रोक्ता मन्त्रा एकोनविंशतिः ।

अथ मीमांसा । तृतीयाध्यायस्य द्वितीयपादे चिन्तितम् । अ० ८ ।

आग्नेय्याग्नीध्रमित्यग्निदेवताका ऋचोऽखिलाः ।
उपस्थाने प्रयोक्तव्याः प्रकृता एव ता उत ॥
साधारणेन शब्देोक्तेः सर्वाभिस्तदुपस्थितिः ।
विशेषविधिसङ्क्रान्त्या प्रकृताभिरितीष्यताम् ॥

ज्योतिष्टोमे श्रूयते 'आग्नेय्याग्नीध्रमुपतिष्ठते' इति । तत्राग्नीध्रनामकस्य मण्डपस्य यदुपस्थानं तद्यया कयाचिद्वाशतयीगतयाग्निदेवतया सम्बन्धिन्या कर्तव्यं । अग्निर्देवता यस्या ऋचः साग्नेयीति साधारणोक्तात्त्वविशेषस्याप्रतीतेरितिचेत् । मैवं । क्रतुप्रकरणपठितानामाग्नेयीनामृचां क्रतुप्रयुक्तव्यापारसाधनत्वं प्रकरणादेवावगतं । कोऽसौ व्यापार इति विशेषबुभुत्सायामाग्नीध्रोपस्थानरूपोऽयमिति बोधयन्नयं विधिर्विशेषमात्रं सङ्क्रामयतीति लाघवम् । अप्रकृतानां तु क्रतुप्रयुक्तव्यापारसाधनत्वं तद्व्यापारविशेषश्चेत्युभयं बोध्यत इति गौरवं । तस्मात् प्रकृताभिराग्नेयीभिस्तदुपस्थानं । एवमैन्द्र्या सदो वैष्णव्या हविर्धानमित्यत्र सदोहविर्धाननामकयोर्मण्डपयोरुपस्थाने प्रकृतानामेवैन्द्रीणां वैष्णवीनां च प्रयोग इति द्रष्टव्यम् ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ०॥

दुष्टर्गो वा अध्वर्युर्यजमानस्येष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयत आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्या इति पुरा प्रातरनुवाकाज्जुहुयादात्मन एव तदध्वर्युः पुरस्ताच्छर्म नह्यतेऽनार्त्यै संवेशाय त्वोपवेशाय त्वा गायत्रियास्त्रिष्टुभो जगत्या अभिभूत्यै स्वाहा प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं देवतासु वा एते प्राणापानयोः ॥ १ ॥

व्यायच्छन्ते येषाꣳ सोमः समृच्छते संवेशाय त्वोपवेशाय त्वेत्याह छन्दाꣳसि वै संवेश उपवेशश्छन्दोभिरेवास्य छन्दाꣳसि वृङ्क्ते प्रेतिवन्त्याज्यानि भवन्त्यभिजित्यै मरुत्वतीः प्रतिपदो विजित्या उभे बृहद्रथन्तरे भवत इयं वाव रथन्तरमसौ बृहदाभ्यामेवैनमन्तरेत्यद्य वाव रथन्तरꣳ श्वो बृहदद्याश्वादेवैनमन्तरेति भूतं ॥ २ ॥

वाव रथन्तरं भविष्यद्बृहत् भूताच्चैवैनं भविष्यतश्चान्तरेति परिमितं वाव रथन्तरमपरिमितं बृहत्परिमिताच्चैवैनमपरिमिताच्चान्तरेति विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताꣳ स एतज्जमदग्निर्विहव्यमपश्यत् तेन वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्यꣳ शस्य-

त इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते यस्य भूया॑ंसो यज्ञक्रतव इत्याहुः स देवता वृङ्क्त इति य-द्यग्निष्टोमः सोमः परस्तात् स्यादुक्थ्यं कुर्वीत यद्युक्थ्यः स्यादतिरात्रं कुर्वीत यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान् भवति ॥ ३ ॥

प्राणापानयोर्भतं वृङ्क्तेऽष्टाविंशतिश्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपा-ठके सप्तमोऽनुवाकः ॥ * ॥

आग्नीध्रस्पर्शनाद्यर्थमन्त्राः षष्ठे उदीरिताः।

अथ सप्तमे परस्परमात्सर्येण प्रवृत्तयोर्यजमानयोः कश्चिन्नैमि-त्तिकः प्रयोगो वक्तव्यः। तत्रादौ तावदेकं नित्यप्रयोगं विधत्ते। "इष्टर्गो वा अध्वर्युर्यजमानस्येष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयत आस-न्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्या इति पुरा प्रातरनुवाकात् जुहुयादात्मन एव तदध्वर्युः पुरस्ताच्छर्म नह्यतेऽनार्त्यै" इति। इष्टं कामं ऋच्छति प्रमादालस्यादिना विनाशयतीतिष्टर्गः। अध्वर्यु-र्यजमानस्येष्टर्गो वै यागविधानेषु प्रमादादेर्निवारयितुमशक्यत्वात्। तादृशोऽध्वर्युरर्ष्टुर्यज्ञविनाशेन आर्त्तिं गच्छतो यजमानात् पूर्वः क्षीयते स्वयं प्रथमत एव विनश्यति। तस्य स्वविनाशस्य परिहाराय

आसन्यादित्यादिमन्त्रेण होतृसम्बन्धिनः प्रातरनुवाकपाठात् पुराऽयमध्वर्युराग्नीध्रे जुहुयात्। तेन होमेनाध्वर्युरात्मार्थं प्रथमं शर्म नह्यते सुखं बध्नाति। तच्च यजमानस्थानार्थं सम्पद्यते। मन्त्रस्यायमर्थः। आसन्यात् वैरिणामास्येभवात् मन्त्रादभिचाररूपात् मां पाहि हे देव मां पालय. तथा कस्याश्चिदभिशस्त्याः सर्वस्मादप्यपवादात् मां पाहि इति। मात्सर्येण सोमयागं कुर्वतोः द्वयोर्यजमानयोरासन्यमन्त्रस्थाने मन्त्रान्तराणि पञ्च दर्शयति। "संवेशाय त्वोपवेशाय त्वा गायत्रियास्त्रिष्टुभो जगत्या अभिभूत्यै स्वाहा प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा माहासिष्टम्" इति। संवेशः शयनं। उपवेश आसनं। मम विश्रम्भेण तदुभयसिद्ध्यर्थं, गायत्र्याभिभूत्यै गायत्रीकर्तृकवैर्यभिभवार्थं च हे अग्ने त्वां प्रति स्वाहुतमिदमस्तु। गायत्र्याइतिपदादूर्द्ध्वं अभिभूत्यै स्वाहा इति पदद्वयस्यानुषङ्गः। त्रिष्टुभ इति पदस्य संवेशायेत्यादिः पूर्वानुषङ्गः। अभिभूत्यै स्वाहेत्युत्तरानुषङ्गः। जगत्या इति पदस्य संवेशायेत्यादिः पूर्वानुषङ्गः। एवमेते त्रयो मन्त्राः। हे प्राणापापानौ मृत्योः सकाशात् मां पातं। सोऽयं चतुर्थो मन्त्रः। हे प्राणापानौ मां कदाचिदपि माहासिष्टं मा परित्यजतं। सोऽयं पञ्चमो मन्त्रः। अत्रोभयत्र स्वाहेत्यनुषज्यते। एतेषां मन्त्राणां ब्राह्मणमुच्यते। "देवतासु वा एते प्राणापानयोर्व्यायच्छन्ते येषाꣳ सोमः समृच्छते संवेशाय त्वोपवेशाय त्वेत्याह छन्दाꣳसि वै संवेश उपवेशश्छन्दोभिरेवास्य छन्दाꣳसि वृङ्क्ते" इति। येषां यजमानानां सोमयागः समृच्छते मात्सर्येण सम्भूय प्रवर्तते। एते यजमानाः देवताविषये प्राणापानविषये

व्यायच्छन्ते विप्रतिपद्यन्ते एतत् देवतादिकं ममैवास्तु नान्यस्येत्ये-
को मन्यते. अपरोऽपि तथेति विप्रतिपत्तिः। तस्यां विप्रतिपत्तौ
सत्यां संवेशाय त्वेत्यादिभिः पञ्चभिर्मन्त्रैः प्रातरनुवाकात् पुराग्नौप्रे
जुहुयात्। तत्र विश्रम्भपूर्वकयोः शयनासनयोर्वाचकाभ्यां संवेशोप-
वेशशब्दाभ्यां तत्कारणभूतानि गायत्र्यादिच्छन्दांस्युपलक्ष्यन्ते। तथा
सति यः संवेशादिमन्त्रैर्जुहोति तस्य यज्ञे प्रवृत्तैश्छन्दोभिः प्रतिस्प-
र्द्धियज्ञगतानि छन्दांसि विनाशितानि भवन्ति। ततो देवतानां
प्राणापानयोश्च स्वाधीनत्वात् स्वयं निरुपद्रवः सुखेन संवेष्टुमुपवेष्टुञ्च
प्रभुर्भवति। अथ मात्सर्यप्रवृत्तावध्वर्युकर्तव्यान्युक्त्वोद्गातुः कर्तव्य-
विशेषं विधत्ते। "प्रेतिवन्त्याज्यानि भवन्त्यभिजित्यै मरुत्वतोः प्रति-
पदौ विजित्या उभे बृहद्रथन्तरे भवतः" इति। प्रकृष्टा गतिः प्रेतिः,
सा येष्वाज्यस्तोत्रेषु विद्यते तानि प्रेतिवन्ति, तादृशान्याज्यस्तोत्राण्यु-
द्गातृभिरनुष्ठेयानि भवन्ति, तानि चाभिजयाय सम्पद्यन्ते। मात्सर्य-
निमित्तं विज्ञाय नित्यप्रयोगे 'अग्न आयाहि वीतये' इत्यादीन्या-
ज्यस्तोत्राणि। मात्सर्यप्रवृत्तरूपे त्वस्मिन् संसवे 'प्र वो वाजाः' इत्या-
दीन्याज्यस्तोत्राणि। तत्र गतिप्रकर्षवाचिनः प्रशब्दस्य विद्यमानत्वादे-
तानि प्रेतिवन्तीत्युच्यन्ते। ननु ब्राह्मणग्रन्थे एकैको वै जनतायामिन्द्र
इत्यस्मिन्ननुवाके 'यो द्वौ सꣳसुनुतः' इति द्वयोर्मात्सर्येण प्रवृत्तं संसव-
शब्दाभिधेयं सोमयागमुपक्रम्यैवमाम्नातम्. 'एतिवन्त्याज्याभिवन्त्य-
भिजित्यै' [ब्रा०] इति। आभिमुख्येन गमनं एतिः, सा येष्वाज्ये-
ष्वस्ति तान्येतिवन्ति। अग्न आयाहीत्यस्यामृच्यागमनस्य प्रतीत-
त्वात् तदादीन्येतिवन्त्याज्यानि, तान्येव नित्यप्रयोगे इवात्रापि

विधीयन्ते इति चेत्. एवं तर्हि वचनद्वयबलात् प्रैतिवतामैतिवताञ्चात्र समुच्चयोऽस्तु नात्र विकल्पः शङ्कनीयः। अपूर्वभेदेन कार्यैकत्वाभावात्। मरुत्वच्छब्दो यास्वृक्षु अस्ति ता मरुत्वत्यः। प्रतिपद्यन्ते प्रारभ्यन्ते आज्यस्तोत्राणि याभिर्ऋग्भिः ताः प्रतिपदः। उदाहृता मरुत्वत्य आज्यस्तोत्रेषु प्रतिपदो भवन्ति. तच्च विजयाय सम्पद्यते। नित्यप्रयोगे पृष्ठस्तोत्रे बृहत्साम रथन्तरसाम वेत्युभयमिच्छया विकल्प्यते, इह तु संसवे बृहद्रथन्तरे समुच्चिते कार्ये। अथ तयोः समुच्चितयोर्बहुधा प्रशंसामाह। "इयं वाव रथन्तरमसौ बृहदाभ्यामेवैनमन्तरेत्यद्य वाव रथन्तरꣳ श्वो बृहदद्याश्वादेवैनमन्तरेति भूतं वाव रथन्तरं भविष्यद्बृहत् भूताच्चैवैनं भविष्यतश्चान्तरेति परिमितं वाव रथन्तरमपरिमितं बृहत्परिमिताच्चैवैनमपरिमिताच्चान्तरेति" इति। बृहद्रथन्तरे भूलोकादिप्राप्तिहेतुत्वात् तद्रूपेण स्तूयेते। तदुभयं समुच्चित्य प्रयुञ्जानः आभ्यां लोकाभ्यां एनं प्रतिस्पर्धिनमन्तरेति प्रच्युतङ्करोति। तथा वर्तमानदिनरूपेण भविष्यद्दिनरूपेण च ते स्तूयेते, तथा सत्यद्याश्वात् दिनद्वयादेनञ्च्यावयति। तथा भूतभविष्यच्छ्रेयोरूपेण स्तुत्वा ताभ्यां श्रेयोभ्यामेनञ्च्यावयति। तथा परिमितापरिमितरूपाभ्यामपि श्रेयोभ्याञ्च्यावयति। इत्थं द्वयोः संवेशेत्यादिना अत्र कर्तव्यमभिधाय होत्रं कर्तव्यं दर्शयति। "विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताꣳ स एतज्जमदग्निर्विहव्यमपश्यत् तेन वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्यꣳ शस्यत इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते" इति। 'आ नो भद्रा' इत्येतन्नित्यप्रयोगे वैश्वदेवशस्त्रगतं सूक्तं, तस्य स्थाने

'ममाग्ने वर्चो विहवेष्वस्तु' इत्येतत् सूक्तं मात्सर्ययुक्तः प्रयुञ्जीत, तेन प्रतिस्पर्धिन इन्द्रियसामर्थ्यं वृङ्क्ते विनाशयति। यथा जमदग्निः वसिष्ठस्य वीर्यं तद्वत्। एवमृत्विज एकैकस्य कर्तव्यविशेषमुक्त्वा यजमानस्य कर्तव्यविशेषं दर्शयति। "यस्य भूयाꣳसो यज्ञक्रतव इत्याहुः स देवता वृङ्क्त इति यद्यग्निष्टोमः सोमः परस्तात् स्यादुक्थ्यं कुर्वीत यद्युक्थ्यः स्यादतिरात्रं कुर्वीत यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान् भवति" इति। देवतामुद्दिश्य हविस्त्यागमात्रं यज्ञ इत्युच्यते। अङ्गोपाङ्गसहितः सम्पूर्णः क्रतुः। यज्ञश्चासौ क्रतुश्चेति यज्ञक्रतुः। हविस्त्यागसामान्यस्य विद्यमानत्वात् यज्ञोऽपि भवति। अङ्गोपाङ्गविशेषसद्भावात् क्रतुरपि भवति। यथा चूतवृक्षः पनसवृक्ष इति सामान्यविशेषाभ्यां निर्दिश्यते तद्वत्। द्वयोः स्पर्धमानयोर्यजमानयोर्मध्ये यस्य यज्ञक्रतुरङ्गोपाङ्गैर्भूयान् भवति स यजमानः प्रतिस्पर्धिनो देवान् विनाशयति। ततो यदि प्रतिस्पर्धिनो द्वादशस्तोत्रयुक्तोऽग्निष्टोमः परस्तादनुष्ठानसमाप्तौ पर्यवसितो भवेत्तदानीमितरः पञ्चदशस्तोत्रयुक्तमुक्थ्यं कुर्वीत। यदि प्रतिस्पर्धिन उक्थ्यः स्यात् तदानीमितर एकोनत्रिंशत्स्तोत्रयुक्तमतिरात्रं कुर्वीत। एवं सति भूयोभिः स्वकीययज्ञक्रतुभिः प्रतिस्पर्धिनो देवता विनाश्य स्वयं वसुमत्तमो भवति।

•

अत्र विनियोगसंग्रहः।

आसन्येति पुरा होमः स्यात् प्रातरनुवाकतः।
स्पर्धया सुन्वतः सोमसंवेशाद्यतिपञ्चकम्॥

प्रशब्दयुक्तान्याज्यानि महत्त्वत्यनुपक्रमे।
बृहद्रथन्तरे द्वे च विहव्यश्च निमित्ततः॥
नित्यप्रयोगादेतावान् विशेषः स्पर्धयाभवत्।

अथ मीमांसा। दशमाध्यायस्य षष्ठे पादे चिन्तितम्। अ०८।

संसवादौ द्वयोरेकं पृष्ठं यद्वा समुच्चितम्।
एकं प्रकृतिवद्विश्वजितीवान्यत्र चेतरत्॥
वचनाद्विश्वजित्येते साम्नी द्वे स्तोत्रयोर्द्वयोः।
नेहास्ति तत् पृष्ठ एव साहित्यं स्यात् पुनर्विधेः॥

इदमाम्नायते। 'संसवे उभे कुर्यात्. गोसव उभे कुर्यात्. अभिजित्येकाह उभे बृहद्रथन्तरे कुर्याद्' इति। किमत्र बृहद्रन्तरयोरेकं पृष्ठस्तुताविततरदन्यस्तुतौ स्यात् किं वा समुच्चितमुभयं पृष्ठ एवेति संशयः। प्रकृतौ द्वयोर्विकल्पितत्वात् एकस्मिन् प्रयोग एकस्य पृष्ठत्वादन्यत्राऽपि तथात्वं युक्तं. तथा सत्यवशिष्टं साम सर्वपृष्ठविश्वजिन्न्यायेन स्तोत्रान्तरे प्रयोक्तव्यमिति पूर्वः पक्षः। तादृग्वचनाभावेनात्र विश्वजिद्वैषम्यात् प्रकृतिवद्विकल्पे सति पूर्वविधानवैयर्थ्यात् समुच्चय इति राद्धान्तः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः॥७॥

---

निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयतापानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं मे तर्पयतात्मानं मे तर्पयताङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून् मे तर्पयत गृहान् मे तर्पयत गणान् मे तर्पयत सर्वगणं मा तर्पयत तर्पयन्त मा ॥ १ ॥

गणा मे मा वितृषन्नोषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्रः सोमोऽवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम । इन्द्रेण देवीर्वीरुधः संविदाना अनुमन्यताꣳ सवनाय सोममित्याहौषधीभ्य एवैनꣳ स्वायै विशः स्वायै देवतायै निर्याच्याभिषुणोति यो वै सोमस्याभिषूयमाणस्य ॥ २ ॥

प्रथमोऽꣳशुः स्कन्दति स ईश्वर इन्द्रियं वीर्यं प्रजां पशून् यजमानस्य निर्हन्तोस्तमभिमन्त्रयेता माऽस्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्याशिषमेवैतामाशास्त इन्द्रियस्य वीर्यस्य प्रजायै पशूनामनिर्घाताय द्रप्सश्चस्कन्द पृथिवीमनु द्या-

मिमेश्च योनिमनु यश्च पूर्वः तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः॥ ३ ॥

तर्पयत माभिषूयमाणस्य यश्च दश च॥ ८॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके अष्टमोऽनुवाकः ॥*॥

विशेषविधयः प्रोक्ताः स्पर्धायुक्तस्य सप्तमे।

अथाऽष्टमेऽनुवाके उपांशुग्रहार्थस्याभिषवस्यापेक्षिता मन्त्राः उच्यन्ते। कल्पः। 'उत्तरस्यां वर्तन्यां होतृचमसं वसतीवरीभिरभिपूर्य निग्राभ्यान् यजमानं वाचयति निग्राभ्या स्थः देवश्रुतः' इति। दक्षिणस्य हविर्धानस्योत्तरस्मिन् रथचक्रमार्गे वसतीवरीशब्दाभिधेयाभिरद्भिरभिपूर्यते होतृचमसस्तत्राभिपूरणाय निग्राभ्याभिधास्वप्स्वानीयमानासु मन्त्रं वाचयेत्। तत्पाठस्तु। "निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयतापानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं मे तर्पयत आत्मानं मे तर्पयताङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून् मे तर्पयत गृहान् मे तर्पयत गणान् मे तर्पयत सर्वगणं मा तर्पयत तर्पयत मा गणा मे मा वितृषन्" इति। 'हविष्मतीरिमा आपः' इति मन्त्रेण कुम्भे नितरां ग्रहीतव्या आपो निग्राभ्याः। देवैः श्रूयन्त इति देवश्रुतः। हे आपो यूयं तादृश्यः स्थ, ता यूयं मदीयमायुस्तर्पयत। एवं प्राणादिषु योज्यम्। आत्मानं जीवं। अङ्गानि हस्तपादा-

ह्यवयवान्। गणान् भृत्यसमूहान्। सर्वगणं सर्वे पुत्रभृत्यादिसमूहा यस्य मम तादृशं मां। किं बहुना तर्पयत मेत्युपसंहारः। तदीयेन तर्पणेन मदीया गणास्तृषादिरहिता भवन्तु। पूर्वानुवाकोक्ता आसन्यादित्यादिका मन्त्रा हृदे त्वेत्यनुवाकात् पूर्वं द्रष्टव्याः। अयं तु निग्राभ्याः स्थेति मन्त्रस्तस्मादूर्ध्वं द्रष्टव्यः। यदुक्तं सूत्रकारेण। 'धिषणे वीडू इत्यधिषवणफलके अवीवृधं वो मनसा सुजाता इति राजानमेवाभिमन्त्र्य' इति। तमिमं मन्त्रमवतार्य व्याचष्टे। "ओषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्रः सोमोऽवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम। इन्द्रेण देवीर्वीरुधः संविदाना अनुमन्यताꣳ सवनाय सोममित्याहौषधीभ्य एवैनꣳ स्वायै विशः स्वायै देवतायै निर्याच्याभिषुणोति" इति। यः सोमो राजा तस्यौषधय एव विशः प्रजास्थानीयाः, अतएव ता ओषधिरूपा विशः राज्ञः प्रदातोरीश्वराः सोमं राजानमीश्वरमस्मभ्यं दातुं समर्थाः, सोमश्चेन्द्रदेवत्यः, तस्मादोषधीन्द्रविषयेणावीवृधमित्यादिमन्त्रेण सोमाभिमन्त्रणं युक्तं। तस्य च मन्त्रस्यायमर्थः। हे सुजाताः सर्वजनोपकारित्वेन शोभनजन्मानः, विशेषतश्च ऋतप्रजाताः यज्ञार्थं प्रकर्षेणोत्पन्नाः, तादृश्यो हे ओषधयः वो युष्मान् मनसा अवीवृधं वर्धयामः। वो युष्माकं भग इत् भजन एव वयं स्याम, सर्वदा युष्मद्भजनरूपे कर्मणि तिष्ठामेत्यर्थः। देवीर्वीरुधः सोमवल्लीरूपा देव्यः इन्द्रेण संविदानाः एकमत्यं गताः सवनाय प्रातःसवनकर्मणे सोममनुमन्यन्तां इत्येतन्मन्त्रपाठेनौषधिरूपा सोमस्य या विट् स्वकीयप्रजा या चेन्द्ररूपा सोमस्य स्वकीय-

देवता तस्याः प्रजाया देवतायाश्च सकाशात् सोमं विशेषेण याचित्वा-ऽभिषुणोति। यदुक्तं सूत्रकारेण। 'आ मास्कानिति प्रथमस्रुत-मंशुमभिमन्त्रयते' इति। तदिदं विधत्ते। "यो वै सोमस्याऽभिषू-यमाणस्य प्रथमोऽंशुः स्कन्दति स ईश्वर इन्द्रियं वीर्यं प्रजां पशून् यजमानस्य निर्हन्तोस्तमभिमन्त्रयेता माऽस्कान्त्सह प्रजया सह राय-स्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्याशिषमेवैतामाशास्त इन्द्रि-यस्य वीर्यस्य प्रजायै पशूनामनिर्घाताय" इति। अधिषवणफलकयो-रवस्थाप्य ग्रावभिरभिषूयमाणस्य सोमस्य यः प्रथमोऽंशुः लेशो भूमौ पतति स लेशो यजमानस्येन्द्रियादीन्निःशेषेण विनाशयितुं समर्थः, तस्मात् परिहारार्थं आ मास्कानित्यादिमन्त्रेण तमंशुमभिमन्त्रयेत। तस्य च मन्त्रस्यायमर्थः। हे भूमौ पतितांशो त्वं प्रजया धनसमृद्ध्या च सह मां प्रत्यास्कान् पुनरागतोऽसि, तस्मात् मदीयमिन्द्रियं वीर्यं च मा निर्वधीः मा विनाशयेति। अनेनाभिमन्त्रणेन प्रजादीना-मविनाशायाशिषमेवाशास्ते। यदुक्तं सूत्रकारेण। 'द्रप्सश्चस्कन्द' इति विप्रुषः इत्यभिमन्त्रयत इत्यनुवर्तते। तमिमं मन्त्रं पठति। "द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनिमनु यश्च पूर्वः तृतीयं योनिमनुसञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः" इति। द्रप्सः सोमरसबिन्दुः पृथिवीमनु चस्कन्द पृथिव्यां पतित इत्यर्थः। स द्रप्सः हुतः सन् स्थानत्रयेऽनुसञ्चरति द्युलोकेऽन्तरिक्षलोके भूलोके च। तदेतदभिप्रेत्य स्मर्यते स्म॥

'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'॥ इति।

योऽयमर्थो द्यामित्यादिनाऽभिधीयते, द्यामिमश्च योनिमनु अन्तरिक्षरूपमिदं स्थानमनुसञ्चरति। यश्च पूर्वो योनिः पृथिवीमनु चस्कन्देति पूर्वोक्तस्थानविशेषः तमप्यनुसञ्चरति। तृतीयं योनिं द्युलोकरूपमादित्यस्थानमनुसञ्चरति। तमिमन्त्रिषु स्थानेष्वनुसञ्चरन्तं द्रप्सं जुहोमि, मनसा कृतमिव भावयामि। कुत्र होम इति, तदुच्यते। अनु सप्त होत्रा इति। यस्यां दिशि द्रप्सः पतितः तद्व्यतिरिक्तहोमयोग्याः सप्त दिशो याः सन्ति तास्वनुक्रमेण जुहोमि। यथाऽयं द्रप्सो कृतः आदित्यादिस्थानत्रयेषु सञ्चरन्नुपकरोति तथा भावयामीत्यर्थः। त एते मन्त्रा 'वाचस्पतये पवस्व' इत्यस्मादनुवाकात् पूर्वं द्रष्टव्याः।

अत्र विनियोगसंग्रहः।

निग्राभ्यादि हृषन्नन्तं निग्राभ्याग्रहणे सति।
स्वामिनं वाचयेत्सोमं मन्त्रयेत ह्यवीवृधम्॥
आमास्कानभिमर्श्यांशुर्द्रप्सो विन्दन्तु मन्त्रयेत्।
चत्वार एते मन्त्राः स्युरष्टमे त्वनुवाकके॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके अष्टमोऽनुवाकः॥८॥

यो वै देवान् देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु यान् प्राचीनमाग्रयणात् ग्रहान् गृह्णीयात् तानुपाꣳशु गृह्णीयाद्यान् ऊर्ध्वाꣳस्तानुपब्दिमतो देवानेव तद्देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येष्वग्निः प्रातःसवने पात्वस्मान् वैश्वानरो महिना विश्वशम्भूः। स नः पावको द्रविणं दधातु ॥ १ ॥

आयुष्मन्तः सहभक्षाः स्याम विश्वेदेवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः। आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्याम। इदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमैरयन्त। ते सौधन्वनाः सुवरानशानाः स्विष्टिन्नो अभिवसीयो नयन्तु। आयतनवतीर्वा अन्या आहुतयो ह्रूयन्तेऽनायतना अन्या या आघारवतीस्ता आयतनवतीर्याः ॥ २ ॥

सौम्यास्ता अनायतना ऐन्द्रवायवमादायाघारमाघारयेदध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृत-

वद्देव सोमेति सौम्या एव तदाहुतीरायतनवतीः करोत्यायतनवान् भवति य एवं वेदाथो द्यावापृथिवी एव घृतेन व्युनत्ति ते व्युत्ते उपजीवनीये भवत उपजीवनीयो भवति ॥ ३ ॥

य एवं वेदैष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिं मनुः पुत्रेभ्यो दायं व्यभजत्स नाभानेदिष्ठं ब्रह्मचर्यं वसन्तं निरभजत्स आगच्छत्सोऽब्रवीत् कथा मा निरभागिति न त्वा निरभाक्षमित्यब्रवीदङ्गिरस इमे सत्रमासते ते ॥ ४ ॥

सुवर्गं लोकं न प्रजानन्ति तेभ्य इदं ब्राह्मणं ब्रूहि ते सुवर्गं लोकं यन्तो य एषां पशवस्ताꣳस्ते दास्यन्तीति तदेभ्योऽब्रवीत् ते सुवर्गं लोकं यन्तो य एषां पशव आसन्तानस्मा अददुस्तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै ॥ ५ ॥

मह्यमिमानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीत् यद्यज्ञवास्तौ हीयते मम वै तदिति तस्मात् यज्ञवास्तु नाभ्यवेत्यꣳ सोऽब्रवीद्यज्ञे माऽऽभजाथ ते पशून् नाभिमꣳस्य इति तस्मा एतं मन्थिनः सꣳस्रावमजुहोत्

ततो वै तस्य रुद्रः पशून्नाभिमन्यत यश्चैतमेवं विद्वान् मन्थिनः सꣳस्रावं जुहोति न तस्य रुद्रः पशूनभिमन्यते ॥ ६ ॥

दधात्यायतनवतीयो उपजीवनीयो भवति तेऽदुवै यश्चैतमेकादश च ॥ ९ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥*॥

उपांशुग्रहसंयुक्ता मन्त्रा अष्टम ईरिताः।

अथ नवमे सवनाहुत्यादिमन्त्रा वक्तव्याः। तत्रादौ तावत् ग्रहमन्त्राणां क्रमेण नीचमुच्चं च ध्वनिं विधत्ते। "यो वै देवान् देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु यान् प्राचीनमाग्रयणात् ग्रहान् गृह्णीयात् तानुपाꣳशु गृह्णीयाद्यान् ऊर्ध्वाꣳस्तानुपब्दिमतो देवानेव तद्देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु" इति। देवानां यशः कीर्तिर्देवयशसं, तेन देवान् यो यजमानः अर्पयति योजयति, तथा मनुष्यानपि मनुष्ययशसेन योजयति, स स्वर्गे देवेषु मध्ये देवयशसवानेव भवति, भूलोके मनुष्येषु मध्ये मनुष्ययशसवानेव भवति। तदुभयसिद्ध्यर्थं क उपाय इति, तदुच्यते। आग्रयणग्रहात् प्राचीनं पूर्वस्मिन् काले यान् ग्रहानंशूपांश्वन्तर्यामैन्द्रवायवादीन् गृह्णाति तान् सर्वा-

नुपांशु यथा भवति तथा गृह्णीयात्। मन्त्रा यथा पार्श्वस्थैर्न श्रूयन्ते तथोच्चाय गृह्णीयादित्यर्थः। यानाग्रयणग्रहादूर्ध्वभाविनः उक्थ्यादीन् ग्रहान् गृह्णीयात् तानुपब्दिमतो गृह्णीयात्, समीपस्थैरीषत्श्रवणमुपब्दिः, तथोच्चार्य गृह्णीयादित्यर्थः। तत्रोपांशूच्चारणेन देवानां कीर्तिप्राप्तिः, ईषदुच्चध्वनिना मनुष्याणां कीर्तिप्राप्तिः, तेनोभयेन स्वस्याऽपि लोकद्वये कीर्तिर्भवति। कल्पः। 'अग्निः प्रातःसवने पात्वस्मानिति सꣳस्थिते सवन आहुतिं जुहोति' इति। पाठस्तु। "अग्निः प्रातःसवने पात्वस्मान् वैश्वानरो महिना विश्वशम्भूः। स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम" इति। अयमग्निः प्रातःसवनेऽस्माभिरनुष्ठिते सत्यस्मान् पातु। वैश्वानरः विश्वेषां नराणां स्वामित्वेन सम्बन्धी, महिना स्वकीयेन महिम्ना विश्वशम्भूः विश्वस्य सुखप्रापकः, स तादृशोऽग्निरस्मभ्यं द्रविणं दधातु धनं दद्यात्। कीदृशः पावकः शोधयिता, पापक्षयं कृत्वाऽस्मान् शोधयतीत्यर्थः। किञ्च वयमायुष्मन्तो दीर्घायुषः सहभक्षाः भक्षयितृभिः सर्वैः सहिताश्च सर्वशः स्याम। सोऽयं प्रातःसवनसमाप्तौ होममन्त्रः। कल्पः। 'विश्वेदेवा मरुत इति संस्थिते सवन आहुतिं जुहोति' इति। पाठस्तु। "विश्वेदेवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः। आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्याम" इति। ये मरुतो यश्चेन्द्रस्ते विश्वेदेवाः सर्वे देवाः अस्मिन् द्वितीये माध्यन्दिने नोऽस्मान् न जह्युः मा परित्यजेयुः। वयमप्यायुष्मन्तः दीर्घायुषः येषां देवानां स्तोत्रादिकं वदन्तस्तेषां सुमतावनुग्रहबुद्धौ स्याम तिष्ठेम। सोऽयं माध्यन्दिनसवनसमाप्तौ

होममन्त्रः। कल्पः। 'इदं तृतीयꣳ सवनं कवीनामिति संस्थिते सवन आहुतिं जुहोति' इति। पाठस्तु। "इदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमैरयन्त। ते सौधन्वनाः सुवरानशानाः स्विष्टिन्नो अभिवसीयो नयन्तु" इति। कवीनां विदुषामृत्विजां सम्बन्धि यदिदं तृतीयसवनं तदिदं देवाः वसीयः वसुमत्तरं कृत्वा नः अस्माकं या स्विष्टिः शोभनो यागः तां स्विष्टिमभिलक्ष्य नयन्तु प्रापयन्तु। कीदृशा देवाः तदुच्यते, ये देवाः चमसञ्चमसगणं ऐरयन्त प्रेरितवन्तः ते देवा सौधन्वनाः सुधन्वन इन्द्रस्य सम्बन्धिन ऋभुनामानः, सुवरानशानाः स्वर्गं प्राप्नुवन्तः, तादृशा देवाः नयन्त्वित्यन्वयः। सोऽयं तृतीयवनसमाप्तौ होममन्त्रः। एतेषु मन्त्रेष्वग्निः प्रातःसवन इत्ययमाद्यो मन्त्र 'ओमासश्चर्षणीधृतः' इत्यनुवाकादूर्ध्वं द्रष्टव्यः। विश्वेदेवा इत्ययं द्वितीयो मन्त्रो महाꣳ इन्द्रो नृवदित्यनुवाकादूर्द्ध्वं द्रष्टव्यः। इदं तृतीयं सवनमिति तृतीयो मन्त्रः *बृहस्पतिसुतस्येत्यनुवाकादूर्द्ध्वं द्रष्टव्यः। यदुक्तं सूत्रकारेण। 'अध्वरो यज्ञोऽयमस्तु देवा इति परिप्लवाघारमाघारयति' इति। परिप्लवशब्देन होमसाधनं काष्ठपात्रमुच्यते। तमिममाघारं विधत्ते। "आयतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्या या आघारवतीस्ता आयतनवतीर्याः सौम्यास्ता अनायतना ऐन्द्रवायवमादायाघारमाघारयेदध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाऽध्वरोऽसि स पिन्वस्व घृतवद्देव सोमेति सौम्या एव तदाहुतीरायतनवतीः

* बृहस्पतिसुतस्येत्येतस्य स्थाने धामाभ्रतिरिति पाठः सो० २ पु०।

करोत्यायतनवान् भवति य एवं वेदाथो द्यावापृथिवी एव घृतेन व्युनत्ति ते व्युत्ते उपजीवनीये भवत उपजीवनीयो भवति य एवं वेद" इति। हूयमाना आहुतयो द्विविधाः आयतनयुक्तास्त-द्रहितास्य । आघारेण व्यवस्थापितं होमस्थानं होतव्यानामायतनं यत् तत् ब्राह्मणे पुरोडाशाद्याहुतीनामस्ति, आघारस्य प्रकरणे विहितत्वात् । सौम्यास्त्वंशूपांश्वन्तर्यामग्रहा आघाररहितत्वादनाय-तनाः। तद्वदैन्द्रवायवग्रहाद्याहुतीनामप्यनायतनवत्त्वं प्राप्तम् । अत-स्तद्व्यावृत्त्यर्थं यदैन्द्रवायवं होतुमादत्ते तदा वामहस्ते तं धृत्वा दक्षिणहस्तेन 'अध्वरो यज्ञः' इत्यादिमन्त्रेणाघारं जुहुयात् । दक्षिणं परिधिसन्धिमन्ववहृत्य प्राञ्चमुदञ्चं सोमरसं पातयेत्. सोऽयमाघारः। मन्त्रार्थस्तु । हे देवा अयमस्माकं यज्ञः अध्वरो हिंसकरहितोऽस्तु । किमर्थमिति तदुच्यते । ओषधीभ्यः, पशवे, जनाय चास्माकं सर्व-प्राणिभ्यश्च हे सोम त्वमध्वरो हिंसारहितोऽसीति घृतवत् सि-ञ्चेति तत्तेन सौम्याः ऐन्द्रवायवादिग्रहसम्बन्धिन्योऽप्याहुतीराय-तनवतीः करोति। यश्चैवं वेद सोऽप्यायतनवान् भवति । अपि च घृतवदित्युक्त्या द्यावापृथिव्यावपि घृतेन विविधं क्लेदयति, ते च विविधं क्लेदिते सत्यौ सर्वेषां प्राणिनामुपजीवनीये भवतः। य एवं वेद सोऽप्युपजीवनीयो भवति। यदुक्तं सूत्रकारेण । 'उत्तरार्धात् प्रतिप्रस्थाता बहिः परिध्यङ्गारं निर्वर्त्य तस्मिन् मन्थिनः संस्रावं जुहोत्येष ते रुद्र भागो यं निरयाचथाः' इति। पाठस्तु । "एष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिं" इति। हे रुद्र क्रूरदेव एष

संस्रावस्तव भागः, तं भागं निरयाचथाः देवेभ्यो निष्कृष्य तवैवासाधारणत्वेन याचितवानसि। तत् याचनं ब्राह्मणे स्पष्टीभविष्यति। तं याचितं भागं सेवस्व। त्वं तु गवां पालनं, धनस्य पुष्टिं, शोभनपुत्रं, संवत्सरनिष्पाद्यानामोषधीनामविनाशञ्च विदेः जानासि। तस्मात् सर्वमस्मदर्थं सम्पादयेत्यभिप्रायः। तमिमं संस्रावहोमं विधातुं पीठिकामारचयति। "मनुः पुत्रेभ्यो दायं व्यभजत्स नाभानेदिष्ठं ब्रह्मचर्यं वसन्तं निरभजत्स आगच्छत्सोऽब्रवीत् कथा मा निरभागिति न त्वा निरभाक्षमित्यब्रवीत्" इति। मनोर्बहवः पुत्राः। तेषु कनिष्ठो नाभानेदिष्ठनामको बालो वेदाध्ययनं करोति। तदानीं पिता प्रवृद्धेभ्यः पुत्रेभ्यः स्वकीयं धनं विजज्य दत्तवान्। अध्ययनपरं बालं भागरहितमकरोत्। स च बाल आगत्य केन हेतुना मां भागरहितमकार्षीरिति पितरमब्रवीत्। स च पिता त्वां भागरहितं न कृतवानस्मीत्यब्रवीत्। उक्त्वा च तत्प्राप्त्युपायं पुत्रायोपदिदेश। अनन्तरं च पुत्रस्तेनोपायेन भागं प्राप्तवानित्येतद्दर्शयति। "अङ्गिरस इमे सत्रमासते ते सुवर्गं लोकं न प्रजानन्ति तेभ्य इदं ब्राह्मणं ब्रूहि ते सुवर्गं लोकं यन्तो य एषां पशवस्ताꣳस्ते दास्यन्तीति तदेभ्योऽब्रवीत् ते सुवर्गं लोकं यन्तो य एषां पशव आसन्तानस्मा अददुः" इति। अङ्गिरोनामका इमे महर्षयः सत्रमनुतिष्ठन्ति। ते तु स्वर्गप्राप्तिसाधनानां नाभानेदिष्ठनामकशस्त्रादीनामपरिज्ञानात् स्वर्गं न जानन्ति। अतस्तेभ्य इदं त्वयाऽधीतं शस्त्रादिप्रतिपादकं ब्राह्मणं ब्रूहि। तेऽपि सत्रं परिसमाप्य स्वर्गं गच्छन्तो यागोपयुक्तेभ्योऽवशिष्टान् स्वकीयान् पशून् सर्वान् तुभ्यं

दास्यन्ति। सोऽयं भागप्राप्त्युपायः। इत्येवं प्रोक्तः पुत्रः इदं ब्राह्मणं तेभ्योऽभिदधे। ततस्तदीयानवशिष्टान् सर्वान् पशून् लब्धवान्। अथ नाभानेदिष्ठस्य रुद्रेण सह संवादं दर्शयति। "तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै मह्यमिमानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीत् यद्यज्ञवास्तौ हीयते मम वै तदिति तस्मात् यज्ञवास्तु नाभ्यवेत्यꣳसोऽब्रवीत् यज्ञे माऽऽभजाथ ते पशून् नाभिमꣳस्य इति तस्मा एतं मन्थिनः सꣳस्रावमजुहोत् ततो वै तस्य रुद्रः पशून्नाभ्यमन्यत" इति। अङ्गिरोभिर्दत्तान् पशून् स्वगृहे नेतुं तदीये यज्ञभुवि यज्ञशेषैः पशुभिः सञ्चरन्तं नाभानेदिष्ठं रुद्र आगत्य मदीया एते पशव इत्यब्रवीत्। ततः स नाभानेदिष्ठः मह्यमङ्गिरस इमान् पशून् दत्तवन्त इत्यब्रवीत्। ततः स रुद्रस्तस्य यज्ञशेषस्य द्रव्यस्य तेऽङ्गिरसो न स्वामिनः, तस्मात् तैर्दत्तं पशुद्रव्यं अस्वामिदत्तत्वात् तव न योग्यमित्यब्रवीत्। कस्तर्हि स्वामीति चेत्। शृणु। यद्द्रव्यं यज्ञभूमौ हीयते यज्ञसमाप्तेरूर्ध्वमवशिष्यते तत्सर्वं ममैव स्वं। तस्मात् ममानुज्ञामन्तरेण यज्ञभूमिः केनापि न प्रवेष्टव्या। यदि तव शिष्टपश्वपेक्षाऽस्ति तर्हि मां यज्ञे भागिनं कुरु, ततस्तुभ्यं दत्तान् पशून् न मारयिष्यामि इति रुद्रोऽब्रवीत्। ततो नाभानेदिष्ठस्तस्मै रुद्रायैतं मन्थिनः संस्रावमजुहोत्। मन्थिग्रहं हुत्वा तत्पात्रस्थं द्रव्यशेषं परिधेर्बहिः स्थापितेऽङ्गारे हुतवान्। ततस्तुष्टो रुद्रस्तस्य नाभानेदिष्ठस्य पशून्नैव हिंसितवान्। आख्यानं परिसमाप्य विधत्ते। "यश्चैतमेवं विद्वान् मन्थिनः सꣳस्रावं जुहोति न तत्र रुद्रः पशू-

नभिमन्यत इति। ऐन्द्रवायवादिषूक्थ्यान्तेषु ग्रहेषु गृहीतेषु ऋतुपात्रयोः सोमग्रहणात् प्रागेवैन्द्रवायवमन्थिग्रहप्रचारस्य कालत्वात् 'मधुश्च माधवश्च' इत्येतस्मादनुवाकात् प्रागेव 'अध्वरो यज्ञः' इत्याघारमन्त्रः 'एष ते रुद्र भागः' इति संस्रावमन्त्रश्च द्रष्टव्यः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः॥९॥

---

जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक्। यद्वाचो मधुमत्तस्मिन् माधाः स्वाहा सरस्वत्यै। ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरं। बृहद्गायत्रवर्तनि। यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुर्बाहुच्युतो धिषणयोरुपस्थात्। अध्वर्योर्वा परि यस्ते पवित्रात् स्वाहाकृतमिन्द्राय तं जुहोमि। यो द्रप्सो अꣳशुः पतितः पृथिव्यां परिवापात्॥१॥

पुरोडाशात् करम्भात्। धानासोमान्मन्थिन इन्द्र शुक्रात् स्वाहाकृतमिन्द्राय तं जुहोमि। यस्ते

द्रप्सो मधुमाꣳ इन्द्रियावान् स्वाहाकृतः पुनरप्येति देवान्। दिवः पृथिव्याः पर्यन्तरिक्षात् स्वाहाकृतमिन्द्राय तं जुहोमि। अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इत्याहुर्वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान् पशुषु प्रजां मयि॥ २॥

च यजमाने चेत्याह वाचमेव तत् यज्ञमुखे युनक्ति वास्तु वा एतद्यज्ञस्य क्रियते यद्ग्रहान् गृहीत्वा बहिष्पवमानꣳ सर्पन्ति पराञ्चो हि यन्ति पराचीभिः स्तुवते वैष्णव्यर्चा पुनरेत्योपतिष्ठते यज्ञो वै विष्णुर्यज्ञमेवाकर्विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य प्र ते धारा मधुश्चुत उत्सन्दुह्रते अक्षितमित्याह यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेनाप्याययति॥ ३॥

परिवापात् प्रजां मयि दुह्रते चतुर्दश॥ १०॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः॥ * ॥

आघारसंस्रावमन्त्रौ नवमे कथितावुभौ।

अथ दशमे प्रवृतहोमादिमन्त्रा उच्यन्ते। कल्पः। 'प्रवृतः प्रवृत-होमौ जुहोति जुष्टो वाचो भूयासमृचा स्तोमꣳ समर्धयेत्येताभ्यां' इति। षष्ठे काण्डे यद्विहितं 'ऋत्विजो वृणीते छन्दाꣳस्येव वृणीते' इति तत्र यो यो वृतो भवति तेन तेनेमौ होमौ कर्तव्यौ। तत्र प्रथममन्त्रपाठस्तु। "जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक्। यद्वाचो मधुमत्तस्मिन् माधाः स्वाहा सरस्वत्यै" इति। अहं वाग्देवतायाः प्रियो भूयासं, तथा वाचां पालको यो देवस्तस्याऽपि प्रियो भूयासं। हे वाग्देवि शब्दरूपाया वाचः सम्बन्धि यत् मधुरं पदं तस्मिन् माधाः मां स्थापय, सरस्वत्यै तुभ्यमेतद्धुतमस्तु। द्वितीयमन्त्रपाठस्तु। "ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरं। बृहद्गायत्रवर्तनि" इति। हे वाग्देवि ऋचा योनिभूतया स्तोमं स्तोत्रं सामावृत्तिं वा समर्धय समृद्धिं कुरु। तथा गायत्रेण साम्ना सहितं रथन्तरं साम समर्धय। गायत्रस्य वर्तनी मार्गो यस्य बृहतः साम्नः तद्गायत्रवर्तनि। तादृशं यथा भवति तथा बृहत्साम समर्धय। कर्मानुष्ठानाय वृतेष्वृत्विक्षु ऋक्सामादिगतं यद्वैकल्यं तत्परिहृत्य समृद्धं कुर्विति तात्पर्यार्थः। कल्पः। 'यस्ते द्रप्सो यो द्रप्स इत्येतैः प्रति मन्त्रं वैप्रुषहोमान् जुहोति' इति। यस्ते द्रप्स इत्येतद्द्वयोः प्रतीकं, ततस्त्रयो मन्त्राः। तैर्मन्त्रैः पवमानार्थं प्रसर्पणात् पूर्वं जुहुयात्। 'वैप्रुषान् सप्त होतारं च हुत्वा बहिष्पवमानवन्माध्यन्दिनं पवमानं प्रसर्पन्ति' इति सूत्रकारेणोक्तत्वात्। तत्र प्रथमामृचमाह। "यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुर्बाहुच्युतो धिष-

णयोरुपस्थात्। अध्वर्योर्वा परि यस्ते पवित्रात् स्वाहाकृतमिन्द्राय तं जुहोमि" इति। हे सोम तव सम्बन्धी यो द्रप्सो रसबिन्दुरथ-वांशुरधिषवणफलकयोरुपस्थादुपरिभागात् स्कन्दति भूमौ पतति। अथवाध्वर्योर्बाहुच्युतः स्कन्दति। अथवा यस्ते रसबिन्दुः पवित्रा-द्दशापवित्राद्वा भूमौ पतति, तं द्रप्सं तं चांशुं इन्द्राय स्वाहा-कृतं स्वाहाकारेण समर्पितं कृत्वा जुहोमि। अथ द्वितीया-माह। "यो द्रप्सो अꣳशुः पतितः पृथिव्यां परिवापात् पुरो-डाशात् करम्भात्। धानासोमान्मन्थिन इन्द्र शुक्रात् स्वाहा-कृतमिन्द्राय तं जुहोमि" इति। परिवापादीनि सवनीयपुरोडाश-द्रव्याणि। परिवापो लाजानां समूहः। पुरोडाशः प्रसिद्धः। करम्भः सक्तवः। धाना भृष्टयवतण्डुलाः। सोमः प्रसिद्धः। धा-नाश्च सोमश्च धानासोमं तस्मात्। मन्थी शुक्रश्च ग्रहौ, हे इन्द्र उक्तानां परिवापादीनां सकाशात् यो द्रप्सो भूमौ पतितः, यश्चां-शुर्भूमौ पतितः, तं द्रप्सं चाशुं स्वाहाकारेण समर्पितं कृत्वा तुभ्य-मिन्द्राय जुहोमि। अथ तृतीयामाह। "यस्ते द्रप्सो मधुमाꣳ इन्द्रियावान् स्वाहाकृतः पुनरप्येति देवान्। दिवः पृथिव्याः पर्यन्तरिक्षात् स्वाहाकृतमिन्द्राय तं जुहोमि" इति। हे सोम यस्ते द्रप्सो मधुमान् माधुर्यवान्, इन्द्रियावान् इन्द्रियवृद्धिकारी, मया स्वाहाकृतः सन् दिवो वा पृथिव्या वा अन्तरिक्षात् वा परितः पतितः, ततः तस्मात् सर्वस्मादागत्य पुनर्देवानप्येति प्राप्नोति, तं द्रप्सं इन्द्राय स्वाहाकारेण समर्पितं कृत्वा जुहोमि। यदुक्तं सूत्र-कारेण 'उदञ्चः प्रक्रा बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः

सर्पन्त्यध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं यजमानः’ इति। ‘पूर्वोऽध्वर्युर्बर्हिर्मुष्टिं धून्वन्त्सर्पति वागग्रेगा अग्र एतु’ इति च। तदेतद्विधत्ते। “अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इत्याहुर्वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान् पशुषु प्रजां मयि च यजमाने चेत्याह वाचमेव तत् यज्ञमुखे युनक्ति” इति। बहिष्पवमानाय सर्पतामृत्विजां मध्येऽध्वर्युरेव प्रथमो युज्यते, पूर्वभावी सन् सर्पणे प्रवर्तते, तस्मात् तेनाध्वर्युणा स्तोमो योक्तव्यः। बहिष्पवमानस्तोत्रं प्रस्तोत्रादिषु योजनीयमित्यभिज्ञा आहुः। तद्योजनाय वागग्रेगा इति मन्त्रं पठेत्। अग्रे गन्तुं शक्नोतीत्यग्रेगाः। तादृशी वाग्देवता ऋत्विजामग्रे गच्छतु। कथम्भूता वाक्, ऋजुगा देवेभ्यः देवप्राप्त्यर्थं ऋजुना मार्गेण गच्छन्ती। मयि अध्वर्यौ यशो दधती कीर्तिं स्थापयन्ती। पशुषु गवादिषु प्राणान् सुस्थिरं दधती। मयि च यजमाने च पुत्रादिरूपां प्रजां दधती इति मन्त्रस्यार्थः। तेन मन्त्रपाठेनाध्वर्युर्यज्ञमुखे बहिष्पवमानारम्भे वाचमेवं योजितवान् भवति। बहिष्पवमानसर्पणस्य कालं विधत्ते। “वास्तु वा एतत् यज्ञस्य क्रियते यद्ग्रहान् गृहीत्वा बहिष्पवमानꣳ सर्पन्ति” इति। ऐन्द्रवायवादिकान् ग्रहान् पूर्वभाविनः सर्वान् गृहीत्वा बहिष्पवमानमृत्विजः सर्पन्ति इति। यदेतेन यज्ञस्य वा वास्तु क्रियते गृहरूपं स्थानं कृतं भवति, तस्मादुक्तग्रहादूर्ध्वं सर्पेयुरित्यर्थः। यदुक्तं सूत्रकारेण। ‘वैष्णव्यर्चा पुनरेत्य यजमानो राजानमुपतिष्ठते विष्णो त्वं नो अन्तमः’ इति। तदेतद्विधत्ते। “पराञ्चो हि यन्ति पराची-

भिः स्तुवते वैष्णव्यर्चा पुनरेत्योपतिष्ठते यज्ञो वै विष्णुर्यज्ञमेवाक:" इति। हि यस्मात् पराञ्चः पुनरावृत्तिरहिता ऋत्विजो बहिष्पवमानाय यन्ति सर्पन्ति, यस्माच्च सामगाः पराचीभिः पुनरावृत्तिरहिताभिः बहिष्पवमानस्तोत्राधारभूताभिः 'उपास्मै गायत' इत्यादिभिर्नवभिर्ऋग्भिः स्तुवते, तस्मात् पराङ्क्तेन यज्ञविघ्नो माभूदित्यभिप्रेत्य पुनः सोमसमीपमागत्य यजमान उपतिष्ठेत। विष्णोर्व्याप्तत्वेन यज्ञस्वरूपत्वात् वैष्णवमन्त्रेण यज्ञमेव पुनरपि प्रवर्तितवान् भवति। तं मन्त्रं पठित्वा तात्पर्यं दर्शयति। "विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितमित्याह यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेनाप्याययति" इति। हे विष्णो त्वं नोऽस्माकमन्तमः अन्तिकतमः प्रत्यासन्नतमः। हे सहन्त्य अस्मदपराधं सहिष्णो, शर्म सुखमस्मभ्यं यच्छ। ते तव सम्बन्धिनः सोमरसस्य धाराः मधुश्चुतः मधुरं रसं क्षरन्त्यः उत्सं अक्षितं उपक्षयरहितं यथा भवति तथा प्रदुह्रते प्रकर्षेण दुहन्ताम्। एतेन मन्त्रपाठेन पूर्वेषु पात्रेषु गृहीतस्यास्य सोमस्य यदेव स्वरूपं चिरावस्थानेन उपशुष्यति तत्सर्वमाप्यायितमेव भवति। 'सन्ते प्राणः' इत्यस्मिन्ननुवाके 'सं यज्ञपतिराशिषा' इति मन्त्रेण पशोः श्रोण्यामञ्जनं विहितं, 'घृतेनाक्तौ' इति मन्त्रेण पशोः शिरस्यञ्जनं विहितं, तयोरुभयोर्मध्ये 'ऋत्विजो वृणीते' इति वरणस्य विहितत्वात् 'जुष्टो वाचः' इत्यादिकौ प्रवृतहोममन्त्रौ तयोरञ्जनमन्त्रयोर्मध्ये द्रष्टव्यौ। ऋतुग्रहणात् पूर्वं बहिष्पवमानस्यानुष्ठेयत्वात् तदङ्गमन्त्राणां 'यस्ते द्रप्सः' इत्यादीनां 'मधुश्च' इत्येतस्मादनुवाकात् प्राचीनं स्थानं द्रष्टव्यम्॥

अत्र विनियोगसंग्रहः।

जुष्टो द्वे प्रवृतो योऽसौ जुहुयात् प्रवृताहुती।
यस्त्रिभिर्वैप्रुषो होमो वागध्वर्युर्ब्रवीति हि॥
विष्णो सोमं स्पृशेदत्र मन्त्राः सप्त प्रकीर्तिताः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये द्वतीयकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः॥१०॥

---

अ॒ग्निना॑ र॒यिम॑श्नव॒त् पोष॑मे॒व दि॒वे दि॑वे। य॒शसं॑ वी॒रव॑त्तमं। गोमा॑ँ अ॒ग्नेऽवि॑माँ अ॒श्वी य॒ज्ञो नृ॒वत्स॑खा॒ सद॒मिद॑प्रमृ॒ष्यः। इडा॑वाँ ए॒षो अ॑सुर प्र॒जावा॑न् दी॒र्घो र॒यिः पृ॑थुबु॒ध्नः स॒भावा॑न्। आप्या॑यस्व॒ सन्तें। इ॒ह त्वष्टा॑रमग्रि॒यं वि॒श्वरू॑प॒मुप॑ह्वये। अ॒स्माक॑मस्तु॒ केव॑लः। तन्न॑स्तु॒रीय॒मध॑ पोषयि॒त्नु देव॑ त्वष्ट॒र्वि॑रा॒णः स्य॑स्व। यतो॑ वी॒रः॥१॥

क॒र्म॒ण्यः॑ सु॒दक्षो॑ यु॒क्तग्रा॑वा॒ जाय॑ते दे॒वका॑मः शि॒वस्त्वष्ट॑रि॒हाग॑हि वि॒भुः पोष॑ उ॒त त्मना॑। य॒ज्ञेय॑ज्ञे न॒ उद॑व पि॒शङ्ग॑रूपः सु॒भरो॑ वयो॒धाः श्रु॒ष्टी वी॒रो जा-

यते देवकामः । प्रजां त्वष्टा विष्यतु नाभिमस्मेऽथा देवानामप्येतु पाथः। प्र णो देव्या नो दिवः। पीपिवाꣳसꣳ सरस्वतः स्तनं यो विश्वदर्शतः। धुक्षीमहि प्रजामिषं॥ २॥

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः। तेषां ते सुम्नमीमहे। यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः। यस्य व्रते पुष्टिपतिर्निविष्टस्तꣳ सरस्वन्तमवसे हुवेम। दिव्यꣳ सुपर्णं वयसं बृहन्तमपां गर्भं वृषभमोषधीनां। अभीपतो वृष्ट्या तर्पयन्तं तꣳ सरस्वन्तमवसे हुवेम। सिनीवालि पृथुष्टुके या देवानामसि स्वसा। जुषस्व हव्यं॥ ३ ॥

आहुतं प्रजां देवि दिदिड्ढि नः। या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी। तस्यै विश्पत्नियै हविः सिनीवाल्यै जुहोतन। इन्द्रं वो विश्वतस्परीन्द्रं नरः। असितवर्णा हरयः सुपर्णा मिहो वसाना दिवमुत्पतन्ति। त आववृत्रन्त्सदनानि कृत्वाऽऽदित् पृथिवी घृतैर्व्युद्यते। हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान्। शुचिभ्राजा उषसः॥ ४ ॥

नवेदा यशस्वतीरपस्युवो न सत्याः। आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदं। शिवा-

भिर्न स्मयमानाभिरागात् पतन्ति मिहः स्तनयन्त्यभ्राः। वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति। यदेषां वृष्टिरसर्जि। पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित्सानुरेजत स्वने वः। यत् क्रीडथ मरुतः॥५॥

ऋष्टिमन्त आप इव सध्रियञ्चो धवध्वे। अभिक्रन्द स्तनय गर्भमाधा उदन्वता परिदीया रथेन। दृतिꣳ सुकर्ष विषितं न्यञ्चꣳ समा भवन्तूद्वता निपादाः। त्वन्त्याचिदच्युताऽग्ने पशुर्न यवसे। धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः। अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम। याश्च॥६॥

माया मायिनां विश्वमिन्व त्वे पूर्वीः सन्दधुः पृष्टबन्धो। दिवो नो वृष्टिं मरुतो ररीध्वं प्रपिन्वत वृष्णो अश्वस्य धाराः। अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः। पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः। अत्यन्न मिहे विनयन्ति वाजिनमुत्सन्दुहन्ति स्तनयन्तमक्षितं। उदप्रुतो मरुतस्ताꣳ इयर्त्त वृष्टिं॥७॥

ये विश्वे मरुतो जुनन्ति। क्रोशाति गर्दा कन्येव तुन्ना पेरुन्तुञ्जाना पत्येव जाया। घृतेन द्यावापृथिवी

मधुना समुक्षत पयस्वतीः कृणुताप ओषधीः। ऊर्जंञ्च तच्च सुमतिञ्च पिन्वथ यत्रा नरो मरुतः सिञ्चथा मधु। उदु त्यं चित्रं। और्वभृगुवच्छुचिमप्रवानवदा हुवे। अग्निꣳ समुद्रवाससं। आसवꣳ सवितुर्यथा भगस्येव भुजिꣳ हुवे। अग्निꣳ समुद्रवाससं। हुवे वातस्वनं कविं पर्जन्यक्रन्द्यꣳ सहः। अग्निꣳ समुद्रवाससं॥ ८॥

*वीर इषꣳ हव्यमपसो मरुतश्च वृष्टिं भगस्य द्वादश च॥ ११॥

प्रजापतिरकामयतैष ते गायत्रो यज्ञं वै प्रजापतेर्जायमानाः प्राजापत्या यो वा अयथादेवतमिष्टगो निग्राभ्यास्थ यो वै देवान् जुष्टोऽग्निना रयिमेकादश। ॥ ११॥

प्रजापतिरकामयत प्रजापतेर्जायमाना व्यायच्छन्ते मच्चमिमान्माया मायिनां द्विचत्वारिꣳशत्॥४२॥

हरिः ओम्॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः॥*॥

॥*॥ प्रथमप्रपाठकः सम्पूर्णः॥*॥

---

वीरैषमिति केवलमादर्शे पाठः।

ये बहिष्पवमानाङ्गमन्त्रास्ते दशमे श्रुताः।

अथैकादशे काश्चित् पुरोऽनुवाक्या उच्यन्ते। 'चित्रया यजेत पशुकामः' इत्यत्र 'सप्तैतानि हवींषि भवन्ति' इति श्रुतं। तत्र प्रथमस्य हविष आग्नेयस्य पुरोऽनुवाक्यामाह। "अग्निना रयिमश्नवत्पोषमेव दिवे दिवे। यशसं वीरवत्तमं" इति। अनेनाऽग्निना रयिं धनानि अश्नवत् सर्वो जनः प्राप्नोति। न केवलं धनस्य स्वरूपमात्रं किन्तु दिवे दिवे तस्य धनस्य पुष्टिमेव प्राप्नोति, न तु ह्रासं। कीदृशं पोषं यशसं कीर्तिकरं। वीरवत्तमं वीराः अस्मदीयाः पुत्रा अस्येति वीरवत्, अतिशयेन तथाविधं। तत्रैव याज्यामाह। "गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः। इडावाꣳ एषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभावान्" इति। हे अग्ने पुनरावर्तनाय प्रार्थ्यमानो यज्ञ एतैर्विशेषणैर्विशिष्टो भूयात्। बहवो गावोऽस्य सन्ति इति गोमान्। एवमविमानश्वीति योज्यं। नृवत्सखा ऋत्विग्रूपैर्मनुष्यैर्युक्ता देवाः सखायो यस्य यज्ञस्य तादृशः। सदमित् सदैवाप्रमृष्योऽनभिभवनीयः। इडावान् अन्नवान्। प्रजावान् बह्वपत्यप्रदः। दीर्घः पुनः पुनरनुष्ठानादविच्छिन्नः। रयिर्बहुधनोपेतः। पृथुबुध्नो विस्तीर्णमूलः. मन्त्रेष्वनुष्ठानेषु च मूलभूतेषु वैकल्यरहितः। सभावान् अविकलं यज्ञं द्रष्टुं मिलन्त्या विद्वत्सभया युक्तः। असुः प्राणः सोऽस्यास्तीत्यसुरः। हे असुर प्राणन्नग्ने, एष पुनः पुनः प्रार्थ्यमानो यज्ञः उक्तविशेषणैर्विशिष्टो भूयात्। द्वितीयहविषः सौम्यस्य याज्यापुरोऽनुवाक्ययोः प्रतीके दर्शयति। "आप्यायस्व. सन्ते" इति। एतच्चोभयं चतुर्थकाण्डे 'मा नो हिꣳसि' इत्यत्र

व्याख्यास्यते। तृतीयहविषस्त्वाष्ट्रस्य पुरोऽनुवाक्यामाह। "इह त्वष्टारमग्रियं विश्वरूपमुपह्वये। अस्माकमस्तु केवलः" इति। इहास्मिन् कर्मणि त्वष्टारं देवमुपह्वये आह्वयामि। कीदृशं अग्रियं मुख्यं। विश्वरूपं विश्वानि रूपाणि गर्भे *विभर्तुं योग्यानि यस्यासौ विश्वरूपः तं। स च त्वष्टाऽस्माकं केवलोऽस्तु असाधारणत्वेन पालकोऽस्तु। तत्रैव याज्यामाह। "तन्नस्तुरीयमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व। यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः" इति। हे त्वष्टर्देव तद्धनं नोऽस्मभ्यं विशेषेण स्यस्व समर्पय। कीदृशं धनं तुरीयं. तूर्णं प्राप्नोति इति तुरीयं। अध अपि च पोषयित्नु पोषयितृ। त्वं च रराणो दानशीलः। यतो यस्माद्धनादस्माभिर्लब्धात् वीरः शूरः पुत्रो जायते। कीदृशं तच्छूरत्वमिति तदुच्यते। कर्मण्यः लौकिके वैदिके च कर्मणि कुशलः। सुदक्षः सम्यगुत्साही शीघ्रकारी इत्यर्थः। युक्ताः सोमाभिषवार्थं प्रयुक्ताः ग्रावाणो यस्यासौ युक्तग्रावा. सर्वदा सोमयागस्यानुष्ठातेत्यर्थः। देवकामः ईदृशः सेवकोऽस्माकं भूयादिति देवैः काम्यमानः। देवान् वा सेवितुं स्वयं कामयते। तत्रैव हविषि विकल्पितां पुरोऽनुवाक्यामाह। "शिवस्त्वष्टरिहागहि विभुः पोष उत त्मना। यज्ञे यज्ञे न उदव" इति। हे त्वष्टस्त्वं शिवः सुखकरः सन् इहास्मिन् कर्मण्यागहि आगच्छ। उत अपि च पोषेऽस्मदीये पोषणविषये त्मना विभुः परैरपेक्षेण स्वयमेव समर्थः। तादृशस्त्वं तस्मिन् तस्मिन् यज्ञे नोऽस्मान् उदव उत्कर्षेण पालय। तत्रैव विकल्पितां याज्यामाह। "पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी

---

* विभर्तुमिति सो०२ पु० पाठः।

वीरो जायते देवकामः। प्रजां त्वष्टा विष्यतु नाभिमस्मेऽथा देवाना-मप्येतु पाथः" इति। यस्य त्वष्टुः प्रसादादस्माकं वीरः पुत्रो जायते। कीदृशः पिशङ्गरूपः त्रिवर्गस्य सेवितेत्यर्थः। सुभरः सुष्ठु पोषकः। वयोधाः दीर्घस्य वयसो धारकः चिरजीवीत्यर्थः। शुष्टी क्षिप्रकारी सत्यवादी वा। देवकाम इति पूर्ववत्। यस्य त्वष्टुः प्रसादादीदृशो वीरो जातः तादृशस्त्वष्टा नाभिं चक्रस्य नाभिवत् प्रशस्तां प्रजां पुत्र-पौत्रादिरूपां अस्मे अस्मासु विष्यतु विशेषेण समर्पयतु। अथानन्तरं देवानामपि पाथोऽन्नं एतु *प्राप्नोतु। अथ चतुर्थस्य हविषः सरस्व-तीदेवताकस्य याज्यापुरोऽनुवाक्ययोः प्रतीके दर्शयति। "प्र णो देव्या नो दिवः" इति। 'प्र णो देवी सरस्वती' इति पुरोऽनुवाक्या, 'आ नो दिवो बृहतः" इति याज्या, एतच्चोभयं 'अग्नाविष्णू मही' इत्यत्र व्याख्यातं। पञ्चमस्य हविषः सरस्वद्देवताकस्य पुरोऽनुवाक्यामाह। "पीपिवाꣳसꣳ सरस्वतः स्तनं यो विश्वदर्शतः। धुक्षीमहि प्रजामिषं" इति। सरस्वतः सरस्वन्नामकस्य देवस्य यः स्तनं, विश्वदर्शतः विश्व-विषयकदर्शनोपेतः, क्षुधितान् बालानिव पालयितुं जानातीत्यर्थः। तादृशं स्तनं यज्ञलक्षणं पीपिवांसं अस्मान् वर्धितवन्तं। प्रजां पुत्रादि-रूपां इषमन्नं च धुक्षीमहि। यथा गां पयो दुहन्ति तद्वदेतद्देव-ताकं यागमनुष्ठाय प्रजादिकं प्राप्ताः स्मेत्यर्थः। तत्रैव विकल्पितां पुरोऽनुवाक्यामाह। "ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः। तेषां ते सुम्नमीमहे" इति। हे सरस्वः सरस्वन् समुद्र त्वदीया ये ऊर्मयः मधमन्तः माधुर्ययुक्ताः, घृतश्चुतः घृतसमानमुदकं क्षारयन्तो वर्तन्ते

* प्रापयतु इति सो०२ पु० पाठः।

ते त्वदीयानां तेषामूर्मीणां सम्बन्धि सुम्नं सुखं ईमहे प्राप्नुमः। तत्रैव याज्यामाह। "यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः। यस्य व्रते पुष्टिपतिर्निविष्टस्तꣳ सरस्वन्तमवसे हुवेम" इति। यस्य सरस्वतः सम्बन्धि व्रतं कर्म पशवो यन्ति, द्विपादश्चतुष्पादश्च सर्वे पशवः प्राप्नुवन्ति। एतदीयेन कर्मणा पशवो लभ्यन्त इत्यर्थः। तथा वृष्टिरूपा आपो यस्य व्रतमुपतिष्ठन्ते सेवन्ते। अग्नौ प्रास्ताऽऽहुति-रिति न्यायेन वृष्टेरेतत्कर्मसाध्यत्वात्। पुष्टिपतिर्धनपोषकस्य पालको यजमानो यस्य व्रते निविष्टः, तदीयेन व्रतेन धनपुष्टेः सुलभत्वात्, तादृशं सरस्वन्तं देवं अस्माकं रक्षणाय हुवेम। तत्रैव विकल्पितां याज्यामाह। "दिव्यꣳ सुपर्णं वयसं बृहन्तमपां गर्भं वृषभमोषधीनां। अभीयतो वृष्ट्या तर्पयन्तं तꣳ सरस्वन्तमवसे हुवेम" इति। अत्र चतुर्थः पादः पूर्ववत्। कीदृशं सरस्वन्तं दिव्यं दिवमर्हतीति दिव्यं। सुपर्णं शोभनाभ्यां पक्षाभ्यामुपेतं। यदा पक्षिरूपं धृत्वा दिवि गच्छति तदानीमेतौ पक्षौ द्रष्टव्यौ। वयसं पक्षिरूपिणं। बृहन्तं महान्तं। अपां वृषभं जलानां वर्षितारं। ओषधीनां गर्भं व्रीह्यादिमञ्जरीरूपं अभीयतो वृष्ट्या तर्पयन्तं, वृष्टिरूपेणाभितः पतनात् सर्वेषां तृप्तिहेतुं। वायुना नीयमानैर्जल-बिन्दुभिः पक्षसदृशैः पक्षिवद्दिवि मेघेषु गत्वा जलबाहुल्यं प्राप्य स्वयमेवापां वर्षिता भूत्वौषधीषु व्रीह्यादिरूपेण गर्भीभवति, पुनश्च वृष्टिरूपेण सर्वतः पतन् सर्वं जगत् तर्पयतीत्यर्थः। तादृशं सरस्वन्तमाह्वयामेत्यन्वयः। अथ षष्ठस्य हविषः सिनीवालीदेवता-कस्य पुरोऽनुवाक्यामाह। "सिनीवालि पृथुष्टुके या देवानामसि

स्वसा। जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः” इति। अमावास्या सिनीवालीति श्रुतत्वादमावस्यातिथ्यभिमानिनी देवता सिनीवाली। हे सिनीवालि या त्वं देवानां स्वसाऽसि भगिनीवद्धितकारिण्यसि, दर्शेष्टिसाधनत्वात्। स्तुकं स्तोत्रं, पृथु स्तुकं स्तोत्रं यस्याः सा पृथुष्टुका, तस्याः सम्बोधनं। हे पृथुष्टुके, अनेन सिनीवाली विशिष्यते। तादृशी त्वं आहुतं अस्माभिः समन्तात् समर्पितं हविर्जुषस्व। हे देवि नोऽस्मभ्यं प्रजां दिदिड्ढि उपचिनु प्रभूतां कुर्वित्यर्थः। तत्रैव याज्यामाह। “या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी। तस्यै विश्पत्नियै हविः सिनीवाल्यै जुहोतन” इति। शोभनौ पाणी यस्याः सा सुपाणिः। शोभना अङ्गुलयो यस्याः सा स्वङ्गुरिः। सुषूमा सुष्ठु प्रसवित्री। बहुसूवरी बहूनां यज्ञानां सवित्री। ईदृशी या सिनीवाली, विश्पत्नियै विशां पालयित्र्यै सिनीवाल्यै हविर्जुहोतन हे ऋत्विग्यजमाना जुहुत। ‘ऐन्द्र उत्तमो भवति’ इति यदिदं सप्तमं हविः श्रुतं तत्र याज्यानुवाक्ययोः प्रतीके दर्शयति। “इन्द्रं वो विश्वतस्परि, इन्द्रं नरः” इति। एतच्चोभयं प्रथमकाण्डस्य षष्ठप्रपाठके व्याख्यातम्। इत्थं चित्रायागे याज्यानुवाक्या उक्ताः।

अथ कारीरीष्ट्युपयुक्ता मन्त्रा उच्यन्ते। कल्पः। ‘अथासां धूममनुमन्त्रयतेऽसितवर्णा हरयः सुपर्णाः’ इति। आसां करीरसक्तुपिण्डीनामग्नौ हुतानामित्यर्थः। पाठस्तु। “असितवर्णा हरयः सुपर्णा मिहो वसाना दिवमुत्पतन्ति। त आऽववृत्रन्त्सदनानि कृत्वाऽऽदित् पृथिवी घृतैर्व्युद्यते” इति। अग्निना दह्यमानाभ्यः करीरसक्तुपिण्डीभ्यो ये निर्गता धूमास्ते दिवमुत्पतन्ति। कीदृशा धूमाः

असितवर्णाः कृष्णवर्णाः। हरयः मेघनिष्पादनाय रसहरणशीलाः। सुपर्णाः प्रसारितपक्षसदृशाः। मेहनान्निहो मेघाः, तद्रूपा भूत्वा वसानाः सूर्यमण्डलादिकमाच्छादयन्तः। ते धूमनिष्पाद्याः स्वोदरेषु जलस्य सदनानि स्थानानि कृत्वा आववृत्रन् इह वर्षितुमावृताः। आदित् अनन्तरमेव, पृथिवी घृतैः घृतवत् क्षरद्भिरुदकैः व्युद्यते विशेषेण क्लिद्यते। कल्पः। 'अथैनमाहवनीयेऽनुप्रहृत्याथास्य धूममनुमन्त्रयते हिरण्यकेशो रजसो विसारः' इति। एनं पुनर्नवायाः स्तम्बं। पाठस्तु। "हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान्। शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः" इति। हिरण्यवर्णा अग्निकेशस्थानीया ज्वाला येन धूमेन सहोत्पद्यन्ते सोऽयं पुनर्नवाजन्यो धूमो हिरण्यकेशः। रजसः मेघरूपस्य रञ्जनस्य विसारे प्रसारणे निमित्तभूते सति, अंहति गच्छतीत्यहिः, मेघरूपमाकाशस्य रञ्जनं प्रसारयितुं गच्छतीत्यर्थः। वात इव धुनिः ध्रजीमान्। यथा वायुः कम्पमानः शीघ्रगतियुक्तः तद्वदयमित्यर्थः। मेघात्मा शुचिभ्राजा निर्मलदीप्तिः, मेघरूपेण परिणतोऽपि धूमो विद्युद्रूपया दीप्त्या युक्त इत्यर्थः। सोऽयमीदृशो धूमोऽस्मदर्थं वृष्टिमुत्पादयत्विति शेषः। उषसः प्रभातकालस्य नवेदाः, मेघैः प्रकाशस्यावृतत्वे न विद्यते न ज्ञायते अनेनेति नवेदाः। सूर्योदयो यथा न ज्ञायते तथा मेघसमृद्धिरस्त्वित्यर्थः। यास्तु सस्यनिष्पादिका भूमयस्ताः सस्यनिष्पादनेन यशस्वतीः कीर्तिमत्यो भवन्तु। अपस्युवो न अप उदकान्यात्मन इच्छन्तीत्यपस्युवः, तथाविधा इव वर्तन्ते। ताश्च भूमयः सत्याः अमोघारम्भाः

मुचैत्रा इत्यर्थः। एतासामनुग्रहाय पुनर्नवाधूमो वृष्टिं जनयत्विति शेषः। अस्मिन्नेव धूमाभिमन्त्रणे तिस्र ऋचो विकल्पन्ते। तत्र प्रथमा। "आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदं। शिवाभिर्न स्मयमानाभिरागात्पतन्ति मिहः स्तनयन्त्यभ्राः" इति। हे पुनर्नवे ते तव सम्बन्धिनो धूमाः सुपर्णाः पक्षिवदुत्पतनशीलाः, एवैरमिनन्तः पुनर्गमनैः समन्तादुदकं प्रक्षिप्नवन्तः, ततो मेघः कृष्णो नीलवर्णो वृषभो वर्षिता भूत्वा नोनाव पुनः पुनर्गर्जनमकरोत्। यदि यस्मिन् काले इदं सर्वं प्रवर्तते तदा शिवाभिर्न सानुग्रहाभिरिव स्मयमानाभिः हसन्तीभिरिव वृष्टिभिर्युक्ता मिहो मेघा आगादागच्छन्ति, तत ऊर्द्धं पतन्ति वृष्टिधारा इति शेषः। अभ्राः स्तनयन्ति अभ्राणि च गर्जन्ति। ईदृशमहिमोपेतः पुनर्नवाधूम इत्यर्थः। अथ द्वितीया। "वाश्रेव विद्युन्मिमाति वत्सन्न माता सिषक्ति। यदेषां वृष्टिरसर्जि" इति। उपरितनमन्त्रे मरुत इति पदं प्रयुज्यते। त एव मरुतो एतच्चेवशब्देन परामृश्यन्ते। एषां मरुतां सम्बन्धिनी वृष्टिर्यदसर्जि यदा सृष्टा भवति तदा गर्जनसहिता विद्युन्मरुतः प्रति वाश्रेव वाश्यमानेव शब्दं कुर्वतीव मिमाति मीयते प्रतिभातीत्यर्थः। सिषक्ति सज्यते मरुद्भिः सम्बध्यते। तत्र दृष्टान्ताः। वत्सं न माता इति, माता वत्समिव। यथा प्रस्रवन्ती गौर्वत्सं प्रति हम्भारवं कुर्वाणा मनुष्यैरवलोक्यते तेन वत्सेन सम्बध्यते तद्वदियं विद्युदित्यर्थः। अथ तृतीया। "पर्वतश्चिन्महिवृद्धो बिभाय दिवश्चित् सानुरेजत स्वने वः। यत्क्रीडथ मरुत ऋष्टिमन्त आप इव सध्रियञ्चो धवध्वे" इति। हे मरुत ऋष्टिमन्तो वज्रा-

युधवन्तो यूयं यदा क्रीडां कुरुथ तदानीं वः स्वने युष्माकं गर्जने सति पर्वतश्चिद्विभाय पर्वतोऽपि बिभेति। कीदृशः पर्वतः महिवृद्धः तिर्यक्प्रमाणेनात्यन्तं महान्, ऊर्द्ध्वप्रमाणेन वृद्धः। किञ्च दिवश्चित् उन्नतत्वेन दिवोऽप्युपरि वर्तमानसानुरेजत भवतां गर्जने सति प्रौढोऽपि पर्वतसानुः कम्पते। किञ्च यूयं आप इव सध्रियञ्चो धवध्वे, व्यापका इव सन्तः क्रीडन्तश्च धावध्वं। ईदृशैर्मरुद्भिर्युक्तोऽयं पुनर्नवाधूमो वृष्टिमुत्पादयत्विति मन्त्रयोस्तात्पर्य्यार्थः।

कल्पः। 'कृष्णोऽश्वः पुरस्तात् प्रत्यङ्मुखोऽवस्थितो भवति तमेतेन वाससाऽभिपिनष्ट्यभिक्रन्द' इति। यथाऽयमश्व उपद्रवं सोढुमसहमानः क्रन्दति तथा कृष्णवस्त्रेण तस्य शरीरं घर्षयेत्। पाठस्तु। "अभिक्रन्द स्तनय गर्भमाधा उदन्वता परिदीया रथेन दृतिं सुकर्ष विषितं न्यञ्चं समा भवन्तूद्वता निपादाः" इति। हे अश्व अभिक्रन्द सर्वतः शब्दं कुरु। स्तनय मेघगर्जितमिवोच्चध्वनिं कुरु। गर्भमाधाः मेघस्योदरे जलरूपं गर्भं धेहि। किञ्च उदन्वता उदकवता रथेन रथसदृशेन मेघेन सह परिदीय सर्वतो गच्छ. विषितं विमुक्तद्वारं न्यञ्चमवाङ्कृतं दृतिं चर्ममयजलाधारसदृशं मेघं सुकर्ष सुखेनाकृष्टं कुरु। न्यग्भावेन पद्यन्त इति निपादाः निम्नदेशाः. ते चोदकपूर्णाः सन्तः उद्वता उन्नतेन स्थलेन समा भवन्तु।

'अथ अग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतं सप्तकपालं सौर्यमेककपालं' इत्येतेषां क्रमेण याज्यानुवाक्या उच्यन्ते। तथा च बौधायनः। 'तस्या एते भवन्ति त्वन्धाचिदच्युताऽग्ने भूरीणि तव जातवेदो दिवो नो वृष्टिं मरुतो ररीध्वं पिन्वन्त्यपो

मरुतः सुदानव उद् त्यं चित्रं' इति। तत्राज्यस्य हविषः पुरोऽनुवाक्यामाह। "त्वं त्याचिदच्युताग्ने पशुर्न यवसे। धामाह यत्ते अजर वना वृश्चन्ति शिक्कसः" इति। हे अजर विनाशरहिताग्ने यद्वनानि यान्युदकानि ते धामाह त्वदीयं स्थानं, शिक्कसः अर्चींषि च वृश्चन्ति विनाशयन्त्येव, त्वं तु त्याचित् तान्यप्युदकानि अच्युतानि विनाशरहितानि कुर्विति शेषः। तत्र दृष्टान्तः पशुर्न यवसे। तृणे भक्षिते सति पशुरिव। यथा गवादिकः पशुः तृणं भक्षयित्वा क्षीरमच्युतं करोति तद्वदित्यर्थः। तत्रैव याज्यामाह। "अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम। याश्च माया मायिनां विश्वमिन्व त्वे पूर्वीः सन्दधुः पृष्टबन्धो" इति। हे अग्ने अमृतस्य मरणरहितस्य तव धाम भूरीणि स्थानानि बहूनि। जातवेदो देव स्वधाव इति त्रीणि सम्बुद्ध्यन्तान्यग्निविशेषणानि। जातं जगद्वेत्तीति जातवेदाः। द्योतनशीलो देवः। स्वधाशब्दोऽन्नवाची तदस्यास्तीति स्वधावान्। किञ्च मायिनां लोके मायायुक्तानामैन्द्रजालिकाशयानां या मायाः सन्ति ताः सन्दधुः, त्वे त्वयि सम्यक् स्थापितवन्तः। पूर्वीरिति मायाविशेषणं, पुरातन्यः अनादिसम्प्रदायपरम्परागता इत्यर्थः। विश्वमिन्व पृष्टबन्धो इति द्वयं संबुद्ध्यन्तमग्निविशेषणं। विश्वमिन्वति प्रीणयतीति विश्वमिन्वः। पृष्टस्यासौ बन्धुश्चेति पृष्टबन्धुः। तव महिमा कीदृश इति जिज्ञासया यः पृच्छति तस्य बन्धुरिव स्नेहं करोतीत्यर्थः। नवसस्यहेतूनां उपायानां त्वयि विद्यमानत्वात् ऐन्द्रजालिकवदकस्मादेव प्रौढां वृष्टिं सम्पादयेति तात्पर्यार्थः। द्वितीयस्य हविषः पुरोऽनुवाक्यामाह।

"दिवो नो वृष्टिं मरुतो ररीध्वं प्रपिन्वत वृष्णो अश्वस्य धाराः। अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः" इति। हे मरुतो नोऽस्मदर्थे दिवः सकाशात् वृष्टिं ररीध्वं स्रावयत। ततश्च अश्वस्याश्नुवानस्य व्याप्तिमतो वृष्णो वर्षयितुरिन्द्रस्य सम्बन्धिनोर्धाराः प्रपिन्वत उदकधाराः सिञ्चत। हे वृषन् तमेतेन स्तनयित्नुना गर्जनवता मेघेन सह अर्वाङेहि अम्बरादभिमुखमागच्छ। किं कुर्वन् अपो नितरां सिञ्चन्। कीदृशस्त्वं असून् प्राणान् राति ददातीत्यसुरः। नोऽस्माकं पिता पालकः। तत्रैव याज्यामाह। "पिन्वन्त्यपो मरुतः सुदानवः पयोघृतवद्विदथेष्वाभुवः। अत्यन्न मिहे विनयन्ति वाजिनमुत्सन्दुहन्ति स्तनयन्तमक्षितं" इति। सुदानवः सुष्ठु जलदानपराः मरुतः अपः पिन्वन्ति सिञ्चन्ति। तत्र दृष्टान्तः पयोघृतवद्विदथेष्वाभुव इति। *पयोवदिति वतिप्रत्ययोऽध्याहर्तव्यः। आभवन्ति यज्ञभूमीरागच्छन्तीत्याभुवः ऋत्विग्यजमानाः. ते यथा विदथेषु यज्ञेषु पयो घृतञ्च सिञ्चन्ति तद्वत्। अत्यशब्दोऽश्ववाची। तथा चाश्वमेधकाण्डे मन्त्र आम्नायते। 'अश्वोऽसि हयोऽस्यत्योऽसि नरोऽसि' इति। निर्वचनं तद्ब्राह्मणे पठ्यते। 'अत्योऽसि' इत्याह. तस्मादश्वः सर्वान् पशूनत्येति' इति। वाजिशब्दो वेगवन्तं मेघमाचष्टे। अत्यन्न अश्वमिव मिहे सेचनार्थं वाजिनं विनयन्ति। यथाश्वशिक्षका अश्वं शिक्षयन्ति एवं मरुतो वर्षार्थं मेघं विधेयीकुर्वन्तीत्यर्थः। विधेयीकृत्य चाक्षितमुपक्षयरहितं स्तनयन्तं गर्जन्तं मेघं उत्सन्दुहन्ति निरन्तरजलप्रस्रवणं यथा भवति तथा

* पयस्वदित्यस्य स्थाने पयोवदित्यव्युत्पन्नः पाठः सर्वत्र

वर्षयन्ति। तत्रैव विकल्पितामन्यां पुरोऽनुवाक्यामाह। "उदप्रुतो मरुतस्ताꣳ इयर्त्त वृष्टिं ये विश्वे मरुतो जुनन्ति। क्रोशाति गर्दा कन्येव तुन्ना पेरुन्तुञ्जाना पत्येव जाया" इति। उदप्रुतः उदकदातॄन्, तान् मरुतः इयर्त प्राप्नुत प्रार्थयत हे ऋत्विग्यजमानाः। तान् कान्. ये विश्वे मरुतः वृष्टिं जुनन्ति प्रयच्छन्ति। प्रार्थनायां दृष्टान्तः। गर्दा बुभुक्षिता कन्या तुन्ना पीडिता सती यथा क्रोशाति आक्रोशति, यथा मातापितरौ प्रत्याक्रोशति रोदिति तथैते यजमानादयो वृष्टिं वचसा प्रार्थयन्त इत्यर्थः। मरुतामनुग्रहे दृष्टान्तः। पेरुन्तुञ्जाना पत्येव जायेति। पेरुं पानादिकामां कन्यां तुञ्जाना आभाषमाणा माभिरोदीः किन्तेऽभिलषितमिति वदन्ती पत्या सह जायेव। यथा मातापितरौ कन्यामनुगृह्णीतः तथा मरुतः ऋत्विग्यजमानाननुगृह्णन्तीत्यर्थः। तत्रैव विकल्पितामन्यां याज्यामाह। "घृतेन द्यावापृथिवी मधुना समुक्षत पयस्वतीः कृणुताप ओषधीः। ऊर्जञ्च तत्र सुमतिञ्च पिन्वथ यत्रा नरो मरुतः सिञ्चता मधु" इति। हे मरुतः, घृतेन घृतसदृशेन मधुना मधुरेण द्यावापृथिवी लोकद्वयं समुक्षत। या आपो भूमावुक्षिताः ताभिरोषधीः पयस्वतीः सारवतीः कृणुत कुरुत। हे नरो जलस्य नेतारो मरुतो यत्र देशे मधु मधुरमुदकं सिञ्चत तत्र देशे ऊर्जं सारोपेतमन्नं, सुमतिं शोभनबुद्धियुक्तां प्रजाञ्च पिन्वथ सिञ्चथ सम्पादयतेत्यर्थः। अथ तृतीयस्य हविषो याज्याऽनुवाक्ययोः प्रतीके दर्शयति। "उदु त्यं. चित्रं" इति। उदु त्यं जातवेदसमिति पुरोऽनुवाक्या। चित्रं देवानामिति याज्या। एतच्चोभयं प्रथमकाण्डस्य चतुर्थप्रपाठके

व्याख्यातं। कल्पः। 'पुरस्तात् स्विष्टकृतः स्रुवाहुतीरुपजुहोति और्व-भृगुवच्छुचिमप्नवानवदाहुवे, इति। तत्र प्रथमामाह। "और्व-भृगुवच्छुचिमप्नवानवदाहुवे। अग्निꣳ समुद्रवाससं" इति। और्वादय ऋषयः तद्वच्छुचिं समुद्रे वसन्तमग्निमुपदिश्य जुहोमीत्यर्थः। द्वितीयामाह। "आसवꣳ सवितुर्यथा भगस्येव भुजिꣳ हुवे। अग्निꣳ समुद्रवाससं" इति। *सवितुः प्रसवमिव भगस्य भोगमिव। अग्निमित्यादि पूर्ववत्। तृतीयामाह। "हुवे वातस्वनं कविं पर्जन्य-क्रन्द्यꣳ सहः। अग्निꣳ समुद्रवाससं" इति। वातवत् स्वनो ज्वालाध्वनिर्यस्य तं वातस्वनं, कविं विद्वांसं, सर्वैर्मनुष्यैः पर्जन्यवत् क्रन्दनीयं अपेक्षणीयं। सहो बलवन्तं समुद्रवाससमग्निमुद्दिश्य हुवे जुहोमि।

अत्र विनियोगसंग्रहः।

याज्याऽनुवाक्ये चित्रायां क्रमात्सप्तेष्टिषु स्थिते।
अग्न्याग्नेयेऽथ सौम्ये स्यादाप्या सन्त इति द्वयम्॥
इह त्वाष्ट्रे चतस्रः स्युः प्रण आन इति द्वयम्।
सरस्वत्यास्त्रयः पीपि चतस्रः पुंसरस्वतः॥
सिनीवा द्वे सिनीवाल्या इन्द्रमिन्द्र तथैन्द्रके।
कारीर्यामसितेत्युक्तं पिण्डीधूमस्य मन्त्रणम्॥

---

* सवितुरित्यादि पूर्ववदित्यन्तपाठस्थाने यथा सवितुः सवमनुज्ञां प्रार्थये यथा वा भगस्यादित्यस्य भुजिं हविषः स्वीकारं प्रार्थये तथैव समुद्रवाससमग्निं जुहोमीति सो० २ पु० पाठः।

विकल्प्या हि च चत्वारो वर्षाङ्गा धूममन्त्रणे।
अभ्यश्वं कृष्णवस्त्रेण पिनष्टि क्रन्दनाय हि॥
त्वं धामच्छदि याज्याः स्युर्दिवो मारुतयागके।
वैकल्पिकं तत्र युग्ममुद् चित्रञ्च सौर्यके॥
और्वत्रयाद्योपहोमाः पञ्चत्रिंशदिहोदिताः॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तृतीयकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः॥०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये तृतीयकाण्डे प्रथमः प्रपाठकः सम्पूर्णः॥०॥

ॐ तत्सत्।

॥ हरिः ॐ ॥



# अथ तैत्तिरीयसंहिताभाष्ये

## तृतीयकाण्डे द्वितीयप्रपाठके

### प्रथमोऽनुवाकः ।



यो वै पवमानानामन्वारोहान् विद्वान् यजतेऽनु पवमानानारोहति न पवमानेभ्योऽवच्छिद्यते श्येनोऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा सम्पारय सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा सम्पारय सघासि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा सम्पारयेत्याहैते ॥ १ ॥

वै पवमानानामन्वारोहास्तान् य एवंविद्वान् यजतेऽनु पवमानानारोहति न पवमानेभ्योऽवच्छिद्यते यो वै पवमानस्य सन्ततिं वेद सर्वमायुरेति न पुरायुषः प्रमीयते पशुमान् भवति विन्दते प्रजां पवमा-

नस्य ग्रहा गृह्यन्तेऽथवा अस्यैते गृहीता द्रोणकलश आधवनीयः पूतभृत् तान् यदगृहीत्वोपाकुर्यात् पवमानं वि ॥ २ ॥

च्छिन्द्यात्तं विच्छिद्यमानमध्वर्योः प्राणोऽनु विच्छिद्येतोपयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशेदिन्द्राय त्वेत्याधवनीयं विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतं पवमानमेव तत् सन्तनोति सर्वमायुरेति न पुरायुषः प्रमीयते पशुमान् भवति विन्दते प्रजां ॥ ॥ ३ ॥

एते वि द्विचत्वारिंशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥*॥

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ १ ॥
आद्यप्रपाठके दीक्षां प्रारभ्य प्रकृतौ पुरा।
यद्बहिष्पवमानान्तं न्यूनं तत्सर्वमीरितम्॥ २ ॥
प्रतिनिर्ग्राह्यपर्यन्तं पवमानग्रहादिकम्।
यन्न्यूनं प्रकृतौ तत्तु वर्ण्यतेऽस्मिन् प्रपाठके॥ ३ ॥

यदुक्तं सूत्रकारेण । 'वस्व्यै हिङ्कुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मेऽवरुध्या इति पुरस्ताद्बहिष्पवमानात् यजमानो जपति दशहोतारं व्याचष्टे स्तूयमाने च दशहोतारं जपति श्येनोऽसि गायत्रच्छन्दा इति मध्यमायां च स्तोत्रीयायामन्वारोहं द्वितीये पवमाने द्वितीयेन मन्त्रेण तृतीये तृतीयेन' इति । तमिममन्वारोहजपं विधत्ते । "यो वै पवमानानामन्वारोहान् विद्वान् यजतेऽनु पवमानानारोहति न पवमानेभ्योऽवच्छिद्यते श्येनोऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा सम्पारय सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा सम्पारय सघासि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा सम्पारयेत्याहैते वै पवमानानामन्वारोहास्तान् य एवं विद्वान् यजतेऽनु पवमानानारोहति न पवमानेभ्योऽवच्छिद्यते" इति । बहिष्पवमानो माध्यन्दिनः पवमान आर्भपवमान इत्येतन्नामकाः पवमानत्रयगताः स्तोत्रविशेषाः । सामवेदे समाम्नाताः पवमानाः, तान् यो यजमानो मन्त्रैरारोहति न कदाचिदयं पवमानेभ्यो विच्छिन्नो भवति । श्येन इत्यादयो मन्त्राः । हे बहिष्पवमान त्वं श्येनोऽसि श्येनवच्छीघ्रगतिरसि । गायत्रच्छन्दाः गायत्रीच्छन्दस्कोऽप्यसि । अतस्त्वामन्वारभे अनुक्रमेणारोहामि प्राप्नोमि, निर्विघ्नेन मां सम्पारय, सम्यक् पारं नय । तमिमं मन्त्रं 'उपास्मै गायत' इत्यादिषु नवसु स्तोत्रीयासु मध्यमायां पञ्चम्यां स्तोत्रीयायां गीयमानायां जपेत् । सुपर्ण इत्यादिः द्वितीयो मन्त्रः । हे माध्यन्दिनपवमान त्वं सुपर्णोऽसि सुपर्णवदुत्पतितुं समर्थोऽसि । शेषं पूर्ववत् । तमिमं मन्त्रं 'उच्चा ते जातम-

श्वर्षः' इत्यादिके माध्यन्दिनपवमानस्तोत्रे मध्यमायामृचि गीयमानायां जपेत्। सघेत्यादिस्तृतीयो मन्त्रः। हे आर्भवपवमान त्वं सघासि भासनामकपक्षिवत् पतितुं समर्थोऽसि। शेषं पूर्ववत्। तमिमं मन्त्रं 'स्वादिष्ठय' इत्येतस्मिन्नार्भवपवमानाख्ये स्तोत्रे मध्यमायामृचि गीयमानायां *पठेत्। अथ द्रोणकलशादीनामभिमर्शनं विधातुं प्रस्तौति। "यो वै पवमानस्य सन्ततिं वेद सर्वमायुरेति न पुरायुषः प्रमीयते पशुमान् भवति विन्दते प्रजां पवमानस्य ग्रहा गृह्यन्तेऽथवा अस्यैते गृहीता द्रोणकलश आधवनीयः पूतभृत् तान् यदगृहीत्वोपाकुर्यात् पवमानं विच्छिन्द्यात् तं विच्छिद्यमानमध्वर्योः प्राणोऽनुविच्छिद्येत" इति। योऽयं बहिष्पवमानादिशब्दैरभिधीयमानः स्तोत्रविशेषत्रयरूपः पवमानोऽस्ति तस्य सन्ततिमविच्छेदप्रकारं यो यजमानो वेद स यजमानः सम्पूर्णमायुः प्राप्नोति। जन्मकाले कर्मणा देवैश्च परिकल्पितात् सम्पूर्णादायुषः पुरा केनाप्यपमृत्युनाऽसौ न म्रियेत, प्रजापशुसमृद्धश्चायं भवति। द्रोणकलशादिनामकास्त्रयो ग्रहाः, इमे ऐन्द्रवायवादिग्रहवन्मन्त्रैर्गृह्यन्तामिति. तत्र तावत् पवमानस्य सम्बन्धिन एते ग्रहाः सन्ततिसिद्ध्यर्थं गृह्यन्तामिति प्राप्तं. सोऽयं पक्षो न सम्भवति. मन्त्रकाण्डे ध्रुवग्रहतुग्रहयोर्मध्ये पवमानग्रहार्थानां मन्त्राणामनाम्नातत्वात्, षष्ठकाण्डे तद्विध्यभावाच्च। तदेतदुच्यते. "अथ वा अस्यैते गृहीता द्रोणकलशे" इत्यादिना। यद्यपि पवमानस्य सम्बन्धिन एते द्रोणकलशाधवनीयपूतभृतस्तूष्णीं गृहीता एव

* पठेदिति सर्वत्र पाठः जपेदिति तु भवितुमर्हति।

तथापि मन्त्राभावादगृहीतप्रायाः, तेषु चागृहीतेषु उपाकरणे पवमानविच्छेदः, तस्मिन् विच्छिन्ने अध्वर्युप्राणविच्छेदः स्यादिति मन्त्रैस्तानभिमृशेत्, ततश्च नोक्तविच्छेदः इत्यर्थः। मन्त्रैस्तदभिमर्शनं विधत्ते। "उपयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशेदिन्द्राय त्वेत्याधवनीयं विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतं पवमानमेव तत्सन्तनोति सर्वमायुरेति पुरायुषः प्रमीयते पशुमान् भवति विन्दते प्रजां" इति। मन्त्रार्थऽस्तु। हे सोमरस त्वमुपयामेन पार्थिवपात्रेण कलशेन गृहीतोऽसि। 'इयं वा उपयामः' इति श्रुतेः पार्थिवपात्रं उपयामशब्दस्यार्थः. तेन गृहीतं त्वां प्रजापत्यर्थमभिमृशामि। अनेन मन्त्रेण द्रोणकलशमभिमृशेत्। उत्तरयोरपि मन्त्रयोरुपयामगृहीतोऽसीत्यनुषज्यते। तत्राधवनीयकलशपूतभृत्कलशश्चोपयामशब्दस्यार्थः। हे सोमरस उपयामेन मृण्मयेन भाण्डेनाधवनीयकलशेन त्वं गृहीतोऽसि. अतस्त्वां इन्द्रार्थमभिमृशामि। अनेन मन्त्रेणाधवनीयमभिमृशेत्। हे सोमरस उपयामेन मृण्मयेन भाण्डेन पूतभृत्कलशेन गृहीतोऽसि, अतस्त्वां विश्वेभ्यो देवेभ्योऽभिमृशामि। अनेन मन्त्रेण पूतभृतमभिमृशेत्। तेन पात्रत्रयाभिमर्शनेन पवमानस्तोत्रं सन्तनोति। यद्यप्येषु पात्रेष्वैन्द्रवायवादिवत्समन्त्रकं ग्रहणं नास्ति तथापि रसस्तेष्वस्ति। अत एव सूत्रकार आह। 'अभिषुतमध्वर्युरञ्जलिना संसिञ्चति *तमुन्नेतान्तरेषेणोद्धृत्योत्तरत आधवनीयेऽवनयति' इति. 'उद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मिन्नुदी-

* तमुन्नेतान्तरेतरेषेणो० इति सो० २ पु० पाठः।

चीनदशं पवित्रं वितन्वन्ति पवित्रस्य यजमानो नाभिं कृत्वा तस्मिन् द्रोणकलशमभिमृशन् सोमं स्रावयति' इति च. 'पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य य आधवनीये राजा तमसर्वं पूतभृत्यवनीय' इति च। तदेवं त्रिषु सोमरसस्यावस्थितत्वादभिमर्शनमन्त्रेण संस्कृतत्वाच्च केनापि प्रकारेण गृहीता एव पवमानग्रहा भवन्ति। तेन पवमानस्य सन्ततत्वात् यजमानोऽप्यायुरादिकं प्राप्नोति। त एते. पूर्वोक्ता अन्वारोहमन्त्रा अभिमर्शनमन्त्राश्च मूर्धानं मधुश्चेत्यनयोरनुवाकयोरन्तराले द्रष्टव्याः।

अथ विनियोगसंग्रहः।

श्येनस्त्रीन् पवमानेषु त्रिषु मन्त्रान् क्रमाज्जपेत्।
प्रजेन्द्रा विश्वे मन्त्राः स्युरूपयामादिकास्त्रयः।
तैर्द्रोणकलशादीनां स्पर्शो मन्त्रास्तु षण्मताः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः॥०॥

---

त्रीणि वाव सवनान्यथ तृतीयꣳ सवनमवलुम्पन्त्यनꣳशु कुर्वन्त उपाꣳशु हुत्वोपाꣳशु पात्रेꣳऽशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयात् यदाप्याययति तेनाꣳशुमद्यदभिषुणोति तेनर्जीषि सर्वाण्येव तत्सवनान्यꣳशुमन्ति शुक्रवन्ति समावद्वीर्याणि करोति द्वौ

समुद्रौ विततावजूर्यौ पर्यावर्तेते जठरेव पादाः। तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः ॥ १ ॥

सेतुनातियन्त्यन्यं। द्वे द्रधसी सततीं वस्त एकः केशी विश्वा भुवनानि विद्वान्। तिरोधायैत्यसितं वसानः शुक्रमादत्तेऽनुहाय जार्यै। देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं महायज्ञमपश्यन्त-मतन्वताग्निहोत्रं व्रतमकुर्वत तस्माद्द्विव्रतः स्यात् द्वि-र्ह्यग्निहोत्रं जुह्वति पौर्णमासं यज्ञमग्नीषोमीयं ॥ २ ॥

पशुमकुर्वत दार्श्यं यज्ञमाग्नेयं पशुमकुर्वत वैश्वदेवं प्रातःसवनमकुर्वत वरुणप्रघासान्माध्यन्दिनꣳ सवनꣳ साकमेधान् पितृयज्ञं त्र्यम्बकाꣳस्तृतीयसवनमकुर्वत तमेषामसुरा यज्ञमन्ववाजिगाꣳसन् तन्नान्ववायन् ते-ऽब्रुवन्नध्वर्तव्या वा इमे देवा अभूवन्निति तदध्वरस्या-ध्वरत्वं ततो देवा अभवन् परासुरा य एवं विद्वा-न्सोमेन यजते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति। ॥ ३ ॥

अपश्यन्तोऽग्नीषोमीयमात्मना परा चोर्णि च ॥ २ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीय-प्रपाठके द्वितीयोऽनुवाकः ॥ * ॥

आद्यानुवाके विहिताः पवमानग्रहास्त्रयः।

अथ द्वितीये सवनानि निरूप्यन्ते। ततः प्रातःसवनगत उपांशुग्रहपात्रे सोमांशुप्रक्षेपं, तस्य चांशोस्तृतीयसवनगताभिषवसंसर्गं विधत्ते। "त्रीणि वाव सवनान्यथ तृतीयꣳ सवनमवलुम्पन्त्यनꣳशु कुर्वन्त उपाꣳशुꣳ हुत्वोपाꣳशु पात्रेऽꣳशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयात् यदाप्याययति तेनाꣳशुमद्यदभिषुणोति तेनर्जीषि सर्वाण्येव तत्सवनान्यꣳशुमन्ति शुक्रवन्ति समावद्वीर्याणि करोति" इति। प्रातःसवनं माध्यन्दिनं सवनं तृतीयसवनं चेत्येवं सवनानि त्रीण्यवश्यं भवन्ति। सूयते सोम एव प्रातःसवने माध्यन्दिने च न तृतीयसवने। ऋजीषमेव तत्राभिषूयते। अत एव षष्ठकाण्डे गायत्र्याः सोमाहरणप्रस्तावे समाम्नायते। 'पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं यन्मुखेन समगृह्णात् तदधयत् तस्मात् द्वे सवने शुक्रवती प्रातःसवनं च माध्यन्दिनञ्च। तस्मात् तृतीयसवन ऋजीषमभिषुण्वन्ति धीतमिव हि मन्यन्ते' इति। अथैवं सति सोमांशुरहितं तृतीयं सवनं कुर्वन्तो यजमानास्तत्सवनमवलुम्पन्ति विनाशयन्ति। सूयते सोमोऽत्रेत्यस्य सवनशब्दार्थस्यासम्भवात् तस्य सवनत्वं कथं सिध्यति इति तदुच्यते। उपांशुग्रहं हुत्वा तस्मिन्नुपांशुपात्रे कञ्चिदनभिषुतसोमांशुं प्रक्षिप्य तृतीयसवनपर्यन्तं प्रज्ञातं निधाय तृतीयसवने तमंशुं ऋजीषे संसृज्याभिषुणुयात्। तस्मिन्नभिषवे तमंशुं वसतीवरीभिरद्भिराप्याययति। तेनाप्यायनेनेतरसवनवदिदमप्याप्यायितसोममंशुयुक्तं भवति। अंशुना सह अभिषवं कृत्वा निष्पी-

ङनात् ऋजीषयुक्तमपि भवति। एवं च सति, तत्तथा सति, तृतीय-सवनेन सह सर्वाण्यपि सवनानि सोतव्यसोमांशुयुक्तानि शुक्र-वन्ति सूयमानसोमांशुगतरसवन्ति कृत्वा तुल्यवीर्याणि कृतानि भवन्ति। अथानन्तरभाविनोर्मन्त्रयोर्विनियोगमापस्तम्ब आह। 'प्रस्वपस्यन्तो ग्रहानवेक्षन्ते द्वौ समुद्राविति पूतभृदाधवनीयौ द्वे द्रधसी इति द्रोणकलशं' इति। पाठस्तु। "द्वौ समुद्रौ वितता-वजूर्यौ पर्यावर्तेते जठरेव पादाः। तयोः पश्यन्तो अतियन्त्यन्य-मपश्यन्तः सेतुनातियन्त्यन्यं। द्वे द्रधसी सतती वस्त एकः केशी विश्वा भुवनानि विद्वान्। तिरोधायैत्यसितं वसानः शुक्रमादत्ते अनु-हाय जार्यै" इति। तत्र प्रथममन्त्रेण समुद्रद्वयरूपत्वमहोरात्र-द्वयरूपत्वञ्चारोप्य पूतभृदाधवनीयौ स्तूयेते। द्वौ समुद्रौ विततौ विस्तीर्णौ, अजूर्यौ अजीर्णौ कदाचिदप्यशुष्यन्तौ, तादृशावेतौ पर्यायेणावर्तेते। तत्र दृष्टान्तः जठरा समुद्रस्योदरे पादा इव। यथा पादसदृशा ऊर्मयः समुद्रमध्ये पर्यायेणावर्तन्ते प्रथम-मेक आगच्छति पश्चादपर इति तथा पूतभृत्कदाचिदुपयुज्यते कदाचिदाधवनीय इति पर्यायः। तौ समुद्रात्मकौ पूतभृदाध-वनीयौ पुनरहोरात्ररूपौ वर्तेते। तयोर्मध्ये अन्यमहरात्मकं जनाः पश्यन्तोऽतियन्ति उत्तरन्ति। अथान्यं रात्रिरूपं अपश्यन्तो जनाः सेतुसदृशेन नौरूपेण साधनेनातियन्ति। उत्तरस्य हविर्धान-स्योपरिष्टान्नीडे परिश्रितेऽवस्थितस्याधवनीयस्य तिरोहितत्वादपश्यन्त इत्युच्यते। तस्यैव हविर्धानस्य प्रधुरे तिरोधानरहिते पूतभृतोऽव-स्थितत्वात् पश्यन्त इत्युच्यते। चमसगणे पयसां धारकत्वादुभयोः

समुद्रत्वं। अथ द्रोणकलश आदित्यात्मना स्तूयते। एक आदित्यः द्वे द्रधसी अहोरात्रे उभे वाससी वस्ते अहस्करी आच्छादयति। कीदृशे द्रधसी सततो, सातत्येनाविच्छेदेन वर्तेते। तयोर्ह्रो रात्रेश्च मध्ये कश्चित् विच्छेदोऽस्ति। कीदृश एक आदित्यः केशी केशसमानरश्मियुक्तः, विश्वा भुवनानि विद्वान् सर्वान् लोकान् स्वरश्मिभिः प्रकाशयमानः। उक्तयोर्वस्त्रयोर्मध्ये रात्रिरूपं वस्त्रं मलिनं, अहोरूपन्तु शुक्लं। यदा रात्रिरूपमसितं वस्त्रं वसानो वर्तते तदा स्वात्मरूपं तिरोधाय गच्छति। अथ जार्यं जीर्णाया रात्रेः पश्चादनुहाय तदसितं वस्त्रं परित्यज्य शुक्लमहोरूपं श्वेतं वस्त्रमादत्ते। यथायमादित्यः कदाचित् तिरोहितो भवति कदाचिदाविर्भवति. एवमयं द्रोणकलशोऽपि हविर्धानस्याधस्तात् तिरोभूतो वर्तते. हारियोजनग्रहणाय तस्मात् प्रदेशाद्बहिरानीत आविर्भवति. तस्मादयमादित्यसदृश इत्यर्थः। अथ यस्य सोमयागस्य प्रकरणोक्तेभ्यो मन्त्रेभ्यो विधिभ्यश्चान्यान् परिशिष्टान् मन्त्रान् विधींश्च दर्शयितुमिदमौपानुवाक्यकाण्डमारब्धं, तमिमं सोमयागं विधातुं प्रस्तौति। "देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं महायज्ञमपश्यन्तमतन्वताग्निहोत्रं व्रतमकुर्वत तस्माद्द्विव्रतः स्याद्द्विर्ह्यग्निहोत्रं जुह्वति पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत दार्श्यं यज्ञमाग्नेयं पशुमकुर्वत वैश्वदेवं प्रातःसवनमकुर्वत वरुणप्रघासान् माध्यन्दिनꣳ सवनꣳ साकमेधान् पितृयज्ञं त्र्यम्बकाꣳस्तृतीयसवनमकुर्वत तमेषामसुरा यज्ञमन्ववाजिगाꣳसन् तं नान्ववायन् तेऽब्रुवन्नध्वर्तव्या वा इमे देवा अभूवन्निति

तदध्वरस्याध्वरत्वं ततो देवा अभवन् परासुराः” इति। देवाः पूर्वमसुरविजयार्थं यज्ञे यद्यदङ्गमकुर्वत तत्सर्वमसुरा अपि ज्ञात्वा तथैवाकुर्वत। ततो देवानां जयाभावे सति पुनरपि विचार्य जयोपायमेतं सोमाख्यं महायज्ञं निश्चितवन्तः। तं च महायज्ञं असुरा यथा न जानन्ति तथा *प्रच्छन्नमनुष्ठितवन्तः। तच्च नाग्निहोत्रं जुहुम इति बहिः प्रसिद्धं कृत्वा रहसि दीक्षाव्रतमकुर्वत। यस्मादग्निहोत्रं सायं प्रातर्द्विर्बहिर्जुह्वति तस्मादभ्यन्तरे क्षीरपानरूपं व्रतं सायं प्रातश्चेति द्विरनुष्ठेयं। तथा बहिः पौर्णमासं यज्ञं प्रसार्याभ्यन्तरेऽग्नीषोमीयं पशुमकुर्वत। तथा बहिर्दर्शसम्बन्धियोग्यं यज्ञं प्रसार्याऽभ्यन्तरे आग्नेयसवनीयं पशुमकुर्वत। ततश्चातुर्मास्यरूपं वैश्वदेवं पर्व बहिः प्रसार्यान्तः प्रातःसवनमकुर्वत। तथा वरुणप्रघासान् बहिः प्रसार्यान्तर्माध्यन्दिनं सवनमकुर्वत। तथा साकमेधान् पितृयज्ञं त्र्यम्बकांश्च बहिः प्रसार्यान्तस्तृतीयसवनमकुर्वत। तदानीमसुरा देवैः क्रियमाणं यज्ञमनुक्रमेणावगन्तुमैच्छन्। तदानीं बहिः प्रसारितैः अग्निहोत्रादिभिर्हविर्यज्ञैः भ्रान्ताः अन्तस्तं गोप्यं सोमयागमनुक्रमेणावगतवन्तः। ततोऽवगन्तुमशक्ताः परस्परमिदमब्रुवन्, इमे देवा अध्वर्तव्या अस्माभिर्ध्वरितुं हिंसितुमशक्या अभूवन्निति। तत् तस्मात् कारणान्न ध्वर्यन्ते अनेन सोमयागेनेत्यध्वरत्वं तस्य सम्पन्नं। ततोऽध्वरानुष्ठानात् देवा विजयिनोऽभवन्, असुराश्च पराभूताः। इदानीं सोमयागं विधत्ते। “य एवं विद्वान्त्सोमेन यजते भवत्यात्मना परास्य भ्रातृव्यो भवति” इति।

---

*प्रच्छिन्नमिति सर्वत्र पाठः भ्रान्तवद्भाति।

अथ विनियोगसंग्रहः ।

द्वावित्यवेक्षते पूतभृतञ्चाधवनीयकम् ।
द्वे द्रोणकलशं पश्येत् मन्त्रौ द्वाविह वर्णितौ ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके द्वितयोऽनुवाकः ॥ ० ॥

परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान् देवान् परिभूर्मा᳚ सह ब्रह्मवर्चसेन स नः पवस्व शं गवे शं जनाय शमर्वते श᳚ राजन्नोषधीभ्योऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः स्याम । तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे प्राणाय मे वर्चोदा वर्चसे पवस्वापानाय व्यानाय वाचे ॥ १ ॥

दक्षक्रतुभ्यां चक्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथा᳚ श्रोत्रायात्मनेऽङ्गेभ्य आयुषे वीर्याय विष्णोरिन्द्रस्य विश्वेषां देवानां जठरमसि वर्चोदा मे वर्चसे पवस्व कोऽसि को नाम कस्मै त्वा काय त्वा यं त्वा सोमेनातीतृपं यं त्वा सोमेनामीमद᳚ सुप्रजाः प्रजया भू-

यासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषै-र्विश्वेभ्यो मे रूपेभ्यो वर्चोदाः ॥ २ ॥

वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे। बुभूषन्नवेक्षेतैष वै पात्रियः प्रजापति-र्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो भूत्याभि-पवते ब्रह्मवर्चसकामोऽवेक्षेतैष वै पात्रियः प्रजापति-र्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो ब्रह्मवर्च-सेनाभिपवत आमयावी ॥ ३ ॥

अवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्त-मेव तर्पयति स एनं तृप्त आयुषाभिपवतेऽभिचरन्न-वेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव त-र्पयति स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्याꣳ श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति ता-जक् प्रधन्वति ॥ ४ ॥

वाचे रूपेभ्यो वर्चोदा आमयावी. पञ्चचत्वारिꣳ-शच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपा-ठके तृतीयोऽनुवाकः ॥ ० ॥

अनुवाके द्वितीये तु सोमयागे विधिः स्मृतः।

अथ तृतीयानुवाके सोमावेक्षणमुच्यते। कल्पः। 'परिभूरग्निमिति सर्वꣳ राजानं प्राणाय म इत्युपांशुं अपानाय म इत्यन्तर्यामं व्यानाय म इत्युपाꣳशुसवनं वाचे म इत्यैन्द्रवायवं दक्षक्रतुभ्यां म इति मैत्रावरुणं चक्षुर्भ्यां म इति शुक्रामन्थिनौ श्रोत्राय म इत्याश्विनं आत्मने म इत्याग्रयणमङ्गेभ्यो म इत्युक्थ्यमायुषे म इति ध्रुवं' इति. तेजसे मे ओजसे मे वर्चसे मे वीर्याय मे वर्चोदा वर्चसे पवस्वेत्येतैः प्रतिमन्त्रमतिग्राह्यान् षोडशिनमिति विष्णोर्जठरमसीति द्रोणकलशमिन्द्रस्येत्याधवनीयं विश्वेषां देवानामिति पूतभृतं कोऽसि को नामेत्याहवनीयमिति विश्वेभ्यो मे रूपेभ्य इति सर्वꣳ राजानम्' इति च। तत्र प्रथममन्त्रपाठस्तु। "परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान् देवान् परिभूर्माꣳ सह ब्रह्मवर्चसेन स नः पवस्व शङ्गवे शं जनाय शमर्वते शꣳ राजन्नोषधीभ्योऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः स्याम। तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे" इति। हे सोम त्वमग्निं परिभूः परितो व्याप्तवानसि। एवमिन्द्रं विश्वान् देवांश्च व्याप्तवानसि। मां ब्रह्मवर्चसेन सह तिष्ठन्तं व्याप्तवानसि। स त्वन्नोऽस्मान् पवस्व शोधय। हे राजन् अस्मदीयाभ्यो गोजनाश्वौषधीभ्यः शं सुखं प्रयच्छ। हे रयिपते धनपते त्वत्प्रसादात् वयं अच्छिन्नस्यानुपध्वस्तस्य सुवीर्यस्य शोभनपुत्रस्य धनपोषस्य दातारो भवाम। तस्य दानार्थिनो मम रास्व धनं देहि। तस्य तादृशस्य ते तव रसं भक्षीय काले प्राप्ते पिबामि। तस्य ते तव प्रसादादिदमपेक्षितं फलं

उन्मृजे उत्कर्षणात्युज्ज्वलं करोमि। अनेन मन्त्रेण सर्वं राजानं सामान्याकारेणावेक्षते । उपरितनैस्तु मन्त्रैस्तत्तत्पात्रगतं सोमं विशेषाकारेणावेक्षते । तेषां मन्त्राणां पाठस्तु । "प्राणाय मे वर्चोदा वर्चसे पवस्वापानाय व्यानाय वाचे दक्षक्रतुभ्यां चक्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथाꣳ श्रोत्रायात्मनेऽङ्गेभ्य आयुषे वीर्याय विष्णोरिन्द्रस्य विश्वेषां देवानां जठरमसि वर्चोदा मे वर्चसे पवस्व कोऽसि को नाम कस्मै त्वा काय त्वा यं त्वा सोमेनातीतृपं यं त्वा सोमेनामीमदꣳ सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैर्विश्वेभ्यो मे रूपेभ्यो वर्चोदा वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे" इति। हे उपांशुपात्र त्वं वर्चोदाः बलप्रदोऽसि। ततो मे प्राणायोच्छ्वासाय, वर्चसे बलाय पवस्व मां शोधय। अपानायेत्यादिषु मन्त्रेषु मे वर्चोदा वर्चसे पवस्वेति शेषोऽनुषज्यते । सूत्रोक्तान्यन्तर्यामपात्रादीनि सम्बोध्य शेषं पूरयित्वाऽपानायेत्यादयो मन्त्रा योजनीयाः । अपानो निश्वासोऽधोवृत्तिः । व्यानो विष्वग्वृत्तिः । वाक् प्रसिद्धा । दक्षक्रतू प्राणापानौ । 'प्राणो वै दक्षोऽपानः क्रतुः' इति श्रुतेः । चक्षुषी प्रसिद्धे । अत्र शुक्रामन्थिनोर्द्वित्वात् वर्चोदाविति द्विवचनान्तत्वं द्योतयितुमनुषज्यमानस्य पुनः पाठः। श्रोत्रं प्रसिद्धं। आत्मा जीवः। अङ्गानि हस्तपादादीनि । आयुः प्रसिद्धं । वीर्यं सामर्थ्यं । 'विष्णोरिन्द्रस्य' इत्यनयोर्मन्त्रयोर्जठरमसीत्याद्यनुषज्यते । हे द्रोणकलश त्वं विष्णोर्जठरमसि अतो वर्चोदास्त्वं वर्चसे मां पवस्व । एवमाधवनीयपूतभृतोर्मन्त्राविन्द्रस्य विश्वेषां देवानामित्येतौ योज्यौ । हे आह-

वनीय त्वं कोऽसि प्रजापतिरूपोऽसि। 'को ह वै नाम प्रजापतिः' इति श्रुत्यन्तरात्। तथा को नाम कः शब्दः तव नाम, यागसाधकत्वेन सुखहेतुत्वात्। अतः कस्मै प्रजापतितुष्ट्यै त्वामवेक्षे. काय सुखार्थं त्वामवेक्षे। हे आहवनीय यमेवंविधं त्वां सोमेनातीतृपं तर्पितवानस्मि, यथा यं त्वां सोमेनामीमदं हर्षितवानस्मि. अतस्त्वत्प्रसादात् प्रजया भृत्यरूपया सुप्रजाः शोभनभृत्ययुक्तो भूयासं। वीरैः कर्मकुशलैः पुत्रपौत्रादिभिः सुवीरः शोभनपुत्रपौत्रादियुक्तो भूयासं। वर्चसा बलेन सुवर्चा शोभनबलयुक्तो भूयासं। पोषैर्धनादिपुष्टिभिः सुपोषः शोभनपुष्टियुक्तो भूयासं। हे सर्वसमष्टिरूप सोम मे विश्वेभ्यो रूपेभ्यः मम पूर्वोक्तप्राणापानादिसर्वफलसिद्ध्यर्थं वर्चोदाः। त्वं वर्चसे मां शोधयस्वेत्यादिपूर्ववत्। इदनीमेतैर्मन्त्रैः भूतिब्रह्मवर्चसायुरभिचारार्थिनां सोमावेक्षणं क्रमेण विधत्ते। "बुभूषन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो भूत्याभिपवते ब्रह्मवर्चसकामोऽवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो ब्रह्मवर्चसेनाभिपवत आमयाव्यवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्त आयुषाभिपवतेऽभिचरन्नवेक्षेतैष वै पात्रियः प्रजातिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्याꣳ श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति ताजक् प्रधन्वति" इति। बुभूषन् भवितुमिच्छन् ऐश्वर्यकाम इत्यर्थः। पात्रियः पात्रेऽवस्थितः एष सोमः प्रजापतिस्वरूपः। अनेन साध्यो यज्ञोऽपि

प्रजापतिस्वरूपः, अतोऽनेनावेक्षणेन तमेव प्रजापतिं तर्पयति, स च तृप्त एनं यजमानं ऐश्वर्यार्थमभितः शोधयति। एवमुत्तरेष्वपि योज्यं। चतुर्थपर्याये तेनमभिचारविषयं वैरिणं यज्ञात्मा प्रजापतिः प्राणादिभ्योऽन्तरेति वैरिणं वियोजयतीत्यर्थः। स च वैरी तदानीमेव प्रधन्वति म्रियते। अत्र प्राणापानाभ्यामित्यनेन सह पौनरुक्त्यं निवारयितुं दक्षक्रतुभ्यामित्यस्य योगक्षेमाभ्यामित्यर्थो व्याख्यातव्यः।

अथ विनियोगसंग्रहः।

आदौ समष्टिरूपेण परिभूः सोममीक्षते।
प्राणेत्युपांशुमन्येषु मे वर्चेत्यनुषज्यते॥
अपान्तर्यामिकं व्यान शिलां वाचेन्द्रवायवे।
दक्षेति मैत्रावरुणं चक्षुः शुक्रञ्च मन्थिनम्॥
श्रोत्रेत्याश्विनमात्माग्रयणमङ्गेभ्य उक्थ्यकं।
आ ध्रुवं वी षोडशिनं विष्णोस्तु द्रोणकुम्भकम्॥
इन्द्रेत्याधवनीयाख्यं जठरो यस्तयोर्द्वयोः।
विश्वे पूतभृतं कोऽसि वोचेताहवनीयकम्॥
विश्वे पश्येत् सर्वसोमान् मन्त्राः सप्तदशेरिताः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः॥०॥

. स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः। यज्ञिया यज्ञकृतः स्थ ते मास्मिन् यज्ञ उप-ह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुपदेवा उपयज्ञ उप मा होत्रा उपहवे ह्वयन्तां नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्या-हवनीयमुपतिष्ठते यज्ञो वै मखः ॥ १ ॥

यज्ञं वाव स तद्हन्तस्मा एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं तस्मा एव नमस्कृत्य सदः प्रसर्पत्या-त्मनोऽनार्त्यै। नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमाशिषमेवैतामाशास्त इन्द्रि-यस्य वीर्यस्यानिर्घाताय या वै ॥ २ ॥

देवताः सदस्यार्तिमार्पयन्ति यस्ता विद्वान् प्रस-र्पति न सदस्यार्तिमार्छति नमोऽग्नये मखघ्न इत्याहैता वै देवताः सदस्यार्तिमार्पयन्ति ता य एवं विद्वान् प्रसर्पति न सदस्यार्तिमार्छति दृढे स्थः शिथिरे समी-ची माऽꣳहसस्पातꣳ सूर्यो मा देवो दिव्यादꣳहस-स्पातु वायुरन्तरिक्षात् ॥ ३ ॥

अग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्यो

देवी द्वारौ मा मा सन्तांप्तं नमः सदसे नमः सदसस्प-
तये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः
पृथिव्या अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद
योऽस्मत्पाकतर उन्निवत उद्वतश्च गेषं पातं मा
द्यावापृथिवी अद्याह्नः सदो वै प्रसर्पन्तं ॥ ४ ॥

पितरोऽनुप्रसर्पन्ति त एनमीश्वरा हिꣳसितोः सदः
प्रसृप्य दक्षिणार्द्धं परेक्षेतागन्त पितरः पितृमानहं
युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्तेति
तेभ्य एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै ॥ ५ ॥

मखो वा अन्तरिक्षात् प्रसर्पन्तं चयस्त्रिꣳशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपा-
ठके चतुर्थोऽनुवाकः ॥*॥

कल्पः। 'स्फ्यः स्वस्तिरित्युत्करे वेदिकरणानि परास्योपतिष्ठते' इति। पाठस्तु। "स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः। यज्ञिया यज्ञकृतः स्थ ते मास्मिन् यज्ञ उपह्वयध्वं" इति। स्फ्यः खननहेतुः। विघनो भूमिघट्टनहेतुः। पर्शुस्तृणादिच्छेदनहेतुः। परशुर्वृक्षादिच्छेदनहेतुः। तत्रायं स्फ्यः स्वस्ति-

रविनाशहेतुरस्तु। एवमितरेष्वपि योज्यं। एतैः स्फ्यादिभिर्निष्पन्ना वेदिरपि नोऽस्माकं स्वस्तिरस्तु। हे स्फ्यादयो यूयं यज्ञिया यज्ञार्हाः, अतोऽत्र यज्ञकृतः स्थ यज्ञसम्पादका भवत। ते यूयं मामस्मिन् यज्ञ उपह्वयध्वमनुजानीत। कल्पः। 'उप मा द्यावापृथिवी इति द्यावापृथिवी उपास्ताव इति बहिष्पवमानास्तावं कलश इति कलशं सोम इति सोमं अग्निरित्यग्निं उपदेवा इति देवानुप यज्ञ इति यज्ञमुप मा होत्रा इति होत्रकान् ह्वयेतां ह्वयन्तां ह्वयतामिति यथालिङ्गं सर्वत्रानुषजति' इति। एतेषां पाठस्तु। "उप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्तां" इति। इमे द्यावापृथिव्यौ मामुपह्वयेतां मामनुजानीतां। अयमास्तावो बहिष्पवमानदेशः। अत्र यथायोगमनुषङ्गद्योतनायोपशब्दः प्रयुक्तः। एवं द्रोणकलशादिषु योज्यं। तत्र तत्रोपशब्दस्यानुषङ्गद्योतनाय प्रयुक्तः। उपह्वयतेऽस्मिन्नित्युपहवो यज्ञः, तस्मिन यज्ञे प्रशास्तृब्राह्मणाच्छंस्यादयो होत्रका मामुपह्वयन्तां। एतैर्मन्त्रैर्यथावत् यज्ञाङ्गमुपस्थातव्यं, आहवनीयस्योपस्थातव्यं। आहवनीयस्योपस्थानं विधत्ते। "नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्याहवनीयमुपतिष्ठते यज्ञो वै मखो यज्ञं वाव स तद्हन् तस्मा एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै" इति। नमस्काराभावे मखं यज्ञं हन्ति इति मखहा तस्मै मखघ्नेऽग्नये नमोऽस्तु। तस्य प्रसादात् मखस्य यशः यज्ञानुष्ठानकीर्तिः मां अर्यात् प्राप्नोतु। अस्मिन्मन्त्रे मखशब्देन यज्ञ उच्यते। यज्ञमेव सोऽग्निस्तदा हन्ति यदा नमस्कारो न क्रियते,

अतस्तस्मा एवं नमस्कृत्य सदसः प्राप्तौ सत्यां यजमानशरीरस्यार्तिर्न भवति। यदुक्तं सूत्रकारेण 'नमोऽग्नये मखघ्न इत्याहवनीयं नमो रुद्राय मखघ्न इत्याग्नीध्रं नम इन्द्राय मखघ्न इति होत्रीयं' इति। उपतिष्ठत इत्यनुवर्तते। तत्राहवनीयोपस्थानं विधायाग्नीध्रस्योपस्थानं विधत्ते। "नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं तस्मा एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै" इति। आग्नीध्रीये धिष्ण्येऽवस्थितोऽग्निर्मखहा रुद्रः, तस्मै रुद्राय नमोऽस्तु। अनया नमस्कृत्या हे रुद्र मां पाहीत्यनेन मन्त्रेणाग्नीध्रमग्निमुपतिष्ठेत। तस्मा इत्यादि पूर्ववत्। अथ होत्रीयस्य धिष्ण्यस्योपस्थानं विधत्ते। "नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमाशिषमेवैतामाशास्त इन्द्रियस्य वीर्यस्यानिर्घाताय" इति। परमैश्वर्ययोगात् होत्रीयो धिष्ण्योऽग्निः इन्द्रः यज्ञघाती, तस्मै नमोऽस्तु। हे इन्द्र मदीयमिन्द्रियं वीर्यं च मा विनाशय। अनेन मन्त्रेण होत्रीयस्योपस्थाने सति आशिषमेव प्रार्थितवान् भवति। सा चाशीरिन्द्रियस्य वीर्यस्याविनाशाय सम्पद्यते। उक्तमन्त्रत्रयोपस्थानं प्रशंसति। "या वै देवताः सदस्यार्तिमार्पयन्ति यस्ता विद्वान् प्रसर्पति न सदस्यार्तिमार्च्छति नमोऽग्नये मखघ्न इत्याहैता वै देवताः सदस्यार्तिमार्पयन्ति ता य एवं विद्वान् प्रसर्पति न सदस्यार्तिमार्च्छति" इति। अग्निरुद्रेन्द्ररूपाः या देवताः सदस्यवस्थितयजमानादीन् आर्तिं प्रापयन्ति. यो यजमानस्तत्कृतं विद्वान् ताः देवताः प्रसर्पति नमस्कारेण भजते. असौ सदसि प्रविष्टोऽपि आर्तिं न प्राप्नोति। तस्मान्नमोऽग्नय इत्यादीन् पूर्वोक्तान् मन्त्रान् पठेत्।

कल्पः। 'दृढे स्थः शिथिरे समीची इति द्यावापृथिवी उपतिष्ठते सूर्यं वायुमग्निं यमं सरस्वतीं सदसो द्वाराविति पातं पात्विति यथालिङ्गं सर्वत्रानुषजति' इति। ततः प्रथममन्त्रपाठस्तु। "दृढे स्थः शिथिरे समीची माꣳहसस्पातꣳ सूर्यो मा देवो दिव्यादꣳहसस्पातं" इति। हे द्यावापृथिवी उपस्थानरहितं प्रति शिथिले अपि युवामुपस्थातारं प्रति समीची अनुकूले सत्यौ दृढे स्थः। अत उपस्थातारं मां प्रतिबन्धकादंहसः पातं। द्वितीयमन्त्रपाठस्तु। "सूर्यो मा देवो दिव्यादꣳहसस्पातु" इति। द्युलोकविषयात् मया कृतादंहसो मां सूर्यो देवः पातु। उत्तरमन्त्रपाठस्तु। "वायुरन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्यो देवी द्वारौ मा मा सन्ताप्तं" इति। वाय्वग्नियमसरस्वतीमन्त्रेषु पात्वित्यनुषञ्जनीयं। हे द्वाररूपे देव्यौ उपस्थातारं मां युवां मा सन्ताप्तमिति सन्तापयुक्तं मा कुरुतं। कल्पः। 'नमः सदस इति सदो नमः सदसस्पतय इति ब्रह्माणं नमः सखीनां पुरोगाणामित्यृत्विजो नमो दिवे नमः पृथिव्या इति द्यावापृथिवी उपस्थाय' इति। तृतीयमन्त्रान्ते चक्षुष इतीदमाम्नातं। ऋत्विजो यजमानस्य सखायः, तदीयकार्यनिष्पादकत्वात्। ते च स्वस्वव्यापारे पुरतो गच्छन्तीति पुरोगाः, तेषां चक्षुषे चक्षुःस्थानीयाय स्वस्वप्रयोगाभिज्ञाय नमः। कल्पः। 'अहे दैधिषव्येत्यायतनात् तृणं निरस्य' इति। औदुम्बर्या दक्षिणभागो यजमानस्यायतनं। अत एव सूत्रकार आह। 'अपरेण ब्रह्मसदनं यजमानायतनं' इति। पाठस्तु। "अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः" इति। धारणसमर्थं स्थानं

दिधिषु। तत्रोत्पन्नत्वात् दैधिषव्यं। अहिशब्दस्तृणलक्षकः सर्पवदुपद्रवकारित्वात् यजमानायतने समुत्पन्नः। हे तृण त्वं अतोऽस्मात् स्थानादुत्तिष्ठ। योऽन्यः पुरुषोऽस्मात् पाकतरो बालतरोऽप्रबुद्धः तस्यान्यस्य सदने स्थाने तिष्ठ। कल्पः। 'उन्निवत उदुद्वतश्च गेषमित्युपविशति' इति। ये पुरुषा मत्तोऽन्यग्भूताः ते निवन्तः न्यग्भूतेषु निशब्दस्य विद्यमानत्वात्, तान् पुरुषानहं उद्गेषं उद्गतोऽस्मि। येऽपि मत्त उद्गताः ते पुरुषा उद्वन्तः उच्छब्दस्य विद्यमानत्वात् तानप्यहमुद्गेषं उल्लङ्घ्योपरिगम्यासं। कल्पः। 'पातं मा द्यावापृथिवी अद्याह्न इत्युपविश्य जपति' इति। अद्यास्मिन्दिवसे यदिदमहःशब्दवाच्यमग्निष्टोमानुष्ठानं तस्मात् मां हे द्यावापृथिव्यौ पातं, तस्मिन्नहनि वैकल्यं यथा न भवति तथा मां रक्षतमित्यर्थः। यदुक्तं सूत्रकारेण। 'आगन्त पितरः पितृमानिति दक्षिणार्धं परेक्षेत' इति। तदेतद्विधत्ते। "सदो वै प्रसर्पन्तं पितरोऽनुप्रसर्पन्ति त एनमीश्वरा हिंसितोः सदः प्रसृप्य दक्षिणार्धं परेक्षेतागन्त पितरः पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्तेति तेभ्य एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै" इति। सदः प्रसर्पन्तं यजमानमनु पितरोऽनुप्रसर्पन्ति तं यजमानं अनमस्कृताः पितरो हिंसितुं प्रभवन्ति। अतः सदसो दक्षिणभागं अवेक्षमाणा आगन्तेत्यादिमन्त्रं पठेत्। हे पितरः आगन्तन सदसः स्थानमागच्छत। आगतैर्युष्माभिरहं पितृमान् भूयासं। यूयं च मया सुप्रजसः शोभनापत्ययुक्ता भूयास्त। अनेन मन्त्रेण पितॄणां नमस्कृतत्वात् यजमानस्यार्तिर्न भवति।

अथ विनियोगसंग्रहः।

स्फ्य उत्करे परिक्षिप्तं स्फ्यं तत्रैवोपतिष्ठते।
उप द्युभूमी अन्येषूप मा ह्वेत्यनुषज्यते॥
आस्ता चेति स्तोत्रदेशङ्कलेति द्रोणकुम्भकम्।
सोमः सोमं चाग्निरग्निमुप देवेति देवताः॥
उप यज्ञेति यज्ञं तमुप मेति तु होत्रकान्।
नमस्त्वय विधिस्पष्टो दृढे स्थो द्युभुवौ भजेत्॥
सूर्यः सूर्यं वायु वायुं पालित्येषोऽनुषज्यते।
अग्निर्यमसरस्वत्येतां दे द्वारौ सदसो भजेत्॥
सदो ब्रह्मा चर्त्विजो द्यौर्भूर्नमः पञ्चभिः क्रमात्।
अहे तृणं निरस्योन्नीत्युपविश्यात्र यो जपेत्॥
आगन्त दक्षिणं पश्येत् मन्त्रा विंशतिरीरिताः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः॥०॥

भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्याꣳ सध्यासं नृचक्षसं त्वा देव सोमसुचक्षा अवख्येषं मन्द्राभिभूतिः केतुर्य-

ष्मानां वाग्जुषाणा सोमस्य तृप्यतु मन्द्रा स्ववीच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे ॥ १ ॥

शम्भूर्मयोभूः स्वस्ति मा हरिवर्ण प्रचर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन्वि बीभिषो मा मे हार्दि त्विषा वधीः। वृषणे शुष्मायाऽऽयुषे वर्चसे। वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुपछन्दस इन्द्रपीतस्य नराशंसपीतस्य ॥ २ ॥

पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयाम्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि। आप्यायस्व समेतु ते विश्वतः सोम वृष्णियं। भवा वाजस्य सङ्गथे। हिन्व मे गात्रा हरिवो गणान् मे मा वितीतृषः। शिवो मे सप्त ऋषीनुप तिष्ठस्व मा मेऽवाङ्नाभिमति ॥ ॥ ३ ॥

गाः अपाम सोमममृता अभूमादर्श्म ज्योतिरविदाम देवान्। किमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य। यन्म आत्मनो मिन्दाऽभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः। पुनरग्निश्चक्षुरदात् पुनरिन्द्रो बृहस्पतिः। पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः। इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य ॥ ४ ॥

शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि। आपूर्या स्था मा पूरयत प्रजया च धनेन च। एतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामन्वत्र पितरो यथाभागं मन्दध्वं नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः ॥ ५ ॥

स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वो य एतस्मिन् लोके स्थ युष्मा२ँस्तेऽनु येऽस्मिन् लोके मां तेऽनु य एतस्मिन् लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिन् लोकेऽहं तेषां वसिष्ठो भूयासं प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ॥ ६ ॥

यत्कामास्ते जुहुमस्तन्नो अस्तु वय२ँ स्याम पतयो

रयीणां । देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैन-सोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्यप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुषस्स्तुतस्तोमस्य शस्तो-क्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभि-र्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामि ॥ ७ ॥

विश्वचर्षणे त्रिष्टुप्छन्दस इन्द्रपीतस्य नराशंसपी-तस्यातिस्तुतस्तोमस्य जीवाय नमो वः पितरो बभूव चतुश्चत्वारिंशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीय-प्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

स्फ्याद्युपस्थानमन्त्रा ये ते चतुर्थे समीरिताः ।

अथ पञ्चमे भक्षमन्त्रा उच्यन्ते । कल्पः । 'भक्षेहीति भक्षमा-ह्रियमाणं प्रतीक्ष्य' इति । पाठस्तु । "भक्षेहि माऽऽविश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो मे हृदोऽसि" इति । हे भक्षयोग्य सोमरस त्वं दीर्घायुत्वादिसिद्ध्यर्थ-मागच्छ । मां प्रविश । सुखकारित्वं देहशन्तनुत्वं । हे वसो निवास-हेतोऽस्मान् वासयितुमागच्छ । हे पुरोवसो वासयितृणां धना-

दीनां मध्ये प्रथमवासयितृत्वात् मे हृदो मम चित्तस्य प्रियोऽसि। कल्पः। 'अश्विनोस्त्वा बाहुभ्याᳬं सघ्यासं इति प्रतिगृह्य' इति। हे भक्ष अश्विनोर्देवानां भिषजोर्बाहुभ्यां त्वां सघ्यासं गृह्णामि। कल्पः। 'नृचक्षसं त्वा देव सोमेत्यवेक्ष्य' इति। पाठस्तु। "नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषं" इति। हे सोम नृचक्षसं नॄन् चष्टे पश्यति तादृशं त्वां सुचक्षाः सुष्ठु द्रष्टाऽहमवख्येषमवेक्षे। कल्पः। 'मन्द्राभिभूतिरिति प्रातःसवने सर्वानैन्द्रान् भक्षयति नराशᳬंसपीतस्येति नाराशᳬंसान् रुद्रवद्गणस्येति माध्यन्दिने सवने सर्वानैन्द्रान् भक्षयति नराशᳬंसपीतस्येति नाराशᳬंसानादित्यवद्गणस्येति तृतीयसवने सर्वानैन्द्रान् भक्षयति नराशᳬंसपीतस्येति नराशᳬंसादन्यत् प्राग्वसुमद्गणात् सर्वत्रानुषजत्यप्यन्यदेव तानिन्द्रपीतस्येति यथादेवतं वा' इति। अत्र नाराशंसनामकानां चमसानां लक्षणं सूत्रकारेणैव दर्शितं। 'भक्षितानाप्याययन्त्याप्यायस्व समेतु त इति ते नाराशंसाः' इति। पाठस्तु। "मन्द्राभिभूतिः केतुर्यज्ञानां वागजुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिरनाहतशीर्ष्णी वागजुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे शंभूर्मयोभूः स्वस्ति मा हरिवर्ण प्रचर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन्वि बीभिषो मा मे हार्दि त्विषा वधीः। वृषणे शुष्मायायुषे वर्चसे। वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य नराशᳬंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य

नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षया-म्यादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगती-च्छन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूत-स्योपहूतो भक्षयामि” इति। मुखस्थिता वाग्देवता सोमस्य जुषाणा सोमं सेवमाना तृप्यतु। कीदृशी वाक् मन्द्रा हर्षहेतुः। अभिभूतिः विघ्नानामभिभवित्री। यज्ञानां केतुः कारणभूता। आदरार्थं पुनरपि मन्द्रेत्यादिना प्रार्थ्यते। मन्द्रा हर्षहेतुः। स्वर्वाची सुष्ठु आ-भिमुख्येन वर्तमाना। अदितिरखण्डनीया। अनाहतशीर्ष्णी. शिरः-शब्देन प्राधान्यात् प्रारम्भो लक्ष्यते. अप्रतिबद्धप्रारम्भेत्यर्थः। वागि-त्यादि पूर्ववत्। चर्षणयो मनुष्याः, विश्वे चर्षणयः स्वभूता यस्यासौ विश्वचर्षणिः। तथाविध हे सोम एहि आगच्छ। कीदृशः सोमः शम्भूः शान्तेर्भावयिता। मयोभूः सुखस्य भावयिता। तादृशः सन् इत्यन्वयः। हे हरिवर्ण हरिद्वर्ण स्वस्ति मां प्रचर. यान्तिरूपो विनाशो न भवति तथा मां प्रविश। किमर्थं क्रत्वादिसिद्ध्यर्थं। दक्ष उत्साहः। हे राजन् मां वान्त्युपद्रवेण मा विबीभिषः विशेषेण मा भी-षय। हृदयपुण्डरीकेऽवस्थितं मनो हार्दि. तच मनस्त्विषा त्वदीयया दीप्त्या मा वधीः हिंसां मा कुरु। मनसि हिंसारहिते सति वृषा-दयः सिध्यन्ति। वृषणेन्द्रियं. शुष्मो बलं. आयुर्दीर्घायुः, वर्चः कान्तिः। हे सोम देव ते तव सम्बन्धि यत्प्रातःसवनं तस्य सम्बन्धी यो मधुमान् स इतरैरुपहूतोऽनुज्ञातः तस्योपहूतस्याहमप्युपहूतो भक्षयामि। की-दृशस्य ते वसुमद्गणस्य अष्टसङ्ख्याका वसवो यस्मिन् गणे सोऽयं वसु-मान् तथाविधो गणो यस्य तव स त्वं वसुमद्गणः तथाविधस्य। मति-

विदः श्रद्धायुक्तानां यजमानानां मतिं वेत्ति इति मतिवित् तस्य। कीदृशस्य प्रातःसवनस्य गायत्रच्छन्दसः बहिष्पवमानादिमन्त्रेषु गायत्र्याख्यं छन्दो यस्य तद्गायत्रच्छन्दः तस्य। इन्द्रपीतस्य इन्द्रेण पीतः सोमो यस्मिन् सवने तदिन्द्रपीतं तस्य। नराशंसपीतस्य पितृपीतस्येति पदद्वयं नराशंसचमसभक्षण एव प्रयोक्तव्यं नान्यत्रेत्येकः पक्षः। सर्वत्र पठितव्यमित्यपरः पक्षः। नरैः शंस्यन्त इति नराशंसाः पितृविशेषाः, तैः पीतः सोमो यस्मिन् सवने तन्नराशंसपीतं तस्य। अयमेवार्थः पितृपीतस्येत्यनेन स्पष्टीकृतः। रुद्रवद्गणस्यादित्यवद्गणस्येत्येतावपि मन्त्रौ पूर्ववत् व्याख्येयौ। तत्रोभयत्र मन्द्रादिरनुषज्यते। कल्पः। 'भक्षितानाप्याययन्त्याप्यायस्व समेतु त इति ते नराशंसाः' इति। पाठस्तु। "आप्यायस्व समेतु ते विश्वतः सोम वृष्णियं। भवा वाजस्य सङ्गथे" इति। हे सोम त्वमाप्यायस्व सर्वतो वर्धस्व। ते तव वृष्णियं वीर्यं विश्वतः समेतु सर्वतः सङ्गच्छतां। त्वमपि वाजस्याऽन्नस्य सङ्गथे सङ्गमने निमित्तं भव। कल्पः। 'हिन्व मे गात्रा हरिव इति भक्षयित्वा नाभिदेशानभिमृशन्त' इति। पाठस्तु। "हिन्व मे गात्रा हरिवो गणान् मे मा वितीतृषः शिवो मे सप्तर्षीनुपतिष्ठस्व मा मे वाङ्नाभिमतिगाः" इति। हे हरिवो हरितवर्ण सोम मे गात्रा ममाङ्गानि हिन्व प्रीणय। मदीयान् गणान् पुत्रादिसमूहान् मा वितीतृषः सोमपाने तृष्णारहितान् मा कुरु, किन्तु सर्वदा तदिच्छान् कुरु। किञ्च त्वं शिवो भूत्वा सप्तर्षीन् मूर्धच्छिद्रसप्तकावस्थितान् मदीयान् प्राणानुपतिष्ठस्व तर्पयेत्यर्थः। किञ्च मदीयां नाभिमतीत्य मागाः अधोविवरेण मा निर्गच्छेत्यर्थः। कल्पः।

'समित्पाणय उन्नेतारं पुरस्कृत्याप्रतीक्षमायान्त्यपाम सोममिति महीयां वदन्तः' इति। अतः पूर्वमुक्ताः सर्वे मन्त्राः ऋतुयहानुवाकात् पूर्वं द्रष्टव्याः। अपाम सोमेत्ययं तु मन्त्रोऽवभृथाङ्गत्वादुरुꣳ हि राजेत्यनुवाके प्रत्यस्तो वरुणस्य पाश इत्यस्मादुपरिष्टात् द्रष्टव्यः। पाठस्तु। "अपाम सोममम्मृता अभूमादर्श्म ज्योतिरविदाम देवान्। किमस्मान् कृणवदरातिः किमु धूर्तिरम्मृत मर्त्यस्य" इति। वयं सर्वे सोममपाम तेन पीतेनामृताः देवा अभूम। आशंसाद्योतनाय भूतार्थनिर्देशः। ज्योतिरादित्यस्वरूपमदर्श्म दृष्टवन्तः। अतः देवानिन्द्रादीनविदाम लब्धवन्तः। ईदृशानस्मानरातिः पापरूपः शत्रुः किं कृणवत् किं करिष्यति। मर्त्यस्य मनुष्यशरीरधारिणो या धूर्तिर्हिंसा सेयमम्मृत किमु अमृतानस्मान् किं नाम करिष्यति। अथवा धूर्तिरमृतं। अस्मद्विषया हिंसा स्वयमेव नष्टा सा तादृशी नोऽस्मान् बाधत इति किमु वक्तव्यं। कल्पः। 'यन्म आत्मनो मिन्दाऽभूदिति मिन्दयाऽऽहवनीयमुपतिष्ठते'। पाठस्तु। "यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः" इति। मे मम ऋत्विजो यदङ्गमात्मनो मिन्दाभूत् स्वरूपान्निन्दितं हिंसितमभूत्। अग्निस्तदङ्गं पुनराहाः आहरतु। कीदृशोऽग्निर्जातवेदाः. जातं यस्माच्छिद्रं वेत्ति इति जातवेदाः। विचर्षणिः तत्पुनः समाधातुं विचक्षणः। तत्रैव विकल्पितं मन्त्रान्तरमाह।

'पुनरग्निश्चक्षुरदात् पुनरिन्द्रो बृहस्पतिः।
पनर्मे अश्विना युवं चक्षुराधत्तमक्ष्योः'॥ इति॥

यज्ञे यदङ्गं न्यूनं भवति तेन यजमानस्यैव चक्षुर्हीयते। 'यज्ञं

पराभवन्तं यजमानोऽनु पराभवति' इति श्रुत्यन्तरात्। अस्मादय-मग्निर्यज्ञाङ्गसमाधानेन यजमानाय मह्यमेव चक्षुः पुनर्दत्तवान्। तथैवेन्द्रो बृहस्पतिश्च यज्ञाङ्गसमाधानाय मदीयं चक्षुः पुनर्दत्तवन्तौ। अश्विनौ युवामप्यक्ष्णोर्मदीयात्वोश्चक्षुर्दर्शनसामर्थ्यमाधत्तं। कल्पः। 'सर्वे हारियोजनं भक्षयन्तीष्टयजुषस्ते देव सोम' इति। पाठस्तु। "इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य शस्तोक्थस्य हरिवत इन्द्रपी-तस्य मधुमत उपहूतस्योपहूतो भक्षयामि" इति। हे सोम देव ते तव सर्व्वैरस्मदुपहूतैरनुज्ञातैरनुज्ञातोऽहं भक्षयामि। कीदृशस्य ते, इष्टयजुषः इष्टसाधनानि यागसाधनानि यजूंषि यस्य सोऽयमिष्ट-यजुः तस्य। स्तुता स्तोमाः सामावृत्तिलक्षणानि स्तोत्राणि यस्य सोऽयं स्तुतस्तोमस्तस्य। शस्तानि शंसितान्युक्थानि शस्त्राणि यस्य सो-ऽयं शस्तोक्थः तस्य। हरिर्हरितवर्णः, सोऽस्यास्तीति हरिवान् तस्य। इन्द्रेण पीतस्तस्य। मधु माधुर्यमस्यास्तीति मधुमान्। अन्यैरनुज्ञात उपहूतस्तस्य। कल्पः। 'आपूर्या स्था मा पूरयतेत्युत्तरवेद्याꣳ शेषान् न्युप्य' इति। शेषानवशिष्टान् सोमभागान्। पाठस्तु। "आपूर्या स्था मा पूरयत प्रजया च धनेन च" इति। हे धाना सोमशेषा यूयमापूर्या स्थ सर्वतः पूर्णा स्थिताः भवत. अतो मां प्रजया च धनेन च सर्वतः पूरयत। यन्म आत्मन इत्यादयो मन्त्रा हरिरसि हारियोजन इत्यनुवाकान्ते द्रष्टव्याः। कल्पः। 'सर्वे स्वं स्वञ्चमसमनून्यन्ते त्रीन् त्रीन् पुरोडाशशकलानुपवपन्त एतत्ते तत ये च त्वामन्वित्येतैः प्रति-मन्त्रं' इति। चमसमनून्यन्ते चमससमीपे। पाठस्तु। "एतत्ते तत ये च त्वामन्वेतत्ते पितामह प्रपितामह ये च त्वामन्वत्र पितरो यथा-

भागं मन्दध्वं” इति। हे तत अस्मत्पितः एतत् पुरोडाशशकलरूपं ते तवान्नं. ये चान्ये त्वामनुगतास्तेषामप्येतदन्नं। पितामहेति मन्त्रे ये च त्वामनु इत्युत्तरानुषङ्गः। प्रपितामहेति मन्त्र एतत्त इति पूर्वानुषङ्गः। हे पितरः सर्वेऽपि यूयमत्रास्मिन् कर्मणि यथाभागं स्वस्वभागानुसारेण मन्दध्वं हृष्टा भवत। कल्पः। ‘नमो वः पितरो रसायेति नमस्कारान् जपति’ इति। पाठस्तु। “नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वो य एतस्मिन् लोके स्थ युष्माꣳस्तेऽनु येऽस्मिन् लोके मां तेऽनु य एतस्मिन् लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिन् लोकेऽहं तेषां वशिष्ठो भूयासं” इति। हे पितरो युष्माकं यो रसः सारः तस्मै नमः। एवमुत्तरत्र। शुष्माय बलाय। जीवाय जीवात्मने। स्वधायै भवदीयहविर्दात्र्यै। मन्यवे क्रोधाय। घोराय शिलारूपोग्रकार्याय। हे पितरो युष्मभ्यमपि नमोऽस्तु। ये यूयमन्यैः सह एतस्मिन् पितृलोके स्थ ते युष्माननुवर्तन्तां। ये यूयमस्मिन् लोके स्थ ते यूयं मामनुवर्तध्वं। अन्यैर्बहुभिः सह ये यूयमेतस्मिन् पितृलोके स्थ तेषामन्येषां वसिष्ठा वासयितृतमा यूयं भूयास्त। ये च मनुष्या अस्मिन् लोके मया सह स्थिताः तेषां मनुष्याणां वासयितृतमो भूयासं। कल्पः। ‘प्रजापते न त्वदेतानीति प्राजापत्ययर्चा वितिष्ठन्ते’ इति। वियुज्य गच्छेयुरित्यर्थः। पाठस्तु। “प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणां” इति।

हे प्रजापते त्वदन्यः कोऽपि पुरुषः उत्पन्नानि तान्येतानि विश्वानि न परिबभूव परिभवितुं समर्थो नाभूत्। परिभवः सृष्टेरप्युपलक्षणं। सृष्टिसंहारयोः शक्त इत्यर्थः। अतस्ते तव वयं यत्कामा जुहुमः तत्फलमस्माकमस्तु। वयं धनानां पतयः स्याम। एतत्ते ततेत्याद्या मन्त्राः वाममद्य सवितरित्यस्मादनुवाकात् पूर्वं द्रष्टव्याः। कल्पः। 'देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्यात्मकृतस्यैनसोऽवयजनमस्यन्यकृतस्यैनसोऽवयजनमस्येनस एनसोऽवयजनमसि स्वाहेत्याहवनीये षट् शकलान्यभ्याधाय' इति। अत्र शकलानामभ्याधातारः सर्वेऽपि हारियोजनभक्षिणः। आत्मकृतस्येत्यादिमन्त्रत्रयक्षतं। हे शकल देवविषये यदस्माभिः कृतमेनः तस्यावयजनं विनाशकमसि। एवं मनुष्यपितृमन्त्रयोर्योज्यं। कल्पः। 'अपरेण चात्वालमास्तावे वा प्रत्यञ्चस्त्वमसिनः स्वं स्वञ्चमसरसमवघ्रेण भक्षयन्त्यप्सु धौतस्य सोम देव ते' इति। पाठस्तु। "अप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुषस्स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामि" इति। हे सोम देव प्रक्षालनाभिषवादिविशेषणोपेतस्य ते सम्बन्धी यो भक्षणभागोऽश्वसनिरश्वप्रदः यश्च गोसनिर्गोप्रदः तदीयस्य तस्य भक्षभागस्य पितृभिरपि स्वभक्षत्वेन स्वीकृतस्येतरैरनुज्ञातस्यांशमद्भिरनुज्ञातोऽहमाघ्राणेन भक्षमामि। देवकृतस्याप्सु धौतस्यैते मन्त्राः हरिरसीत्येतस्मादनुवाकादूर्द्धं द्रष्टव्याः।

अथ विनियोगसंग्रहः।

भक्ष भक्ष्यां प्रतीच्यग्निं गृहीत्वा नृच वीक्षते।
मन्त्रेति भक्षयेत्त्रेधा वसुरुद्रादिभेदतः॥
आप्या भक्षितमाप्याय्य हिन्व नाभ्यभिमर्शनम्।
अपाम छत्वावभृथं समायात्यप्रतीक्षणम्॥
यन्मे पुनर्भजेदग्निमिष्टाद्याद्धारियोजनम्।
आपू वेद्यां शेषवाप एतत्ते त्रिभिरावपेत्॥
पुरोडाशांशकान् भूमौ नमस्त्वमसिनां जपः।
प्रजा चमसिनो यान्ति देवकृतो समित्त्रयम्॥
अप्सु जिघ्रन्ति तच्छेषं द्वाविंशतिरिहोदिताः।

अथ मीमांसा। तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्। अ० ९।

भक्षे हीत्यनुवाकोऽयं *सर्वो भक्षणयोग्युत।
ग्रहणादौ †यथालिङ्गं विभज्य व्यवतिष्ठते॥
अविधेर्ग्रहणादीनां भक्षणे निखिलस्तु सः।
अर्थाच्चिह्नेषु तेष्वेव यथालिङ्गं विभज्यते॥

ज्योतिष्टोमे हुतस्य सोमस्य शेषभक्षणं विहितं 'अभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्ति' इति। तस्मिन् भक्षणे ग्रहणावेक्षणनिगरणसम्यग्जरणरूपाश्चत्वारो व्यापाराः सन्ति। मन्त्राश्च भक्षे हीत्याद्यनुवाके समाम्नाताः। तत्र भक्षणं यथा साक्षाच्चोदितं न तथा ग्रहणावेक्षणनिगरणसम्यग्जरणानि चोदि-

* सर्वो भक्षणमागमुतेति न्या० मा० वि०।
† यथायोगमिति न्या०।

तानि। नचाविहितेषु मन्त्रा विनियोगमर्हन्ति। समाख्या तु भक्ष्यानुवाक इत्येवंरूपा भक्षणमात्रविषया. तस्मात् कृत्स्नस्याप्यनुवाकस्य भक्षण एव विनियोग इति प्राप्ते ब्रूमः। अविहितान्यपि ग्रहणादीन्यर्थाक्षिप्तानि. तद्व्यतिरेकेण भक्षणासम्भवात्। अतस्तेष्वप्यनुवाकोऽयं यथालिङ्गं विभज्य विनियोक्तव्यः। तत्र भक्षे हीत्यारभ्याऽश्विनोस्त्वा बाहुभ्याꣳ सघ्यासमित्यन्तो ग्रहणं प्रकाशयति। *एहीत्याख्यातस्य बाहुभ्यां स्वीकरवाणीत्येतस्य च दर्शनात्। नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषमित्ययं भागोऽवेक्षणं प्रकाशयति। शोभनचक्षुरहं मनुष्येषु प्रख्यातं †त्वामवेक्ष इत्यभिधानात्। हिन्व मे गात्रा इत्यादिर्मामवाङ्नाभिमतिगा इत्यन्तः सम्यग्जरणं प्रकाशयति। गात्रप्रीणनेनाधोभागे नाभेरतिक्रमनिषेधेन च तदवगमात्। जरणं नार्थाक्षिप्तं. तेन विनापि भक्षणसिद्धेरिति चेत्। न. जरणपर्यन्तस्यैव सार्थकभक्षणत्वात्। न च जरणे पुरुषव्यापाराभावः. सम्यगुपवेशनादे§र्भक्षणार्थत्वात्। मन्द्राभिभूतिरित्यादिर्भक्षयामीत्यन्तो भक्षणं प्रकाशयति। तस्माल्लिङ्गेन समाख्यां बाधित्वा विभज्य विनियोगः कर्तव्यः।

तत्रैवान्यच्चिन्तितं। अ०१०।

मन्द्रेति वसुमद्गेति द्वयं तर्पणभक्षयोः।
विभक्तव्यमुताशेषं तृप्तिसंयुक्तभक्षणे॥

---

* एहीत्याख्यानस्येति न्या० वि० पाठः। किन्तु आह्वानस्येति भवितुमर्हति।

† अवेक्षिषीयेति न्या०। § जरणार्थत्वादिति न्या० समीचीनतरः।

लिङ्गाद्विभागो मैवं नो तृप्तिर्भक्षणतोऽन्यतः ।
लिङ्गस्यासम्भवे वाक्ये शेषात् सर्वोऽस्तु भक्षणे ॥

मन्द्राभिभूतिरित्यादिर्जुषाणा सोमस्य तृप्यत्वित्यन्तो भागो दुष्टाया अरुचिमभिभवन्त्याः सोमं सेवमानाया जिह्वायास्तृप्तिं प्रकाशयति । वसुमद्गणस्येत्यादिर्भक्षयामीत्यन्तो भागो भक्षणप्रकाशकः । तत्र पूर्वर्वाल्लिङ्गेन विभज्य विनियोग इति चेत्, मैवं । न खलु तृप्तिर्भक्षणादन्येन व्यापारेण जायते, किं तर्हि भक्षणानुनिष्पादिनी हि सा । तथा सति कस्मिन् व्यापारे तृप्तिप्रकाशको भागो विनियुज्यते, ततो लिङ्गेन विनियोगासम्भवात् भक्षणमन्त्रवाक्यस्य शेषस्तृप्तिप्रकाशकभागो भविष्यति । उपयुक्तश्च तत्रायं भागः, तृप्तिसहितभक्षप्रकाशेन पुरुषोत्साहजनकत्वात्, तस्मान्मन्द्रादिः सर्वो भक्षणे विनियुज्यते ।

तत्रैवान्यच्चिन्तितम् । अ० ११ ।

इन्द्रपीतस्येति भक्षमन्त्रांशः किमिहैन्द्रके ।
केवलेऽन्यत्र चोह्यो वा सर्वत्रोत यथाश्रुतम् ॥
ऐन्द्र एव समर्थत्वात् तूष्णीमेवान्यभक्षणम् ।
ऊह्यो वान्येषु कर्मैक्येऽप्यस्तूह्यो भक्षमन्त्रतः ॥
इन्द्रेण यस्मिन् सवने सोमः पीत इतीरणात् ।
सवनस्थेषु सर्वेषु मन्त्रोऽनूह्येन पठ्यते ॥

भक्षणमन्त्रे कश्चिदंशः इन्द्रपीतस्येत्येवंविधिः श्रूयते । तत्रेन्द्रेण पीतस्य सोमस्य शेषं भक्षयामीत्यर्थो भवति । तथा सत्यस्य मन्त्रस्येन्द्रप्रदानशेषभक्षण एव समर्थत्वात् तत्रैवायं मन्त्रो

विनियुज्यते न तु मैत्रावरुणादिशेषभक्षणे. तस्मादमन्त्रकमेव तद्भक्षणमित्येकः पूर्वः पक्षः। इन्द्रपीतस्येति पदस्यासमर्थत्वेऽपि मित्रावरुणपीतस्येत्येवमूहे सति सामर्थ्यं भविष्यति। नन्वाग्नेययागस्य प्रकृतित्वात्तद्गतस्याऽग्नये जुष्टमिति मन्त्रस्य विकृतौ सौर्यचरौ सूर्याय जुष्टमित्येवमूहः क्रियते इह तु कर्मैक्यान्नोह इति चेत्. न. कर्मभेद इव भक्षभेदेऽप्यूहितुं शक्यत्वादिति द्वितीयः पूर्वः पक्षः। इन्द्रपीतस्येत्यत्र बहुव्रीहिर्द्रष्टव्यः। तत्पुरुषत्वे 'समासस्य' [पा० ६.१.२२३.] इति सूत्रेणान्तोदात्तत्वप्रसङ्गात्। आद्युदात्तं चैतत्पदमाम्नातं। इन्द्रप्रातिपदिकं तु स्वत आद्युदात्तं। तथा सति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' [पा०६.२.१.] इति सूत्रेण पूर्वपदप्रकृतिस्वरविधानात् समस्तं पदमप्याद्युदात्तमेव सम्पद्यते। इन्द्रेण पीतः सोमो यस्मिन् सवने इति विग्रहात् सवनपरत्वे सति ऐन्द्रभक्षण एवेति नियन्तुमसमर्थत्वात् सर्वभक्षणेष्वनूहेनायं मन्त्रः प्रयोक्तव्यः। विशेष्यं च सवनं तस्मिन् वाक्ये एवमाम्नातं 'प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य' इति। तस्मादन्यः पक्षो राद्धान्तः।

तत्रैवान्यच्चिन्तितम्। अ०१२।

ऊहपक्षे यदूहान्तच्छिन्यते न्यायपञ्चकैः।
ऐन्द्रे हुतेऽथ तच्छेषे होत्रकैस्समवस्थिते॥
सोमोऽभ्युन्नीय देवेभ्यो हुत्वा समश्यते तदा।
इन्द्रो न लक्ष्यो लक्ष्यो वा न शेषेऽन्यार्थता यतः॥
उन्नीत एव सम्बन्धो न पूर्वा देवतान्तरैः।
अत इन्द्रस्य सिद्धार्थं लक्ष्योऽसावितरैः सह॥

पूर्वाधिकरणे योऽयमूहरूपो द्वितीयः पूर्वः. पक्षः तत्प्रसङ्गात् क्त्वाचिन्तारूपेण न्यायपञ्चकेनोहविषयश्चिन्त्यते। मैत्रावरुण-ब्राह्मणाच्छंसिपोत्रादय ऋत्विजो होत्रकाः तेषां सन्ति चमसाः. पात्रविशेषस्थिताः सोमरसाश्चमसाः, तैर्वषट्कारानुवषट्कारयोर्होतव्यं। तेषां चमसानामिन्द्रत्वाद्धोतुर्वषट्कारे प्रथममिन्द्रो हुतः। अनन्तरं चमसस्थे हुतशेषे पुनः सोमान्तरमभ्युन्नीय देवतान्तरेभ्यो होत्रका अनुवषट्कारे जुह्वति। तत्र मैत्रावरुणो 'मित्रं वयं हवामहे' इति मन्त्रेण मित्रावरुणौ यजति। ब्राह्मणाच्छंसी 'इन्द्र त्वा वृषभं वयम्' इति मन्त्रेणेन्द्रं यजति। पोता 'मरुतो यस्य हि क्षये' इति मन्त्रेण मरुतो यजति। एवं हुत्वा पश्चात् सोमो भक्ष्यते। तस्मिन् *भक्ष्य-माणे मित्रावरुणपीतस्येति मन्त्र ऊहनीयः। तदानीमिन्द्रमित्रा-वरुणपीतस्येत्येवं मित्रावरुणाभ्यां सह नेन्द्र उपलक्षणीयः। कुतः. इन्द्रशेषे पुनरभ्युन्नीतस्य तेन शेषेण सह मित्रावरुणाद्यर्थत्वे सति तस्य शेषस्येन्द्रसम्बन्धिराहित्यात्। पुनरभ्युन्नीतस्यैवान्यार्थत्वं न पूर्व-शेषस्येति चेत्. न. उन्नयनकाले मित्रावरुणाद्यर्थोऽयमिति सङ्क-ल्पाभावात्. प्रदानकाले तु पूर्वशेषेण सहैव मित्रावरुणादिभ्यः प्रदीयते. तस्मादिन्द्रसम्बन्धराहित्यान्नेन्द्रो लक्षणीय इति प्राप्ते ब्रूमः। माभूत् सङ्कल्पः, तथाप्युन्नयनं करिष्यमाणं मैत्रावरुणादि-यागार्थमेव न तु तस्य पूर्वानुष्ठितेन्द्रयागार्थत्वं सम्भवति। तस्मा-दुन्नीते मैत्रावरुणादिसम्बन्धशेषे इन्द्रसम्बन्ध एवेत्युभयभक्षणे मि-त्रावरुणादिभिः सहेन्द्रोऽप्युपलक्षणीयः।

* भक्ष्यो इति न्याय० वि०।

तत्रैवान्यच्चिन्तितम्। अ०१३।

द्विदेवशेष आदित्यस्थाल्या आग्रयणाभिधाम्।
स्थालीं प्राप्तस्ततः पात्नीवतस्य ग्रहणे सति॥
तद्भक्षणे द्विदेवाः किं साधं पात्नीवतेन ते।
उपलक्ष्या नवा पूर्वन्यायेनास्तूपलक्षणम्॥
अन्यत्राग्रयणात्पात्नीवतो नैतस्य गृह्यते।
आकाङ्क्षा पूर्वदेवेषु पत्नीवानेव लक्ष्यते॥

ऐन्द्रवायवादयो द्विदेवत्याः, तेषां शेष आदित्यस्थालीमागच्छति। पुनरपि तस्याः स्थाल्या आग्रयणस्थालीमागच्छति। तस्या आग्रयणस्थाल्याः पात्नीवतो गृह्यते। तस्य पात्नीवतस्य भक्षणे इन्द्रवाय्वादयः उपलक्षणीयाः। पूर्वाधिकरणे यथा मित्रावरुणादिभिः सह इन्द्र उपलक्षितस्तद्वदिति प्राप्ते ब्रूमः। यदुपांशुपात्रेण पात्नीवतमाग्रयणात् गृह्णातीत्याग्रयणपात्रस्यापादानत्वश्रवणात् ततो निःसृतस्य सोमरसस्य तत्सम्बन्धे ज्ञाते सति पश्चात्पात्नीवद्देवतायै ग्रहणं भवति। तथा सत्यत्यन्तभिन्नस्य पात्नीवतस्य पूर्वदेवेष्वाकांक्षा नास्ति. पुनरभ्युन्नीतस्तु सोम ऐन्द्रशेषेण संसृष्टः. तस्य संसृष्टस्य भक्षणे मैत्रावरुणादीनामिवेन्द्रस्याऽपि सम्बन्धो नापैतीति वैषम्यं। तस्मात्पात्नीवतभक्षणे इन्द्रवाय्वादयो नोपलक्षणीयाः।

तत्रैवान्यच्चिन्तितम्। अ० १४।

सह पत्नीवता त्वष्टा तद्गुणे लक्षणेन च।
सह त्वष्ट्रा पिबेत्युक्ते देवत्वात् सोऽपि लक्ष्यते॥

सहत्वमात्रं त्वष्टुः स्यान्न पातृत्वमशब्दनात्।
चोदनायामभावाच्च न देवोऽतो न लक्ष्यते॥

तस्मिन्नेव पात्नीवतग्रहे शेषभक्षणमन्त्रेण पत्नीवता सह त्वष्टाप्युपलक्षणीयः। कुतः. त्वष्टुरपि तद्देवत्वात्। तच्च होममन्त्रादवगतं। 'अग्ना ३इ पत्नीवा ३ऽ सजूर्देवेन त्वष्ट्रा सोमम्पिब स्वाहा' इत्यस्मिन्मन्त्रे पात्नीवन्तमग्निं प्लुतान्तेन पदेन सम्बोध्य तष्ट्रा देवेन सह पिबेत्यभिधानात् पातृत्वेन पत्नीवत इव त्वष्टुः तद्देवतत्वं। ततः पत्नीवत्त्वष्टृपीतस्येत्युपलक्षणमिति प्राप्ते ब्रूमः। पानकाले सहावस्थानमात्रं त्वष्टुः सजूरित्यनेन पदेन प्रतीयते न तु पातृत्वं। असम्बोधितस्य त्वष्टुः पिबेत्यनेन सामानाधिकरण्याभावात्। न च पातृसहभावमात्रेण पातृत्वं 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र पुत्राणां वोढृत्वादर्शनात्। आस्तां मन्त्रविधिबलात् त्वष्टुर्देवतात्वमिति चेत्। न. पात्नीवतमाग्रयणाद्गृह्णातीत्यत्र त्वष्टुरप्रतीतेः. तस्माद्देवता त्वष्टा नोपलक्षणीयः।

तत्रैवान्यच्चिन्तितं। अ० १५॥

पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान्मादयेत्यमी।
लक्ष्या न वा याज्ययोक्तैर्देवत्वादुपलक्षणं॥
एकोऽग्निर्यजमानेन मादितोऽन्ये तु वह्निना।
अतोऽग्नेरेव दैवत्वान्नान्येषामुपलक्षणं॥

तस्यैव पात्नीवतग्रहस्य याज्यायामग्निं सम्बोध्य पत्नीवन्तमधारिणस्त्रयस्त्रिंशद्देवान् मादयेत्यभिधीयते। 'पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व' इति। अनुष्वधमनुप्रदाने। तत्र

आह्लयमानेन सोमरसेन मादनीयत्वात् त्रयस्त्रिंशतां तद्देवत्वं. अतस्तेऽपि भक्षणे लक्षणीया इति चेत्। न. यजमानेन मादनीयस्याग्नेरेव देवतात्वात्. त्रयस्त्रिंशद्देवास्तु वह्निना माद्यन्त इति न तेषामत्र देवत्वं. तस्मान्नोपलक्षणं।

तत्रैवान्यच्चिन्तितं। अ०१६।

सोमस्याग्न इति प्रोक्ताऽनुवषट्कारदेवता।
लक्ष्या न वा देवतात्वाल्लक्ष्या त्रिंशद्विलक्षणा॥
प्रकृतौ विद्यमानोऽग्निरनुद्देशादलक्षितः।
उद्देश्येन्द्रो लक्षितोऽतो विकृतावपि तत्तथा॥

सोमस्याग्ने वीहीत्यनुयजतीति श्रूयते। तत्रानुवषट्कारस्य मान्त्रवर्णिकोऽग्निर्देवता. न च त्रयस्त्रिंशतामिव वह्नेरदेवतात्वं। मन्त्रे वह्निं सम्बोध्य सोमपातृत्वाभिधानात्. तस्मादग्निर्लक्षणीय इति चेत्। न. प्रकृतावलक्षितत्वात्। ऐन्द्रः चमसः प्रकृतिः. इतरे विकृतिरूपाः। तथा हि ऐन्द्रस्थः सोमो गृह्यते मीयते च। तेन ऐन्द्रेष्वेव सोमः। अनैन्द्रेषु सोम एव नास्तीति सर्वे सोमधर्मा ऐन्द्रेष्वेव। अनैन्द्रा अधर्मकाः। धर्माः साकाङ्क्षायां चोदकेन सधर्मका इति विकृतित्वं। गृह्यमाणस्य मीयमानस्य च सोमस्यैन्द्रत्वं 'इन्द्राय त्वा वसुमते' इत्यादेर्ग्रहणं मन्त्रादवगम्यते। तस्य प्रकृतिभूतस्यैन्द्रस्य चमसस्य भक्षणेऽग्निरनुवषट्कारदेवो नोपलक्षितः। कुतः. ग्रहणेन तदुद्देशाभावात्। इन्द्रस्तु दृश्यत्वादुपलक्षितः। एव विकृतावप्युद्देश्यदेवानामेवोपलक्षणं न्याय्यं. तस्मादग्निर्नोपलक्ष्यः

तत्रैवान्यच्चिन्तितं। अ०१७॥

अमन्त्रं *पक्षमाश्रित्य क्त्वाचिन्तान्तरत्रये।
ऊहोऽस्ति नो वा सोऽस्त्यत्र विकृतौ तस्य सम्भवात्॥
सोमेनेति विधिः सर्वप्रदानेषु समत्वतः।
अधिकारेऽप्यनूह्योऽतो मैन्द्रे निर्मन्त्रभक्षणं॥

उक्ताभ्यः पञ्चभ्यः क्त्वाचिन्ताभ्यः पूर्वस्मिन्नधिकरणे योऽयमनैन्द्रेष्वमन्त्रं भक्षणमिति प्रथमः पूर्वपक्षः, तमेव मनसि निधाय पुनः क्त्वाचिन्तानां त्रयमभिधीयते। अनैन्द्रेषूक्तरीत्या हि विकृतित्वेनोहसम्भवादस्त्वूह इति चेत्। न. अनैन्द्राणां विकृत्वासम्भवात्। सोमेन यजेतेत्युत्पत्तिश्रुतेः। सोमः कर्मणोऽङ्गं न तु प्रदानविशेषस्य कस्यचिदङ्गं। स एव च सर्वः सोमः सर्वप्रदानेष्वध्यस्यत इति सर्वाणि समप्रधानानि. अत ऐन्द्राणामनैन्द्राणाञ्च प्रकृतिविकृतिभावासम्भवात् नास्त्यत्रोहः। इन्द्राय त्वा वसुमत इत्यादिमन्त्रो लिङ्गादैन्द्रविषयोऽस्तु नैतावता प्रकृतिविकृतिभावः सिध्यति। तस्मात् भक्षमन्त्रस्य लिङ्गादैन्द्रमात्रविषयत्वादनैन्द्रेष्वमन्त्रकं भक्षणं।

तत्रैवान्यच्चिन्तितं। अ० १८।

समन्त्रकममन्त्रं वा स्यादैन्द्राग्नादिभक्षणं।
ऐन्द्राग्नेयीन्द्रपीतत्वसम्भवात् तत् समन्त्रकं॥
न पानमशरीरस्य युक्तं दानन्तु मिश्रगं।
मन्त्रोऽयन्तु न मिश्रार्थस्तस्मादेतदमन्त्रकं॥

यदेतदैन्द्राग्नं गृह्णातीति विहिते शेषभक्षणं. तत्रेन्द्राग्निभ्यां पीतसोम इन्द्रेण पीतो भवतीति लिङ्गेनैव विनियोगात् समन्त्रकं

*भक्तमिति न्या० वि०।

भक्षणमिति चेत्. मैवं । नवमाध्याये वक्ष्यमाणदेवताधिकरणन्याये-नाशरीरस्येन्द्रस्य पानासम्भवात् । अथ पीतशब्देन दानं विवक्ष्येत तद्दानीमिन्द्राय दत्तः सोम इति मन्त्रार्थो भवति । न चात्र यजमान इन्द्रमुद्दिश्य ददौ किंत्विन्द्राग्नी उद्दिश्य. तस्माद्दानं मिश्रविषयं. मन्त्रस्तु न मिश्रविषय इत्यमन्त्रकमत्र भक्षणं ॥

अत्रैवान्यच्चिन्तितं । अ० १९ ।०

ऐन्द्रदानेऽपि गायत्रमात्रयुक्तोऽथवेतरैः ।
छन्दोभिरपि युक्ते स्यादाद्यो मन्त्रे तथोक्तितः ॥
द्वयोः समो बहुव्रीहिरेकच्छन्दास्तु न क्वचित् ।
नानाच्छन्दस्यैन्द्र एव क्लृप्तचिन्तेयमीरिता ॥
सवनार्थेन्द्रपीतोक्तिरित्युद्घाटनमीरितं ।
तेन सर्वप्रदानेषु मन्त्रपाठो यथास्थितः ॥

तस्मिन्नेव भक्षमन्त्रे गायत्रच्छन्दस इन्द्रपीतस्येति श्रूयते । गायत्रमेव छन्दो यस्येति मन्त्रपदसमासाभिधानादेकच्छन्दो युक्तः. ऐन्द्रे सोमे न भक्षणमन्त्र इति चेत्. मैवं । बहुच्छन्दोयुक्तोऽपि बहुव्रीहेः समानत्वात एवकारं परित्यज्य गायत्रं छन्दो यस्येति विग्रहसम्भवात् । एकच्छन्दस्कस्तु सोमो न क्वाप्यस्ति । तस्मात् नानाच्छन्दस्के सोम ऐन्द्रप्रदान एव मन्त्रो नान्यत्र । तदेवं क्लृप्तचिन्तात्रयं समापितं । द्विविधा क्लृप्तचिन्तोद्घाटना तु प्रागेव सिद्धान्तिना दर्शिता ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

---

महीनां पयोऽसि विश्वेषां देवानां तनूर्ऋध्यासमद्य पृषतीनां ग्रहं पृषतीनां ग्रहोऽसि विष्णोर्हृदयमस्येकमिष विष्णुस्त्वानुविचक्रमे भूतिर्दध्ना घृतेन वर्द्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्याज्ज्योतिरसि वैश्वानरं पृश्नियै दुग्धं यावती द्यावापृथिवी महित्वा यावच्च सप्तसिन्धवो वितस्थुः। तावन्तमिन्द्र ते ॥ १ ॥

ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतं। यत् कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्यच्छ्वाऽवमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकाःस्युर्यत् स्कन्देद्यजमानः प्रमायुकः स्यात् पशवो वै पृषदाज्यं पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्यꣳ स्कन्दति यत् पृषदाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णाति प्राणो वै पृषदाज्यं प्राणो वै ॥ ॥ २ ॥

एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति यत् पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति हिरण्यमवधाय गृह्णात्यमृतं वै हिरण्यं प्राणः पृषदाज्यममृतमेवास्य प्राणे दधाति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठत्यश्वमवघ्रापयति प्राजापत्यो वा अश्वः प्राजापत्यः प्राणः स्वादेवास्मै योनेः

प्राणं निर्मिमीते वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳ स्कन्दति वैष्णव्यर्चा पुनर्गृह्णाति यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सन्तनोति ॥ ३ ॥

ते पृषदाज्यं प्राणो वै योनेः प्राणं द्वाविꣳशतिश्च ॥ ॥ ६ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥*॥

अनुवाके पञ्चमे तु भक्षमन्त्रा उदीरिताः।

अथ षष्ठे पृषदाज्यमुच्यते। कल्पः। 'आज्यग्रहणकाले चतुर्जुह्वां गृह्णाति चतुरुपभृति दधन्याज्यमानीय मह्हीनां पयोऽसीति पृषदाज्यधान्यां पञ्चगृहीतं पृषदाज्यं' इति। पाठस्तु। "मह्हीनां पयोऽसि विश्वेषां देवानां तनूर्ऋध्यासमद्य पृषतीनां ग्रहं पृषतीनां ग्रहोऽसि विष्णोर्हृदयमस्येकमिष विष्णुस्त्वानु विचक्रमे भूतिर्दध्ना घृतेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्याज्ज्योतिरसि वैश्वानरं पृश्निये दुग्धमिति" इति। हे पृषदाज्य त्वं मह्हीनां गवां पयोऽसि। विश्वेषां सर्वेषां देवानां तनूरसि, शरीरस्थितिहेतुत्वात्। पृषत्यो मरुतामश्वाः अद्यास्मिन् दिने पृषतीनां ग्रहस्थानीयं त्वामृध्यासं वर्धयामि। त्वं पृषतीनां ग्रहोऽसि ग्रहस्थानीयमसि। विष्णोर्यज्ञस्य हृदयं प्रियमसि। हे इष सर्वैर्देवैरिष्यमाण विष्णुर्यज्ञः त्वामेकं मुख्यं विच-

क्रमे विशेषेण स्वीकृतवान्। अनन्येन घृतेन दध्ना च तव भूति-माहात्म्यं वर्धतां। तस्य तादृशस्येष्टस्य देवेभ्यो हुतस्य वीतस्य देवै-र्भक्षितस्य च यत् द्रविणं फलमस्ति तन्मां प्रत्यागम्यादागच्छतु। त्वं वैश्वानरं ज्योतिरसि विश्वेषां नराणां हितस्य भासकमसि। पृश्निये दुग्धमसि श्वेतवर्णाया गोः क्षीरमसि। अस्य च पृषदाज्यस्य पश्व-नूयाजार्थत्वादग्नीषोमीयपशुप्रपाठके पृथिव्यै त्वाऽन्तरिक्षाय त्वेत्ये-तस्मादनुवाकात् पूर्वमयं मन्त्रो द्रष्टव्यः। कल्पः। 'आग्नीध्रे प्रतिप्रस्था-ता दधिघर्मं गृह्णात्यौडुम्बर्याꣳ स्रुच्युपस्तीर्य यावती द्यावापृथिवी इति दधि गृहीत्वाऽभिघार्य' इति। पाठस्तु। "यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः तावन्तमिन्द्र ते ग्रहꣳ स-होर्जा गृह्णाम्यस्तृतं" इति। सप्त सिन्धवः समुद्राः, ते च भागवतस्य पञ्चमस्कन्धे स्मर्यन्ते। क्षीरोदेक्षुरसोदसुरोदघृतोददधिमण्डोद-क्षीरोदशुद्धोदाः सप्त जलधयः। हे इन्द्र द्यावापृथिवी द्यावापृथि-व्यौ महित्वा स्वकीयेन महिम्ना यावत्यौ यत्परिमाणे वर्त्तेते। किञ्च सप्त सिन्धवो वा यावद्वितस्थुः यावन्तं कालं स्थिताः तावन्तं ग्रहं गृह्णामि सर्वस्मिन् देशे सर्वस्मिन् काले त्वदीयं ग्रहं ऊर्जा सारेण सहास्तृतमविनाशितं यथा भवति तथा गृह्णामि। सोऽयं मन्त्रो ग्रह-प्रपाठके इन्द्र मरुत्व इत्यस्मादनुवाकादूर्ध्वं द्रष्टव्यः।

यदुक्तं सूत्रकारेण 'पृषदाज्यं स्कन्नमभिमन्त्र्यापोऽभ्यवहृत्य निर्णि-ज्य स्रुचꣳ शतमानं हिरण्यं स्रुच्यवधायेदं विष्णुर्विचक्रम इत्यन्यत् पृष-दाज्यं गृहीत्वाश्वेनावघ्राप्यायतने सादयेत्' इति। तत्र पुनर्ग्रहणं विध-त्ते। "यत् कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्-

च्छाऽवमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकाः स्युर्यत् स्कन्देद्यजमानः प्रमायुकः स्यात् पशवो वै पृषदाज्यं पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्यꣳस्कन्दति यत् पृषदाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णाति" इति। पृषद्भिर्दधिबिन्दुभिर्मिश्रमाज्यं पृषदाज्यं. तस्य पत्त्विस्पर्शे श्वस्पर्शे भूमिपतनेन विनाशे च पुनर्ग्रहणं प्रायश्चित्तं. तेन पशुविनाशो न भवति। तदेतत् पुनर्ग्रहणं पशुविनाशदोषपरिहारेण प्रशस्य प्राणविनाशदोषपरिहारेणापि प्रशंसति। "प्राणो वै पृषदाज्यं प्राणो वा एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति यत् पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति" इति। ग्रहणपात्रे हिरण्यस्य प्रक्षेपं तत्परिमाणं च क्रमेण विधत्ते। "हिरण्यमवधाय गृह्णात्यमृतं वै हिरण्यं प्राणः पृषदाज्यममृतमेवास्य प्राणे दधाति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति" इति। गृहीतस्य पृषदाज्यस्याश्वमुखस्पर्शनं विधत्ते। "अश्वमवघ्रापयति प्राजापत्यो वा अश्वः प्राजापत्यः प्राणः स्वादेवास्मै योनेः प्राणं निर्मिमीते" इति। अश्वस्य प्राजापत्याच्चिजन्यत्वात् प्राणस्य च स प्राणमसृजतेत्यादिश्रुतौ प्रजापतिसृष्टत्वाभिधानाच्च तयोरेककार्यत्वे सति प्राणस्य स्वकीययोनिरूपादश्वान्निर्माणं सिध्यति।

पृषदाज्यस्य पुनर्ग्रहणे विष्णो त्वं नो अन्तम इति मन्त्रं विधत्ते। "वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳस्कन्दति वैष्णव्यर्चा पुनर्गृह्णाति यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सन्तनोति" इति। विष्णो त्वं न इति मन्त्रो जुष्टो वाच इत्यनुवाके व्याख्यातः। आपस्तम्बस्य मते त्विदं विष्णुरिति वैष्णवी. सा च 'युञ्जते मनः' इत्यत्र व्याख्याता।

अथ विनियोगसंग्रहः ।

महीति पृषदाज्ये स्याद्यावतीति दधिग्रहे ।
इदं विष्णुर्वैष्णवी स्यादिह मन्त्रास्त्रयो मताः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥६॥

देव सवितरेतत् ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्माऽऽयुष्मत्या ऋचो मा गात तनूपात्साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतञ्च सत्यञ्च वदत स्तुत देवस्य सवितुः प्रसवे स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रं ॥ ॥ १ ॥

अस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादिन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषं । सा मे सत्याऽऽशीर्देवेषु भूयाद्ब्रह्मवर्चसं माऽऽगम्यात् । यज्ञो बभूव स आबभूव स प्रजज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन् करोतु वयꣳ स्याम पतयो रयीणां । यज्ञो वा वै ॥ २ ॥

यज्ञपतिं दुहे यज्ञपतिर्वा यज्ञं दुहे स यः स्तुतशस्त्रयो-र्दोहमविद्वान्यजते तं यज्ञो दुहे स इष्ट्वा पापीयान् भ-वति य एनयोर्दोहं विद्वान्यजते स यज्ञं दुहे स इष्ट्वा वसीयान् भवति स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादित्याहैष-वै स्तुतशस्त्रयोर्दोहस्तं य एवं विद्वान् यजते दुह एव यज्ञमिष्ट्वा वसीयान् भवति ॥ ३ ॥

शस्त्रं वै शस्त्रं दुहां द्वाविꣳशतिश्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥*॥

पृषदाज्यं भवेत् षष्ठे मन्त्रश्च दधिघर्मगः।

अथ सप्तमे स्तुतशस्त्रे अभिधीयेते। कल्पः। ‘ब्रह्मन् त्स्तोष्यामः प्रशास्तः’ इत्युच्यमाने ‘देव सवितरेतत् ते प्राहेत्यनुद्रुत्य रश्मिरसि क्षयाय त्वयं जिन्वेत्युक्त्वा स्तुतेति प्रसौति’ इति। पाठस्तु। “देव सवितरे-तत्ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्माऽऽयुष्मत्या ऋचो मा गात तनूपात्साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतञ्च सत्यञ्च वदत स्तुत देवस्य सवितुः प्रसवे” इति। हे सवितर्देव अयमुद्गाता

स्तोष्याम इत्येतत् वाक्यं ते तुभ्यं प्राह तत् स्तोत्रं त्वं प्रसुव प्रकर्षेणानुज्ञाञ्च देहि. प्रयज च प्रकर्षेण च यागं निष्पादय। हे उद्गातारः. बृहस्पतिरेवाहं ब्रह्मा न तु मनुष्यमात्रः सोऽहं वो ब्रवीमीति शेषः. आयुष्मत्या ऋचो मा गात आयुःस्थानीयो निर्वाहोऽस्यामृच्यस्तीति आयुष्मती तस्या ऋचः सकाशान्मापगच्छत। ऋगक्षरोच्चारणे सावधाना भवतेत्यर्थः। तथा तनूपात्साम्नो मापगच्छत। स्तोत्रस्य तनूः शरीरमेव ऋक्. तान्तनूम्पातीति तनूपं साम. ऋगक्षराभिव्यक्तिर्हि साम्ना क्रियते। ततस्तस्मिन् यूयमप्रमत्ता भवतेति गीयमाने स्तोत्रे वो युष्माकं सम्बन्धिन्यो यजमानविषया आशिषो याः सन्ति ताः सर्वा सत्याः सन्तु. याश्च भवतामाकूतयः सङ्कल्परूपास्ता अपि सत्याः सन्तु। यूयं मनसा ऋतं यथार्थं स्मरत. वाचा च सत्यं वदत। सवितुर्देवस्य प्रसवेऽनुज्ञायां सत्यां स्तुत स्तोत्रं पठत।

कल्पः। 'स्तुतस्य स्तुतमसीति स्तोत्रमनुमन्त्रयते शस्त्रस्य शस्त्रमसीति शस्त्रमिन्द्रियावन्तो वनामह इत्युभयत्रानुषजति' इति। पाठस्तु। "स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुत दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादिन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषं। सा मे सत्याऽऽशीर्देवेषु भूयाद्ब्रह्मवर्चसं मा गम्यात्। यज्ञो बभूव स आबभूव स प्रजज्ञे स वावृधे। स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन् करोतु वयꣳ स्याम पतयो रयीणां" इति। सोऽयं मन्त्रो याजमानः। उद्गातृभिर्गीयमान हे स्तोत्र त्वं स्तुतस्य स्तुतमसि स्तोत्रस्यापि स्तोत्रमसि. स्तोत्रजातावुत्तममसीत्यर्थः। तादृशं स्तुतं

स्तोत्ररूपं त्वां मह्यं मदर्थं ऊर्जं दुहां सारं दुहे। ततः स्तुतमुत्तमं स्तोत्रं मां प्रत्यागम्यादागच्छतु। एवं होतृभिः शस्यमान हे शस्त्र त्वं शस्त्रस्य शस्त्रमसि शस्त्रजातावुत्तममसि. शेषं पूर्ववत्। युवयोः स्तुतशस्त्रयोः प्रसादादिन्द्रियावन्त इन्द्रियैरपि फलैर्युक्ताः सन्तो वनामहे स्वापेक्षितफलं भजामहे। प्रजां पुत्रादिरूपां इषमन्नं च धुक्षीमहि सम्पादयामः। किञ्च देवेषु विषयभूतेषु मे मदीया यजामीत्याशीर्याऽस्ति सा सत्या भूयात्। ब्रह्मवर्चसं यज्ञानुष्ठानरूपं मां प्रत्यागम्यादागच्छतु. उत्तरोत्तरमभिवर्धतामित्यर्थः। इदानीमनुष्ठीयमानो यज्ञः सम्पूर्णो भवति। स यज्ञ आबभूव पुनरप्यावृत्तो भवतु. स यज्ञः प्रजज्ञे अस्माननालस्येनानुष्ठातॄन् प्रति प्रजावान्. अत एवास्मद्गृहे स यज्ञो वावृधे पुनः पुनरनुष्ठानेन वर्धतां. स यज्ञोऽस्माभिरिज्यमानानां देवानामधिकं पालयिता भवतु। स यज्ञोऽस्मानप्यधिपतीनधिकमनुष्ठानस्य पालकान् करोतु। वयमपि तस्य यज्ञपुरुषस्य प्रसादाद् रयीणां यज्ञसाधनानां धनानां पतयो भूयास्म। तदिदमनुमन्त्रणं स्तुतशस्त्रयोर्दोह इति वैदिकैः परिभाष्यते तमिममन्दोहं विधत्ते। "यज्ञो वा वै यज्ञपतिं दुहे यज्ञपतिर्वा यज्ञं दुहे स यः स्तुतशस्त्रयोर्दोहमविद्वान् यजते तं यज्ञो दुहे स इष्ट्वा पापीयान् भवति य एनयोर्दोहं विद्वान्यजते स यज्ञं दुहे स इष्ट्वा वसीयान् भवति स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादित्याहैष वै स्तुतशस्त्रयोर्दोहस्तं य एवं विद्वान् यजते दुह एव यज्ञमिष्ट्वा वसीयान् भवति" इति। अत्र दोहनं नाम रिक्तीकरणं. गा दोग्धी-

त्यत्र तद्दर्शनात्। तथा सत्येतद्विचार्यते। किं यज्ञो यजमानं रिक्तीकरोति किं वा यजमानो यज्ञमिति। तत्र यतो दोहमविद्वान् यः कोऽपि दोहनामकमभिमन्त्रणं अज्ञात्वा यजेत तमेव पुरुषं यज्ञो रिक्तीकरोति. स चेष्ट्वा दरिद्रो भवति. विद्वांस्तु यज्ञं दुग्ध्वा वसीयान् भवतीति। यद्यप्येतदभिमन्त्रणं सर्वत्र सञ्चारि तथापि बहिष्पवमानस्तोत्रस्याज्यशस्त्रस्य प्रथमभावित्वात् तदर्थः स्तोत्रमन्त्रः ऋतुग्रहानुवाकात् प्राक् पठनीयः। शस्त्रमन्त्रस्त्वैन्द्राग्नग्रहानुवाकादूर्ध्वं पठनीयः।

अत्र विनियोगसंग्रहः।

देव ब्रह्मा सीति गाहन् स्तुतस्य यजमानकः।
स्तोत्रं समन्त्रं शस्त्रस्य मन्त्रयेच्छस्त्रमेतयोः॥
इन्द्रः शेषः स णामन्तो मन्त्रा अत्र त्रयो मताः।

अत्र प्रथममन्त्रे ऋचो मा गात तनूपात्साम इत्यत्राक्षराभिव्यञ्जकतया सामानि ऋचः शरीरं रक्षन्तीत्युक्तं। सोऽयमर्थो नवमाध्यायस्य द्वितीयपादे मीमांसितः। अ० २॥

सामर्चं प्रति मुख्यं स्याद्गुणो वा बाह्यपाठतः।
मुख्यमभ्यसितुं पाठो गुणो गीतावरैस्तुतेः॥

रथन्तरं गायतीत्यादौ यद्गानं विहितं तदेतत् सामशब्दार्थ इति प्रतिपादितं स्मारितञ्च। तदेतद्गानमृचं प्रति प्रधानकर्म स्यात्। कुतः यागप्रयोगाद्बहिरध्ययनकालेऽपि पठ्यमानत्वात्। गुणकर्मत्वे तु व्रीहिप्रोक्षणादिवद्यागप्रयोगमध्य एव गानमनुष्ठीयेत. ततो यागात बहिर्गानस्य विश्वजिदादिवत् फलं कल्पनीयं। मध्यकालीनं

गाने तु प्रयाजादिवदारादुपकारकं. तस्मात् मुख्यमेतन्न तु गुणकर्मेति प्राप्ते ब्रूमः। न तावत् बहिःपाठः प्रधानकर्मत्वं कल्पयितुं शक्नोति भूमिरथिकशुष्कोक्तिन्यायेन प्रयोगपाटवाय गानाध्ययनोपपत्तेः। यथा भूमिरथिको भूमौ रथमालिख्याभ्यासङ्करोति. यथा वा छात्रः शुष्कोक्त्या प्रयोगपाटवं सम्पादयति तद्वत्। नापि गुणकर्मत्वे प्रयोजनाभावात् प्रधानकर्मत्वमिति वाच्यं। गानेन संस्कृतैर्ऋगक्षरैः स्तुतिसम्भवात् 'आज्यैः स्तुवते पृष्ठैः स्तुवते' इति स्तुतिविधानात्। तस्मादृगक्षराणां स्वरविशिष्टत्वादक्षराभिव्यक्तिर्दृष्टं प्रयोजनमित्यदृष्टस्याकल्पनीयत्वाद्गानं संस्कारकर्म।

अथ मीमांसा। द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्। अ० ५॥

प्रउगं शंसतीत्यादौ गुणतोत प्रधानता।
दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः॥
स्तुत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनं।
तेनादृष्टमुपेत्यापि प्राधान्यं स्तुतये मतं॥

ज्योतिष्टोमे श्रूयते 'प्रउगं शंसति निष्केवल्यं शंसति. आज्यैः स्तुवते पृष्ठैः स्तुवते' इति। प्रउगनिष्केवल्यशब्दौ शस्त्रविशेषनामनी. आज्यपृष्ठशब्दौ तु स्तोत्रवाचित्वेन चित्राधिकरणे व्याख्यातौ। अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रं। प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रं। तयोः स्तुतशस्त्रयोर्गुणकर्मत्वं युक्तं। कुतः. तुषविमोकवद्दृष्टार्थत्वलाभात्पठ्यमानेषु मन्त्रेषु अनुस्मरणेन देवता संस्क्रियत इति प्राप्ते ब्रूमः। स्तोतव्याया देवताया स्तावकैर्गुणैः सम्बन्धकीर्त्तनं स्तौतिशंसतिधात्वोर्वाच्योऽर्थः। यदि मन्त्रवाक्यानि गुणसम्बन्धाभिधानपराणि तदा धात्वो-

मुख्यार्थलाभाच्छ्रुतिरनुगृहीता भविष्यति। यदा तु गुणद्वारेणा-नुस्मरणीयदेवतास्वरूपप्रकाशनपराणि मन्त्रवाक्यानि स्युस्तदा धा-त्वोर्मुख्यार्थौ न स्यात्। लोके हि देवदत्तश्चतुर्वेदाभिज्ञ इत्युक्तेः स्तुतिः प्रतीयते। तस्य वाक्यस्य गुणद्वारेण देवदत्तस्वरूपोपलक्षण-परत्वेन गुणसम्बन्धपरत्वात्। यदा तु देवदत्तस्वरूपपरता यश्चतु-र्वेदी तमानयेत्यादौ तत्र न स्तुतिप्रतीतिः. तस्य चतुर्वेदसम्बन्धद्वारेण देवदत्तस्वरूपोपलक्षणपरत्वेन गुणसम्बन्धपरत्वाभावात्। ततश्चाज्यैर्देवं प्रकाशयेत् पृष्ठैर्देवं प्रकाशयेत् इत्येवंविध्यर्थपर्यवसानाद्धात्वोर्मुख्यार्थौ बाध्येत। ततो धातुश्रुतिमबाधितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमभ्युपे-तव्यं। तच्च दृष्टं प्रयोजनं नास्तीति चेत् ततोऽपूर्वमस्तु।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः॥७॥

॰श्यनाय पत्वने स्वाहा वट् स्वयमभिगूर्ताय नमो विष्ट-
म्भाय धर्मणे स्वाहा वट् स्वयमभिगूर्ताय नमः परिध-
ये जनप्रथनाय स्वाहा वट् स्वयमभिगूर्ताय नम ऊर्जे
होत्राणाꣳ स्वाहा वट् स्वयमभिगूर्ताय नमः पयसे हो-
त्राणाꣳ स्वाहा वट् स्वयमभिगूर्ताय नमः प्रजापतये
मनवे स्वाहा वट् स्वयमभिगूर्ताय नम ऋतमृतपाः सुव-
र्वाट् स्वाहा वट् स्वयमभिगूर्ताय नमः तृम्पन्ताꣳ हो-
त्रा मधो घृतस्य यज्ञपतिमृषय एनसा ॥ १ ॥

॰आहुः। प्रजा निर्भक्ता अनुतप्यमाना मधव्यौ स्तो-
कावपतौ रराध सन्नस्ताभ्याꣳ सृजतु विश्वकर्मा घोरा
ऋषयो नमो अस्त्वेभ्यः। चक्षुष एषां मनसश्च सन्धौ
बृहस्पतये महि षद्द्युमन्नमः। नमो विश्वकर्मणे स उ-
पात्वस्माननन्यान्त्सोमपान् मन्यमानः। प्राणस्य वि-
द्वान् समरे न धीर एनश्चकृवान् महि बद्ध एषान्तं वि-
श्वकर्मन् ॥ २ ॥

प्रमुञ्चा स्वस्तये ये भक्षयन्तो न वसून्यानृहुः। या-
नग्नयोऽन्वतप्यन्त धिष्णिया इयन्तेषामवया दुरिष्ट्यै स्वि-
ष्टिन्नस्तां कृणोतु विश्वकर्मा नमः पितृभ्यो अभि ये नो
अख्यन् यज्ञकृतो यज्ञकामाः सुदेवा अकामा वो दक्षि-

णान्न नीनिम मा नस्तस्मादेनसः पापयिष्ट । यावन्ता वै सदस्यास्ते सर्वे दक्षिण्यास्तेभ्यो यो दक्षिणां न ॥ ३ ॥

नयेदैभ्यो वृश्चेत यद्वैश्वकर्मणानि जुहोति सदस्यानेव तत् प्रीणात्यस्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाममश्नुतः । पुमान् पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः । आशीर्दाया दम्पती वाममश्नुतामरिष्टो रायः सचतां समोकसा । य आऽसिचत्संदुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः । सर्पिर्ग्रीवी ॥ ४ ॥

पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य । सहजानिर्यः सुमखस्यमान इन्द्रायाशिरं सह कुम्भ्याऽदात् । आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणं सवर्चसं । सञ्जयन् क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो अन्यां अधरान्त्सपत्नान् । भूतमसि भूते मा धा मुखमसि मुखं भूयासं द्यावापृथिवीभ्यां त्वा परि गृह्णामि विश्वे त्वा देवा वैश्वानराः ॥ ५ ॥

प्र च्यावयन्तु दिवि देवान् दृंहान्तरिक्षे वयांसि पृथिव्यां पार्थिवान् ध्रुवं ध्रुवेण हविषाऽव सोमन्नयामसि

यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत्। यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत्। यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन् ॥ ६ ॥

एनसा विश्वकर्मन्थ्यो दक्षिणान्न सर्पिर्ग्रीवी वैश्वानराश्चत्वारिꣳशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

प्रकृतिर्मन्त्रणं प्रोक्तं सप्तमे स्तुतशस्त्रयोः।

अथाष्टमे तृतीयसवनगता माध्यन्दिनसवनगता होमविशेषमन्त्रा उच्यन्ते। कल्पः। 'अथ चमसाञ्जुहोति श्येनाय पत्वने स्वाहा वषट्कृते जुहोति वट्स्वयमभिगूर्त्ताय नमः स्वाहेत्यनुवषट्कृते जुहोतीत्युत्तरेणोत्तरेणानुवषट्कृते' इति। पाठस्तु। "श्येनाय पत्वने स्वाहा वट् स्वयमभिगूर्ताय नमो विष्टम्भाय धर्मणे स्वाहा वट् स्वयमभिगूर्त्ताय नमः परिधये जनप्रथनाय स्वाहा वट् स्वयमभिगूर्त्ताय नम ऊर्जे होत्राणाꣳ स्वाहा वट् स्वयमभिगूर्त्ताय नमः पयसे होत्राणाꣳ स्वाहा वट् स्वयमभिगूर्त्ताय नमः प्रजापतये मनवे स्वाहा वट्स्वयमभिगूर्त्ताय नम ऋतमृतपाः सुवर्वाट् स्वाहा वट् स्वयमभिगूर्त्ताय नमः" इति। श्येनरूपाय पतनशीलाय 'इन्द्र ऋभुभिः' इत्यनया याज्यया प्रतिपाद्याय देवाय स्वाहा हुतमिदमस्तु। वट्शब्दोऽवश्यमित्यस्मिन्नर्थे वर्त्तते। स्वयमेव सोमपार्श्वे गन्तुमुद्यतः स्वयमभिगूर्त्तः. अवश्यं स्वयमभिगूर्त्ताय नमो-

ऽस्तु। विष्टम्भाय विष्टम्भयित्रे शत्रूणां विनाशयित्रे. धर्मणे धारकाय अस्माकं पोषकाय 'इन्द्रावरुणा सुतपाव्' इति याज्यया प्रतिपाद्याय देवाय स्वाहुतं। परिधये परितो धारयित्रे. जनप्रथनाय जनानां प्रख्यापनाय 'इन्द्रश्च सोमं पिबतम्' इति याज्यया प्रतिपाद्याय स्वाहुतं। होत्राणां होमकर्तृणामूर्जे ऊर्गूपायान्नप्रदाय 'आ वो वहन्तु सप्तयः' इति याज्यया प्रतिपाद्याय स्वाहुतं। होत्राणां होमकर्तृणां पयसे चीरप्रदाय 'इयमेव नः सुहवा' इति याज्यया प्रतिपाद्याय स्वाहुतं। प्रजापतये प्रजानां पालकाय. मनवेऽस्माभिर्मन्तव्याय. 'इन्द्राविष्णू पिबतम्' इति याज्यया प्रतिपाद्याय स्वाहुतं। हे ऋतपाः सत्यपालक. हे सुवर्वाट् स्वर्गप्रापक. ऋतमस्मदीयं यज्ञं पालयेति शेषः। तस्मै तुभ्यं 'इमं स्तोममर्हते' इति याज्यया प्रतिपाद्याय स्वाहुतं। त एते प्रस्थितयाज्या होमाः। कल्पः। 'तृम्पन्ताꣳ होत्रा इति सर्वान् हुत्वा जपति' इति। पाठस्तु। "तृम्पन्ताꣳ होत्रा मधोर्घृतस्य" इति। होत्रा मधोर्घृतस्येति हूयमाना देवा मधुरेण घृतेन तृप्यन्तु। त एते मन्त्राः तृतीयसवनगताः 'कदा च नस्तरीः' इत्यस्मादनुवाकादूर्ध्वं द्रष्टव्याः। कल्पः। 'यज्ञपतिमृषय एनसाऽऽहुरित्याग्नीध्रीये पञ्च वैश्वकर्मणानि हुत्वा' इति। तत्र प्रथमामृचमाह। "यज्ञपतिमृषय एनसा आहुः। प्रजा निर्भक्ता अनुतप्यमाना मधव्यौ स्तोकावप तौ रराधा सन्नस्ताभ्याꣳ सृजतु विश्वकर्मा" इति। यदा प्रजाः सर्वा निर्भक्ता अन्तर्हिता अनुतप्यमाना भवन्ति तदानीं यज्ञपतिं एनसा संयुक्तमृषयः सर्वेऽप्याहुः यज्ञपत्यपराधादेव वृष्ट्याद्यभावे सस्याभावे प्रजानामनुतापो जायते। कोऽयं यज्ञपतेरपराध इति तदुच्यते। मधुर्वसन्तर्तुः.

तत्सम्बन्धिनौ चैत्रवैशाखमासौ मधव्यौ. स्तोकौ ज्योतिष्टोमानुष्ठानेन स्तोतुं योग्यौ. तादृशयोर्मासयोरनुष्ठानमकृत्वा तौ मासौ प्रत्यहं यज्ञपतिरपरराध. अनेनापराधेन पापी यजमान इत्यृषय आहुः. अतोऽयं विश्वकर्मा नोऽस्मान् यज्ञपतीन् ताभ्यां मासाभ्यां संसृजतु। यथा तयोर्मासयोर्ज्योतिष्टोममनुतिष्ठामस्तथा प्रेरयतु इत्यर्थः। अथ द्वितीयामाह। "घोरा ऋषयो नमो अस्त्वेभ्यः। चक्षुष एषां मनसश्च सन्धौ बृहस्पतये महि षद् द्युमन्नमः। नमो विश्वकर्मणे स उ पात्वस्मान्" इति। पूर्वोक्ता ऋषयस्ते घोरा उग्राः अस्मदपराधमन्विष्य पापीयानयमिति जनानामग्रे निन्दकत्वात्. अत एभ्य ऋषिभ्यो नमोऽस्तु। नमस्कारेण शान्ताः सन्तोऽस्मान् मा निन्दन्तु। एषामृषीणां चक्षुषोऽस्माकं मनसश्च सन्धौ सन्धाननिमित्तं बृहस्पतये नमोऽस्तु। ऋषयो यथास्मान् समनुग्रहेण कटाक्षेण वीक्षन्ते वयं च यथा कर्मानुष्ठानेनापराधरहिताः सन्तो मनसा भक्तिं कुर्मः तथायं बृहस्पतिरनुगृह्णातु। महि षद् द्युमदित्येतानि त्रीणि नमःशब्दस्य विशेषणानि। नमस्कारोऽयमष्टाङ्गोपेतत्वान् महान्। तदनुग्रहपर्यन्त*मुत्पादनाभावादयं नमस्कारः सीदतीति सत्। भक्तिरसो†नात्यन्तमाविर्भूतत्वात् द्युमत्। विश्वविषयं कर्म सृष्ट्यादिरूपं यस्यासौ विश्वकर्मा प्रजापतिस्तस्मै नमोऽस्तु। स उ सोऽपि विश्वकर्माऽस्माननुष्ठानप्रवर्त्तनेन पातु। अथ तृतीयामाह। "अनन्यान्त्सोमपान् मन्यमानः। प्राणस्य विद्वान्त्समरे न धीर एनश्चकृवान् महि बद्ध एषान्तं विश्वकर्मन्। प्रमुञ्चा स्वस्तये"

*०मुत्पातनाभावादिति सो०। †०नायतमा० इति सो० २।

इति । हे विश्वकर्मन् अनन्यान् त्वद्व्यतिरेकेण गत्यन्तररहितान् अस्मान् सोमपान् मन्यमानः असोमपानेऽप्येते सोमपा इत्येवानुग्रहं कुर्वन् पातुमर्हतीति शेषः । तत्र दृष्टान्तः । प्राणस्य विद्वान् समरे न धीर इति । यथा लोके धीरः पुरुषः परो यस्य. प्राणस्यापदं विद्वान्. समरे न युद्धे इव. करुणया तं पाति तद्वत् अयं यजमानः प्रमादादालस्यादिकारिणा तमोगुणेन वृतः सन्नेषामृषीणामेनो महि चकवान् महान्तमपराधं कृतवान्. तमपराधिनं प्रमुञ्च. तस्माद्-पराधात् प्रकर्षेण मोचय । किमर्थं स्वस्तये विनाशराहित्याय । अथ चतुर्थीमाह । "ये भक्षयन्तो न वसून्यानृहुः । यानग्नयोऽन्वतप्यन्त धिष्णिया इयन्तेषामवया दुरिष्ट्यै स्विष्टिन्नस्तां कृणोतु विश्वकर्मा" इति । ये यष्टारः भक्षयन्तो न सोमं भक्षयन्तो विभक्षयन्त इव वसूनि धनान्यानृहुः पूजितवन्तः यज्ञभिक्षारूपेण धनमर्जयित्वा यज्ञमकृत्वैव भोगार्थं संगृहीतवन्त इत्यर्थः । धिष्ण्यनिवासिनोऽग्नयो यानन्वतप्यन्त अहो शोच्या एत इति तद्विषये खेदं कृतवन्तः तेषां यष्टॄणां या दुरिष्टिर्दुष्टो यागो यागाभावः तद्धेतुरेनस्तस्या अवया विनाशयित्री येयमिष्टिर्यागः तामिष्टिं नोऽस्माकं विश्वकर्मा स्विष्टिं करोतु । अथ पञ्चमीमाह । "नमः पितृभ्यो अभि ये नो अख्यन् यज्ञकृतो यज्ञकामाः सुदेवा अकामा वो दक्षिणान्नीनिम मा नस्तस्मादेनसः पापयिष्ट" इति । ये नोऽस्मानभ्यख्यन् आभिमुख्येनापश्यन् ते यज्ञस्य कारयितारः अस्माकं यज्ञं कामयमानाः सुदेवाः सुष्ठुद्योतमानाः. तादृशा हे पितरो वयं प्रमादालस्यादिभिरकामा यज्ञं कर्त्तुमिच्छारहिताः सन्तो वो युष्मभ्यं दक्षिणां

दक्षिणोपलक्षितं यज्ञं नीनिम नैव नीतवन्तः तस्मादेनसोऽस्मान् मा पापयिष्ट तेन पापेनास्मान् पापिष्टान् मा कुरुत। तैरेतैर्मन्त्रैर्होमं विधत्ते। "यावन्तो वै सदस्यास्ते सर्वे दक्षिण्यास्तेभ्यो यो दक्षिणां न नयेदेभ्यो वृश्चेत यद्वैश्वकर्मणानि जुहोति सदस्यानेव तत् प्रीणाति" इति। यज्ञसभायां द्रष्टुमागत्यावस्थिता ये ब्राह्मणास्ते सर्वे दक्षिणार्हाः तेषामदानेन यत् पापं तन्निवारणाय यथोक्तानि वैश्वकर्मणानि जुहुयात्। अयञ्च होम ऋत्विग्दक्षिणानन्तरभावीति कृत्वा तन्मन्त्राः 'उ दु त्यं जातवेदसम्' इत्यस्यावसाने द्रष्टव्याः। कल्पः। 'पूतभृतो बिल उदीचीनदशं पवित्रं वितत्य तस्मिन् यजमानः पुरस्तात् प्रत्यङ् तिष्ठन् सह पत्न्याऽऽशिरमवनयत्यस्मे देवासो वपुषे चिकित्सतेति चतसृभिः' इति। आशिरशब्देन मथितं दध्यभिधीयते। 'आग्नीध्रे पत्न्याशिरं मथित्वा' इति सूत्रकारेणोक्तत्वात्। तत्र प्रथमाया ऋचः पाठस्तु। "अस्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाममश्नुतः। पुमान् पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः" इति। देवासो हे देवाः अस्मे अस्माकं वपुषे शरीराय चिकित्सत अस्माकं शरीरं यथा पापरहितं भवति तथा कुरुतेत्यर्थः। यत् क्षीरं दोहनपात्रस्थमेवातप्तादिप्रक्षेपेण घनीभवति तादृशं दधि रूपान्ताशिरशब्देनाभिधीयते। चिकित्साविशेषं प्राप्य दम्पती पत्नीयजमानौ आशिरा दध्ना दम्पतीयं वामं सौन्दर्यं अश्नुतः. तेन कृत्वा पुमान् पुत्रो जायते वसुञ्च विन्दते। अथ अपि च विश्वे एतत्सम्बन्धिनः सर्वे अरपाः ज्ञानवन्तः. एतस्य गृहः एधते। अथ द्वितीयामाह। "आशीर्दाया दम्पती वामम-

श्नुतामरिष्टो रायः सचताꣳ समोकसा। य आऽसिचत्संदुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः” इति। आशीर्दाया आशिरं पूर्वोक्तं दधि दत्त इत्याशीर्दायौ तादृशौ दम्पती वाममश्नुतां कल्याणं प्राप्नुतां। कीदृशौ दम्पती समोकसौ सम्यगोको ययोस्तौ समोकसौ द्वौ एकगृहवासिनावित्यर्थः। अरिष्टो हिंसारहितः पत्नीयुक्तो यजमानो रायो धनानि सचतां समवैतु प्राप्नोतु इत्यर्थः। यो यजमान इष्टेन सह प्रीत्या युक्तः. यामन् आधारभूते सोमे. संदुग्धं नक्तं दधिभावमापन्नं सम्यक् चीरं. कुम्भ्या संपूर्णेन घटेन यथा आऽसिचत् सर्वतः सिक्तवान् स यजमानः अमतिं रोगं दुर्बुद्धिं जहातु। अथ तृतीयामाह। “सर्पिर्ग्रीवी पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य। सहजानिर्यः सुमखस्यमान इन्द्रायाशिरꣳ सह कुम्भ्याऽदात्” इति। अस्य यजमानस्य जाया सर्पिर्ग्रीवी स्निग्धकण्ठा कोमलध्वनियुक्ता. पीवरी पुष्टसर्वावयवयुक्ता भवतु। अस्य यजमानस्य पुत्राः पीवानः पुष्टसर्वाङ्गाः अकृशासः कदाचिदपि व्याध्यादिजनितकार्श्यरहिताः सन्तु। यो यजमानः सुमखस्यमानः शोभनं यज्ञं कर्त्तुमिच्छन्निन्द्रायाशिरं पूर्णया कुम्भ्या सह अदात् प्रभूतं दत्तवानित्यर्थः. तस्यास्य यजमानस्य जायेति पूर्वत्रान्वयः। कीदृशो यजमानः सहजानिः सहावस्थिता जाया यस्यासौ सहजानिः. आशीर्दानकाले जायापि सहावस्थितेत्यर्थः। अथ चतुर्थीमाह। “आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सवर्चसं। सञ्जयन् चेत्राणि सहसाऽहमिन्द्र कृण्वानो अन्याꣳ अधरान्त्सपत्नान्” इति। सकारान्तोऽयमाशिस्शब्दः प्रार्थनामाचष्टे। हे इन्द्र मे आशीः म

मेवं प्रार्थना. भवानूर्जं दधातु मदर्थं धारयतु प्रयच्छत्वित्यर्थः। उतापि च सुप्रजास्त्वं शोभनापत्यत्वं इषमन्नं द्रविणं सवर्चसं वर्चःसहितं प्रयच्छतु। अहं त्वत्प्रसादात् क्षेत्राणि वैरिसम्बन्धीनि सहसा बलेन सञ्जयन् स्वात्मनि धारयन् अन्यान् सपत्नान् वैरिणः अधरान् क्षणान: अस्मदाज्ञाधारिणः कुर्वाणो भूयासं। अस्याग्निरवनयनस्य तृतीयसवनगताभिषवार्थत्वादेते मन्त्राः 'कदाचन, वाममद्य' इत्यनयोरनुवाकयोर्मध्ये द्रष्टव्याः। कल्पः। 'भूतमसि भूते मा धा इति प्रतिप्रस्थाता ध्रुवमवेक्षते' इति। पाठस्तु। "भूतमसि भूते मा धा मुखमसि मुखं भूयासं" इति। हे ध्रुव भूतमसि नित्यसिद्धस्वरूपमसि. भूते नित्यसिद्धस्वरूपे स्वर्गादौ परमात्मनि वा मा धा मां स्थापय। किञ्च मुखमसि सर्वेषु ग्रहेषु मुख्योऽसि. 'आयुर्वा एतद्यज्ञस्य यद्ध्रुवः' इति श्रुतेः. अतस्त्वत्प्रसादात् मुखं भूयासं सर्वेषां मुख्यो भूयासं। कल्पः। 'द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्यञ्जलिना परिगृह्य' इति। हे ध्रुव द्यावापृथिवीसदृशाभ्यामञ्जलिपुटाभ्यां त्वां स्वीकरोमि। कल्पः। 'विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्त्विति ध्रुवं प्रच्यावयति' इति। पाठस्तु। "विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्तु दिवि देवान् दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवान्" इति। हे ध्रुव वैश्वानराः विश्वेषां नराणां हितकारित्वेन सम्बन्धिनः सर्वे देवास्त्वां प्रच्यावयन्तु स्वस्थानाच्चालयन्तु. त्वं च दिवि देवान् द्रढीकुरु. अन्तरिक्षे वयाꣳसि पक्षिणो द्रढीकुरु. पृथिव्यां पर्वतादीन् द्रढीकुरु. न तु त्वदीयेन चलनेन सर्वं जगच्चालय। कल्पः। 'ध्रुवं ध्रुवेणेति पुरस्तात् प्रत्यङ्कासीनो होतृचमसे

ध्रुवमवनयति' इति। पाठस्तु। "ध्रुवं ध्रुवेण हविषाऽव सोमन्नयामसि यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत्। यथा न इन्द्र इद्विशः केवलीः सर्वाः सुमनसः करत्। यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन्" इति। वयं ध्रुवेण हविषा इदानीमवनीयमानेन ध्रुवस्थालीगतेन सोमरसेन पूर्वं होतृचमसे स्थितं ध्रुवं सोमं अवनयामसि अधस्तान्नयामः. तस्योपरि त्वां सिञ्चाम इत्यर्थः. यथा येन प्रकारेण नोऽस्माकं सर्वमिज्जगत् सर्वमेव जङ्गमाजङ्गमादिकं अयक्ष्मं रोगरहितं. सुमनाः शोभनमनस्कं असत् भवेत्। यथा च नोऽस्माकं विशः प्रजाः सर्वा अपि केवलीः रोगरहिताः. सुमनसः अनुकूलमनसश्चेन्द्रः करत् इन्द्रश्च कुर्यात्। यथा च नोऽस्माकं सर्वा इद्दिशः दिग्वर्त्तिन्यः सर्वा एव प्रजाः. अधीनाः स्युरिति शेषः. किञ्चास्माकं केवलीरसन् असाधारणेन वर्त्तेरन्। यथैतत् सर्वं सिध्यति तथा होतृचमसेऽवनयामीति पूर्वत्रान्वयः। त एते मन्त्रा बृहस्पतिसुतस्य हरिरसीत्यनयोरनुवाकयोर्मध्ये द्रष्टव्याः॥

अथ विनियोगसङ्ग्रहः,—

श्येना तृतीयसवने सप्तभिश्चमसाहुतिः।
वषट्कृते मन्त्रहोम वडित्यनुवषट्कृते॥
तृम्पन्तां सर्वचमसान् हुत्वा जपति मध्यमे।
सवने वैश्वकर्माख्यहोमा मन्त्रैस्तु पञ्चभिः॥
यज्ञघोरा अनन्या ये भक्षयन्तो नमस्त्रिभिः।
पूतभृत्याऽऽग्निरं लक्ष्ये क्षिपेन्मन्त्रचतुष्टयात्॥

भूतं ध्रुवमवेक्षेत प्रतिप्रस्थातृकर्म तत् ।
धावाञ्जलौ गृहीत्वा विश्वे होतृचमसन्नयेत् ॥
ध्रुवमेकीकरोत्यत्र मन्त्रान्तोऽसन्निती रितः ।
अष्टमे त्वनुवाकेऽस्मिन्नष्टाविंशतिरीरिताः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके अष्टमोऽनुवाकः ॥ ८ ॥

---

यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभिप्रवर्त्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्य चीण्येतान्यक्षराणि चिपदा गायची गायचं प्रातःसवनं गायचियैव प्रातःसवने वज्रमन्तर्धत्ते(१)* उक्थं वाचीत्याह माध्यन्दिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा चिष्टुप् चैष्टुभं माध्यन्दिनꣳ सवनं चिष्टुभैव माध्यन्दिने सवने वज्रमन्तर्धत्ते(२)† ॥ १ ॥

---

* एषा मन्त्रस्य तदर्थवादस्य च सङ्ख्या । एवं परत्र ।
† इतः प्रभृति आयुक्तमहेशचन्द्रन्यायरत्नेन संशोधितम् ।

उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तै-तान्यक्षराणि सप्तपदा शक्वरी शाक्वरो वज्रो वज्रेणैव तृतीयसवने वज्रमन्तर्धत्ते(३) ब्रह्मवादिनो वदन्ति स* तु वा अध्वर्युः स्याद्यो यथासवनं प्रतिगरे छन्दाꣳसि सम्पादयेत् तेजः प्रातःसवन आत्मन् दधीतेन्द्रियं मा-ध्यन्दिने सवने पशूꣳस्तृतीयसवन इति(४) उक्थशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि ॥ २ ॥

त्रिपदा गायत्री गायत्रं प्रातःसवनं प्रातःसवन एव प्रतिगरे छन्दाꣳसि सम्पादयत्यथो तेजो वै गायत्री तेजः प्रातःसवनं तेज एव प्रातःसवन आत्मन्धत्त(५) उक्थं वा चीत्याह माध्यन्दिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्ष-राणि चतुष्पदा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं मा-ध्यन्दिन एव सवने प्रतिगरे छन्दाꣳसि सम्पादयत्य-थो इन्द्रियं वै त्रिष्टुगिन्द्रियं माध्यन्दिनꣳ सवनम् ॥३॥

इन्द्रियमेव माध्यन्दिने सवन आत्मन्धत्त(६) उक्थं वा-चीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्वरी शाक्वराः पशवो जागतं तृतीयसवनं तृतीयसवन एव प्रतिगरे छन्दाꣳसि सम्पादयत्यथो

* G पुस्तके सत्वा इति पाठः।

पशवो वै जगती पशवस्तृतीयसवनं पशूनेव तृतीयसवन आत्मन्धत्ते(७) यद्वै होताध्वर्युमभ्याह्वयत आव्यमस्मिन् दधाति तद्यन्न ॥ ४ ॥

अपहनीत पुराऽस्य संवत्सराद्गृह आवेवीरञ्छोꣳसा मोद इवेति प्रत्याह्वयते तेनैव तदपहते(८) यथा वा आयतां प्रतीक्षत एवमध्वर्युः प्रतिगरं प्रतीक्षते(९) यदभिप्रतिगृणीयाद्यथाऽऽयतया समृच्छते तादृगेव तद्(१०) यदर्धर्चाल्लुप्येत यथा धावद्भ्यो हीयते तादृगेव तत्(११) प्रबाहुग्वा ऋत्विजामुद्गीथा उद्गीथ एवोद्गातॄणाम् ॥५॥

ऋचः प्रणव उक्थशꣳसिनां प्रतिगरोऽध्वर्यूणां(१२) य एवं विद्वान् प्रतिगृणात्यन्नाद एव भवत्याऽस्य प्रजायां वाजी जायत(१३) इयं वै होताऽसावध्वर्युर्यदासीनः शꣳसत्यस्या एव तद्धोता नैत्यास्त इव हीयमथो इमामेव तेन यजमानो दुहे यत् तिष्ठन् प्रतिगृणात्यमुष्या एव तदध्वर्युर्नैति ॥ ६ ॥

तिष्ठतीव ह्यसावथो अमूमेव तेन यजमानो दुहे(१४) यदासीनः शꣳसति तस्मादितः प्रदानं देवा उपजीवन्ति यत् तिष्ठन् प्रतिगृणाति तस्मादमुतः प्रदानं मनुष्या उपजीवन्ति(१५) यत् प्राङासीनः शꣳसति प्रत्यङ्

तिष्ठन् प्रतिगृणाति तस्मात् प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते(१९) यद्वै होताध्वर्युमाभ्याह्वयते वज्रमेनमभिप्रवर्तयति पराङावर्तते वज्रमेव तन्निकरोति(२०) ॥ ७ ॥

सवने वज्रमन्तर्धत्ते। त्रीण्येतान्यक्षराणि। इन्द्रियं माध्यन्दिनꣳ सवनं। न। उद्गातृणाम्। अध्वर्युर्नेति। वर्तयत्यष्टौ च ॥ ९ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥०॥

उक्ता प्रस्थितयाज्याख्यहोमाद्या अष्टमेऽखिलाः।

अथ नवमे प्रतिगरानन्तरभाविमन्त्रा वक्तव्याः। शंसितुर्मन्त्रेण प्रोत्साहनं प्रतिगरः, तस्य प्रतिगरस्यानन्तरभाविषु मन्त्रेषु प्रथममुत्पाद्य विनियुङ्क्ते, "यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभिप्रवर्त्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि त्रिपदा गायत्री गायत्रं प्रातःसवनं गायत्रियैव प्रातःसवने वज्रमन्तर्धत्ते"(१) इति। यद्वा शंसनकाले* होता अध्वर्युमाभिमुख्येनाह्वयति। आह्वानमन्त्रस्तु 'शोंसा वोम्' इति; तस्यायमर्थः, हे अध्वर्यो, शस्त्रं पठानि, मदीयशस्त्रपाठकाले प्रतिगराय त्वं सावधानो भवेति पदेन

* यदा शंसनकाम इति E पुस्तके पाठः।

यदध्वर्युं प्रति होतुराह्वानं तदेतद्वज्रप्रहारमयं होता करोति, तस्माद्धोतृप्रयुक्तवज्रप्रहारं समाधातुं प्रातःसवनगतप्रतिगरादूर्ध्वं 'उक्थशाः' इति मन्त्रेण होतारं स्तुवीत। उक्थं शस्त्रं शंसतीत्युक्थशाः, सम्यक् शंसितवानसीति मन्त्रार्थः। प्रतिगरप्रकारस्तु आपस्तम्बेन दर्शितः, 'अध्वर्युः सदो बिले प्राङ्मुख उपविश्य इडा देवहूरिति शस्त्रं प्रतिगरिष्यन् जयति, अध्वर्यो शोंसा वोमिति होतुरभिज्ञाय प्रदक्षिणमावर्त्तमानः शोंसा मोदैवेति प्रत्याह्वयते, शोंसा मोद इवेति वा' इति; प्रतिगर्तुं पात्रं धारयमाणः सदो बिले प्रत्यङ् तिष्ठन् सम्बोधनमाहृत्य होतारं प्रत्याह्वयते, हे होतः 'शंसा' सर्वथैव मोद एव अस्माकं त्वदीयेन प्रतिगरेणेति मन्त्रार्थः। ऋचि समाप्तायां अयमेव प्रतिगरः प्रणवादिः पठ्यते। अस्त्विति प्रणवस्यार्थः। कृत्स्नशस्त्रसमाप्तावङ्गीकारवाचिना प्रणवेनैव प्रतिगरः। प्रत्युत्तरकथनं प्रतिगरशब्देनोच्यते। प्रातःसवने यानि शस्त्राणि तेषां सर्वेषां प्रतिगरमुक्त्वा तदवसाने त्र्यक्षरम् 'उक्थशाः' इति मन्त्रं पठेत्। अत्राक्षरगतत्रित्वेन त्रिपदा गायत्री स्मर्यते। तया च गायत्र्या तद्युक्तं प्रातःसवनं स्मर्यते। प्रातःसवने स्तुतया गायत्र्यैव होतृप्रयुक्तं वज्रमन्तर्हितं करोति।

अथ मन्त्रान्तरमुत्पाद्य विधत्ते, "उक्थं वाचीत्याह माध्यन्दिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं त्रिष्टुभैव माध्यन्दिने सवने वज्रमन्तर्धत्ते"(१) इति। पूर्ववद्व्याख्येयम्। उक्थं शस्त्रं त्वदीयायां वाचि सम्यक् प्रवृत्तमिति मन्त्रार्थः।

पुनरपि मन्त्रान्तरमुत्पाद्य विधत्ते, "उक्थं वाचीन्द्रायेत्याह

तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्करी शाक्करो वज्रो वज्रेणैव तृतीयसवने वज्रमन्तर्धत्ते"(३) इति। 'वज्रो वै शक्करी' इत्युक्तत्वात् वज्रस्य शाक्करत्वम्। अनेन सप्ताक्षरेण शाक्करेण वज्रेण होतृप्रयुक्तं वज्रमन्तर्हितं करोति।

अथ विहितं मन्त्रत्रयं प्रकारान्तरेण प्रशंसितुमुपोद्घातमाह, "ब्रह्मवादिनो वदन्ति स तु वा अध्वर्युः स्याद्यो यथासवनं प्रतिगरे च्छन्दाꣳसि सम्पादयेत् तेजः प्रातःसवन आत्मन् दधीतेन्द्रियं माध्यन्दिने सवने पशूꣳस्तृतीयसवने"(४) इति। यः पुरुषः सवनानुरूपेण च्छन्दांसि कर्त्तुं जानाति, 'प्रातःसवने गायत्री, माध्यन्दिने सवने त्रिष्टुप्, तृतीयसवने जगति' इत्येवंविधानि च्छन्दाꣳसि। तानि च प्रतिगरेऽभिहिते सति पश्चात् सम्पादनीयानि। एतत्सम्पादने यः समर्थः स एव मुख्योऽध्वर्युः स्यात्।

किञ्च प्रातःसवने समाप्ते सति स्वात्मनि यस्तेजो धारयेत्, माध्यन्दिने समाप्ते सतीन्द्रियं धारयेत्, तृतीयसवने समाप्ते सति पशून् धारयेत्, स एव मुख्योऽध्वर्युः,-इत्येवं ब्रह्मवादिनः परस्परमाहुः। तत्र प्रथममन्त्रेण सवनोचितच्छन्दःसम्पत्तिं तेजोधारणञ्च दर्शयति, "उक्थशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि त्रिपदा गायत्री गायत्रं प्रातःसवनं प्रातःसवन एव प्रतिगरे च्छन्दाꣳसि सम्पादयत्यथो तेजो वै गायत्री तेजः प्रातःसवनं तेज एव प्रातःसवन आत्मन् धत्ते"(५) इति। प्रातःसवनगतानां स्तोत्रशस्त्राणां गायत्रीच्छन्दस्कत्वात् प्रातःसवनस्य बहिष्पवमानगता 'उपास्मै गायत' इत्याद्याः, आज्यस्तोत्रगताः 'अग्न आयाहि' इत्याद्याश्च गायत्रीच्छन्दस्काः, तथा शस्त्रे-

ष्वपि द्रष्टव्यम्। गायत्र्युपदेशेन ब्राह्मणसंपूर्त्तेर्गायत्र्यास्तेजोरूपत्वम्।

द्वितीयमन्त्रेणोचितच्छन्दःसम्पत्तिमिन्द्रियधारञ्च दर्शयति, "उक्थं वाचीत्याह माध्यन्दिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यन्दिन एव सवने प्रतिगरे च्छन्दाꣳसि सम्पादयत्यथो इन्द्रियं वै त्रिष्टुगिन्द्रियं माध्यन्दिनꣳ सवनं इन्द्रियमेव माध्यन्दिने सवन आत्मन्धत्ते"(६) इति। माध्यन्दिनपवमाने 'प्र तु द्रव' इतिसूक्तस्य त्रिष्टुप्छन्दस्कत्वात् तत् सवनं त्रैष्टुभं। प्रजापतेरुरसो बाहुभ्यां च इन्द्रेण सह उत्पन्नत्वादिन्द्रसृष्टस्येन्द्रियस्य त्रिष्टुप्त्वम्।

तृतीयसवनोचितच्छन्दःसम्पत्तिं पशुप्राप्तिञ्च सप्ताक्षरमन्त्रेण दर्शयति, "उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्वरी शाक्वराः पशवो जागतं तृतीयसवन एव प्रतिगरे च्छन्दाꣳसि सम्पादयत्यथो पशवो वै जगती पशवस्तृतीयसवनं पशूनेव तृतीयसवन आत्मन् धत्ते"(७) इति। शक्वरीजगत्योः पशुप्राप्तिहेतुत्वं, सवनगतस्तोत्रशस्त्रर्चां जगतीच्छन्दस्कत्वात् तत् सवनं जागतं, अतः शक्वरीद्वारा स्वस्वोचितच्छन्दःसम्पत्तिः। तृतीयसवनस्य पशुप्राप्तिहेतुतया पशुत्वम्।

अथ प्रत्याह्वानं विधत्ते, "यद्वै होताध्वर्युमभ्याह्वयत आव्यमस्मिन् दधाति तद्यन्न अपहनीत पुरास्य संवत्सराद्गृह आवेवीरन्छोꣳसा मोद इवेति प्रत्याह्वयते तेनैव तदपहते"(८) इति। 'आ' समन्तात्, व्यते पीड्यते येन रोगविशेषेण स रोगविशेष आव्यः। यदा 'होता अध्वर्यो' सम्बोध्य 'शोꣳसा वोम्' इति प्रष्टुमभि-

मुख्येनाह्वयते, तदानीमस्मिन्नध्वर्यौ रोगविशेषं स्थापयति, सावधान-त्वहेतोश्चित्तक्लेशस्योपद्रवत्वात्। 'तत्' रोगस्थापनं यदि अध्वर्युः 'न अपहनीत', न निराकुर्यात्, तदानीम् 'अस्य' अध्वर्योः 'गृहे' 'संवत्सरात्' 'पुरा' एव प्रजा 'आवेवीरन्' सर्वरोगादिभिः पीड्येरन्। ततस्तत्परिहाराय 'शोꣳसा मोद इव' इति मन्त्रेणाध्वर्युः प्रत्याह्वानं कुर्यात्। 'तेनैव' प्रत्याह्वानेन 'तत्' अभ्याह्वानं कृतं रोगजातम् 'अपहते' विनाशयति। प्रश्नरूपस्याभिमुख्येनाह्वानस्य प्रत्युत्तररूपमाह्वानं परिहारः। मन्त्रस्यायमर्थः, हे होतस्त्वं 'शोंसा' सर्वथा शंसैव, 'मोद इव' अस्माकं हर्ष इव, हर्ष एवेति।

इदानीमध्वर्योरप्रमत्तत्वं विधत्ते, "यथा वा आयतां प्रतीक्षत एवमध्वर्युः प्रतिगरं प्रतीक्षते"(९) इति। 'यथा' लोके पृच्छन्तं वादिनं प्रति आभिमुख्येन नियतां वाचं वक्तुं प्रतिवादी सावधानः 'प्रतीक्षते', यथा वा राजामात्यादिकं प्रति सेवको भृत्य आभिमुख्येन नियतां वाचं वक्तुमप्रमत्तः प्रतीक्षते, 'एवम्' असौ 'अध्वर्युः' 'प्रतिगरं' प्रत्युत्तरं वक्तुं सर्वदा सावधानः प्रतीक्षेत।

प्रतिगरकालमतिक्रम्य वा, तस्मात् कालात् प्रागेव वा प्रतिगरे बाधं दर्शयति, "यदभिप्रतिगृणीयाद्यथायतया समृच्छते तादृगेव तत्"(१०) इति। अर्द्धर्चसमाप्तिः प्रतिगरस्य कालः, तस्याभितो यदि 'प्रतिगृणीयात्' तदा 'यथा' प्रागतीते वा काले प्रत्युत्तरमाभाषमाण 'आयतया' वाचा 'समृच्छते', आभिमुख्येन या वाग्वक्तव्या तया नियतया वाचा हीनो भवतीत्यर्थः। 'तत्' एतत्काले प्रतिगरोच्चारणं 'तादृग्' भवति।

• प्रतिगरविस्मरणे बाधं दर्शयति, "यदर्द्धर्चाल्लुप्येत यथा धावद्भ्यो हीयते तादृगेव तत्"(११) इति। अर्द्धर्चसमाप्तेरनन्तरं यदि प्रतिगरो लुप्यते, तत्र दृष्टान्तः, 'यथा' लोके चोरव्याघ्रादिभयाकुले महारण्ये शीघ्रं 'धावद्भ्यः' सार्थगतेभ्यः पुरुषेभ्यः सकाशात् कश्चिद्धावितुमशक्तो हीनः गच्छन् सन् चोरादिभिरुपद्रुतो भवति, 'तत्' एतदर्द्धर्चप्रतिगरलोपनं 'तादृक्' एव। तस्मात् सावधानः प्रतिगरकालं प्रतीक्षेत।

उद्गातृहोतृसाम्येनाध्वर्य्योः प्रतिगरं प्रशंसति, "प्रवाऽऽगवा ऋत्विजामुद्गीथा उद्गीथ एवोद्गातॄणाम् ऋचः प्रणव उक्थशꣳसिनां प्रतिगरोऽध्वर्यूणाम्"(१२) इति। 'ऋत्विजाम्' उद्गातृहोत्रध्वर्यूणाम् 'उद्गीथा' उत्कृष्टगानविशेषाः 'प्रवाऽऽगवै' समाना एव। समानत्वं कथमिति?-तदुच्यते,'उद्गातॄणां' सामगानामुद्गीथनाम्नैव गानविशेषः प्रसिद्धः, प्रस्तावमन्त्रादुपरितना भक्तिरुद्गीथः, स च प्रणवपुरःसरं गीयते। एवम् 'उक्थशंसिनां' होतॄणां सम्बन्धी 'प्रणव' उद्गीथः। 'अध्वर्यूणां' तु 'प्रतिगरः' उद्गीथः। तथा च श्रूयते 'ॐमिति सामानि गायन्ति। ओꣳशोमिति शस्त्राणि शꣳसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणातीति। ॐशोꣳसा मोद इवेति ब्रुवन् सामवदुच्चारयति' [छा०उ०] इति।

प्रतिगरवेदनं प्रशंसति, "य एवं विद्वान् प्रतिगृणात्यन्नाद एव भवत्यास्य प्रजायां वाजी जायते"(१३) इति।

होतुः शंसनकाले उपवेशनमध्वर्य्योश्च प्रतिगरकाले उत्थानं क्रमेण विधत्ते, "इयं वै होतासावध्वर्युर्यदासीनः शꣳसत्यस्या एव तद्धोता

नैत्यास्त इव ह्रीयमथो इमामेव तेन यजमानो दुह्रे यत् तिष्ठन् प्रतिगृणात्यमुष्या एव तदध्वर्युर्नैति। तिष्ठतीव ह्यसावथो अमूमेव तेन यजमानो दुह्रे"(१४) इति। होतुर्भूमिस्वरूपत्वात् अयम् 'आसीनः' शंसेत्, तेनोपवेशनेन 'अस्या एव' 'भूमेः' होता नापगच्छति, भूमिश्चासीनेव दृश्यते। किञ्च तथा सति 'यजमानो' भूमिं दुग्धे, तत्रत्यं सारं गृह्णातीत्यर्थः। अध्वर्योः स्वर्गरूपत्वादुत्थित एवायं प्रतिगृणीयात्, तथा सति अयम् 'अध्वर्युः' 'अमुष्याः' दिवो नापगच्छति, द्यौश्च 'तिष्ठतीव' दृश्यते, उपरि वर्त्तमानत्वात्। किञ्चाध्वर्योरुपस्थितत्वेन 'यजमानो' दिवं दुग्धे तत्रत्यं सारं गृह्णाति।

प्रकारान्तरेणोपवेशनोत्थाने प्रशंसति, "यदासीनः शंसति तस्मादितः प्रदानं देवा उपजीवन्ति यत् तिष्ठन् प्रतिगृणाति तस्मादमुतः प्रदानं मनुष्या उपजीवन्ति"(१५) इति। यस्मात् 'आसीनो' होता 'शंसति' 'तस्मात्' 'देवा' 'इतः प्रदानम्' 'उपजीवन्ति', अस्मिन् लोके यत् प्रदीयते हविस्तदुपजीवन्तीत्यर्थः। यस्मादध्वर्युः 'तिष्ठन् प्रतिगृणाति', 'तस्मात्' 'मनुष्या' 'अमुतः प्रदानमुपजीवन्ति', अमुष्य लोकाद्देवैः प्रेरितं वर्षमुपजीवन्तीत्यर्थः।

होतुः प्राङ्मुखत्वमध्वर्योः प्रत्यङ्मुखत्वं च विधत्ते, "यत् प्राङासीनः शंसति प्रत्यङ् तिष्ठन् प्रतिगृणाति तस्मात् प्राचीनं रेतो धीयते प्रतीचीः प्रजा जायन्ते"(१६) इति। यस्माद्धोता प्राङ्मुखः 'तस्मात्' 'प्राचीनं' पत्नीक्षेत्राभिमुखं 'रेतः' स्थाप्यते। यस्मादध्वर्युः प्रत्यङ्मुखः तस्मात् 'प्रजाः' क्षेत्रविमुखा उत्पद्यन्ते।

होतुरभ्याह्वानात् पूर्वमिडा देवहूरिति मन्त्रं जपतः प्राङ्मुख-

ऋध्वर्योरभ्याह्वानादूर्ध्वं प्रत्यङ्मुखत्वाय परावृत्तिं विधत्ते, "यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभिप्रवर्त्तयति पराङावर्तते वज्रमेव तन्निकरोति"(१०) इति। यद्यपि 'शोंसावोम्' इति होतुरभ्याह्वानं सकृदेव, तथापि चीन् अर्थान् विधातुं द्वितीयानुवादः। अत-एवापस्तम्बेनोक्तं, 'प्रदक्षिणमावर्त्तमानः शोंसा मोदैवेति प्रत्याह्व-यते' इति।

अथ विनियोगसंग्रहः,—

प्रत्याह्वयेत शोंसावों सवनेषु त्रिषूच्चरेत्।
उक्थादिमन्त्रांस्त्रीनत्र मन्त्राश्चत्वार ईरिताः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः॥०॥

---

उपयामगृहीतोऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतु-पाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि(१) उपयाम-गृहीतोऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य य-ज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि(२) उपयामगृहीतोऽसि श्रुतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रु-वस्याध्यक्षाभ्यां गृह्णामि(३) देवेभ्यस्त्वा(४) विश्वदेवेभ्यस्त्वा(५)

विश्वेभ्यस्त्वा देवेभ्यो(६) विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्व॥ १॥

तन्मे दक्षा माऽवक्ष्यत्(७) मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि(८) मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहि(९) मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहि(१०) भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि(११) भूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि(१२) यो न इन्द्रवायू मित्रावरुणावश्विनावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि(१३) (१४) (१५) ॥ २॥

रक्षस्व भ्रातृव्यस्त्रयोदश च॥ १०॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः ॥*॥

उक्तः प्रतिगरः साङ्गः समन्त्रो नवमे स्फुटम्।

अथ दशमे प्रतिनिर्ग्राह्यमन्त्रा उच्यन्ते। कल्पः। 'उपयामगृहीतोऽसि वाक्षसदसीति प्रतिनिर्ग्राह्यं गृहीत्वा न सादयति' इति। पाठस्तु। "उपयामगृहीतोऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि"(१) इति। हे प्रतिनिर्ग्राह्य, त्वं उपयामेन पार्थिवपात्रेण गृहीतोऽसि, वाचो वागिन्द्रियं, तत्रा-

वस्थितः 'असि', 'वाग्वा एषा यदैन्द्रवायवः' इति श्रुतेः। तादृशं त्वां वाचः पालकाभ्यां 'क्रतोः' यज्ञस्य पालकाभ्यां 'ध्रुवस्य' अविनाशिपालनस्य 'अस्य', 'यज्ञस्य' 'अध्यक्षाभ्यां' स्वामिभ्यामिन्द्रवायुभ्यां 'गृह्णामि', तदर्थं गृह्णामीत्यर्थः।

कल्पः, 'ग्रहाणां प्रतिनिर्ग्राह्याणां ग्रहणादित्योपस्थानात्तनयनप्रदानान्युत्तरोत्तरैर्मन्त्रैः' इति। अस्यायमर्थः, प्रतिनिर्ग्राह्यनामका ये ग्रहा ऐन्द्रवायवमैत्रावरुणाश्विनसम्बन्धिनस्तेषां ग्रहणादिक्रिया आम्नानक्रमेणोत्तरोत्तरैर्मन्त्रैर्द्रष्टव्येति। तत्रैन्द्रवायवप्रतिनिर्ग्राह्यस्य ग्रहणमन्त्र उक्तः; मैत्रावरुणप्रतिनिर्ग्राह्यस्य ग्रहणमन्त्रः, "उपयामगृहीतोऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि"(१) इति। ऋतं सत्यं यज्ञो वा तत्र सीदतीति 'ऋतसत्'।

आश्विनप्रतिनिर्ग्राह्यमन्त्रः, "उपयामगृहीतोऽसि श्रुतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि"(२) इति। श्रुतं श्रोत्रेन्द्रियं तत्र सीदतीति 'श्रुतसत्'। 'चक्षुर्मैत्रावरुणꣳ श्रोत्रमाश्विनं' इति श्रुत्यन्तरात्।

कल्पः, 'देवेभ्यस्त्वेति(४) आदित्यपात्रेण प्रतिप्रस्थाता आदित्यस्थाल्यां सम्पातमवनीयति'* इति। हे ऐन्द्रवायव, प्रतिनिर्ग्राह्यदेवार्थं त्वामवनयामीति शेषः। एवं "विश्वदेवेभ्यस्त्वा"(५) "विश्वेभ्यस्त्वा देवेभ्यः"(६) इति मन्त्राभ्यामुत्तरयोः सम्पातावनयनं कुर्यात्। गणप्राधान्येन विश्वदेवेभ्य इति समासनिर्देशः। प्रत्येकप्राधान्येन विश्वेभ्य इति व्यासनिर्देशः।

---

* E एवं B पुस्तके अवनीय इति पाठः।

कल्पः, 'विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्वेत्यादित्यपात्रेण प्रतिप्रस्थाता आदित्यस्थालीमपिदधाति' इति। "तन्मे दुश्चक्षा मावख्यत्"(७) इत्येष आम्नाते मन्त्रशेषः। हे 'उरुक्रम' 'विष्णो', रक्षणार्थम् 'एष' सोमः, त्वदधीनः, अतः 'तं रक्षस्व'। 'तन्मे' त्वदीयं सोऽयं 'दुश्चक्षाः' पापदृष्टिः पुरुषो, 'मावख्यत्' मा द्राक्षीत्।

कल्पः, 'ग्रहमध्वर्युरादाय क्षिप्रꣳ होतारमतिद्रुत्य मयि वसुः पुरोवसुरिति ग्रहꣳ होत्रे प्रयच्छति' इति। पाठस्तु, "मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि"(८) इति। 'वसुः' धनरूपः सोमो 'मयि' वर्त्तते, स कीदृशः, 'पुरोवसुः' पुरस्कृतेतरसमस्तधनः, यद्वा पुरस्तात् प्राणादीनां वासयिता। तथाविधस्त्वं 'वाक्पा' वाचः पालकः, अतो मम 'वाचं' 'पाहि'। यथा अनेन मन्त्रेणैन्द्रवायवग्रहो होत्रे दत्तः, एवमुत्तराभ्यां मन्त्राभ्यां मैत्रावरुणाश्विनग्रहौ देयौ। तयोः पाठस्तु। "मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहि(९)। मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहि"(१०) इति। 'विदद्वसुः' लब्धसमस्तधनः। 'संयद्वसुः' प्राप्तसमस्तधनः।

कल्पः, 'ऊते वादित्यमुपतिष्ठते,* भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि'(११) इति। हे हस्तस्थ सोम त्वं 'भूरसि' सुखानां भावयितासि, अतो 'रश्मीनां' सुखप्रकाशकानां वस्तूनां मध्ये, त्वं 'श्रेष्ठः' असि त्वमेव प्राणस्य पालकः, तस्मात् 'मे' 'प्राणं' 'पाहि' पालय। यथा अनेन मन्त्रेणैन्द्रवायवग्रहहोमादूर्ध्वमादित्योपस्थानं, तथैवोत्तरेण मन्त्रेण मैत्रावरुणग्रहहोमादूर्ध्वमादित्यमुपतिष्ठते,

* E पुस्तके 'ऊते चादित्यमुपतिष्ठते, पाठस्तु' इति पाठः।

पाठस्तु, "भूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि"(१२) इति। हे मैत्रावरुणग्रह, त्वं 'भूरसि' सुखानामहिंसितासि, शेषं पूर्ववत्। आश्विनग्रहहोमादूर्ध्वभावी तूपस्थानमन्त्रः शाखान्तरे द्रष्टव्यः।

कल्पः, 'यदि मन्येत यजमानः पूर्वो मातिक्रान्तो भ्रातृव्य इति प्राक्होमादङ्गुष्ठेनाङ्गुलिमवगृह्णीयात् यो न इन्द्रवायू अभिदासति' इति। पाठस्तु, "यो न इन्द्रवायू मित्रावरुणावश्विनावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि"(१३) (१४) (१५) इति। हे 'इन्द्रवायू', 'यो' 'भ्रातृव्यो' 'नो' अस्मान्, 'अभिदासति' हिनस्ति 'उत्पिपीते' अस्माननुल्लङ्घ्य सोमं पिबति, हे 'शुभस्पती' शुभस्य कर्मणः पालयितारौ, 'तं' भ्रातृव्यम 'अहम्' 'अधरं पादयामि' अपकृत्य पादयामि। 'इदम्'-इतिशब्देन तर्जन्या अङ्गुल्या अङ्गुष्ठेनावग्रहणं अभिनीय प्रदर्श्यते, हे 'इन्द्र', 'यथा' 'अहं' भ्रातृव्यात् 'उत्तमः' सन् 'चेतयानि' इहलोकपरलोकज्ञानवान् भूयासं, तथा त्वमनुगृहाणेति शेषः। मित्रावरुणाविति द्वितीयमन्त्रे अश्विनाविति तृतीयमन्त्रे च शेषं सर्वमनुषज्य व्याख्येयम्।

अथ विनियोगसङ्ग्रहः,—

उपेति, प्रतिनिर्ग्राह्या ग्रहीतव्यास्त्रिभिः क्रमात्।
देवेभ्यो, निनयेच्छेषांस्त्रिभिरादित्यपात्रके॥
विष्णो, तत् पात्रमाच्छाद्य द्विदेवत्यग्रहानपि।
होत्रे दद्यात त्रिभिः, सूर्यमपतिष्ठेत भूर्द्वयात॥

यो न-, स्त्रिभिस्तर्जनीन्तामङ्गुष्ठेनोपपीडयेत्।
इन्द्रमित्राश्विभिर्भिन्ना मन्त्राः पञ्चदशात्र ते॥

त एते मन्त्रा ऋतुग्रहानुवाकात् पूर्वं द्रष्टव्याः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः॥०॥

---

प्र सो अ॑ग्ने तवो॒तिभिः॑ सु॒वीरा॑भिस्तरति॒ वाज॑कर्मभिः। यस्य॒ त्वꣳ स॒ख्यमावि॑थ[१]। प्र होत्रे॑ पू॒र्व्यं वचो॒ऽग्नये॑ भरता बृहत्। वि॒पां ज्योती॑ꣳषि॒ बिभ्र॑ते॒ न वे॒धसे॑[२]। अग्ने॒ त्री ते॒ वाजि॑ना॒ त्री ष॒धस्था॑ ति॒स्रस्ते॑ जि॒ह्वा ऋ॑तजात पू॒र्वीः। ति॒स्र उ॑ ते त॒नुवो॑ दे॒ववा॑ता॒स्ताभि॑र्नः पाहि॒ गिरो॒ अप्र॑युच्छन्[३]। सं वां॒ कर्म॑णा॒ समि॒षा॥ १॥

हि॒नोमी॑न्द्राविष्णू॒ अप॑सस्पा॒रे अ॒स्य। जु॒षेथां॑ य॒ज्ञं द्रवि॑णं च धत्त॒मरि॑ष्टैर्नः प॒थिभि॑ः पा॒रय॑न्ता[४]। उ॒भा जि॑ग्यथु॒र्न परा॑जयेथे॒ न परा॑जिग्ये कत॒रश्च॒नैनोः॑। इन्द्र॑श्च विष्णो॒ यदप॑स्पृधेथां त्रे॒धा स॒हस्रं॒ वि तदै॑रयेथाम्[५]। त्रीण्यायूꣳ॑षि॒ तव॑ जातवेदस्ति॒स्र आ॒जानी॑रु॒षस॑स्ते अग्ने। ता॒भिर्दे॒वाना॒मवो॑ यक्षि वि॒द्वान॑थ॥ २॥

भव॒ यज॑मानाय॒ शं योः[६]। अ॒ग्निस्त्रीणि॑ त्रि॒धात॑न्या-

क्षेति विद्था कविः। स त्रीꣳरेकादशाꣳ इह(७)। यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतः। नभन्तामन्यके समे(८)। इन्द्राविष्णू दृꣳहिताः शम्बरस्य नव पुरो नवतिञ्च श्रथिष्टं। शतं वर्चिनः सहस्रं च साकꣳ हथो अप्रत्यसुरस्य वीरान्(९)। उत मातामहिषमन्ववेनदमी त्वा जहति पुत्र देवाः। अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं विक्रमस्व(१०) ॥ ३ ॥

इषाऽयं त्वा त्रयोदश च ॥ ११ ॥

यो वै पवमानानां त्रीणि परिभूः स्फ्यः स्वस्तिर्भक्षेहि महीनां पयोसि देवसवितरेतत्ते श्येनाय यद्वै होतोपयामगृहीतोऽसि वाक्षसदसि प्र सो अग्न एकादश॥ ॥ ११ ॥

यो वै स्फ्यः स्वस्तिः स्वधायै नमः प्रमुञ्च तिष्ठतीव षट्चत्वारिꣳशत् ॥ ४६ ॥

हरिः ओम् ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

॥ * ॥ द्वितीयप्रपाठकः सम्पूर्णः ॥ * ॥

प्रतिनिर्ग्राह्यमन्त्रास्तु दशमे परिकीर्त्तिताः।

अथैकादशे त्रैधातवीयेष्टिविषया मन्त्रा उच्यन्ते। कल्पः, 'प्र वो अग्ने इत्युष्णिहककुभौ धाय्ये दधाति, अग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परिदधाति। सं वां कर्म्मणोभा जिग्यथुरिति याज्यानुवाक्ये, उत्तरे संयाज्ये' इति। धाय्ययोः प्रथमामाह, "प्र वो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः। यस्य त्वं सख्यमाविथ"(१) इति। हे 'अग्ने', 'यस्य' यजमानस्य 'त्वं सख्यमाविथ' सखिवत् स्नेहं पालितवानसि, 'स' यजमानः 'तवोतिभिः' 'पालनैः', प्रकर्षेण 'तरति', संसारक्लेशमतिवर्त्तते। कीदृशीभिरूतिभिः 'सुवीराभिः' शोभनपुत्राद्यपत्यहेतुभिः 'वाजकर्मभिः' अन्ननिमित्तानि कर्माणि उद्योगा यासामूतीनां ता वाजकर्माणः, ताभिः।

द्वितीयां धाय्यामाह, "प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत्। विपां ज्योतींषि बिभ्रते न वेधसे"(२) इति। हे ऋत्विजः, यूयमग्नये 'वचः' स्तुतिरूपं वाक्यं, प्रकर्षेण 'भरत' पोषयत। कीदृशं वचः 'पूर्व्यं' पूर्वैर्ऋषिभिः पठितं। 'बृहत्' प्रौढं। 'विपां' विशेषेणास्माकं पालकं। कीदृशायाग्नये 'होत्रे' होमनिष्पादकाय। 'वेधसे' अस्मद्धितस्य विधात्रे। अग्नेर्दृष्टान्तः, 'ज्योतींषि बिभ्रते न' इति; यथा रश्मिरूपाणि ज्योतींषि धारयित्रे सूर्याय स्तुतिः* तद्वदित्यर्थः।

अथ परिधानीयामाह, "अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः। तिस्र उ ते तन्वो देववाता-

---

* E पुस्तके स्तुतिं कुर्व्वन्ति इति पाठः।

स्ताभिर्नः पाहि गिरो अप्रयच्छन्''(१) इति। हे 'अग्ने', 'ते' तव 'त्री वाजिना', 'त्रयः पुरोडाशा भवन्ति' इति तस्यामिष्टौ विहितत्वात् त्रीण्यन्नानि, यद्वा सोमौषधिसान्नाय्यरूपाणि त्रीणि। तथा 'त्री षधस्था, सहस्थानानि त्रीणि परस्परयुक्तानि लोकत्रयरूपाणि, आहवनीयगार्हपत्यदक्षिणाग्निरूपाणि वा। हे 'ऋतजात', ऋतात् ज्ञानात्मनः* समुत्पन्न, 'ते' तव 'पूर्वीः' पूर्वसिद्धा 'जिह्वाः' 'तिस्रः' सात्त्विकराजसतामसरूपाः दृष्टप्राप्त्यनिष्टपरिहाराभिचारहेतवः। अपि च 'देववाताः' देवैर्वाताः प्राप्ताः 'ते' तव 'तनुवः' 'तिस्रः', 'ताभिः' तनूभिरग्निविद्युदादित्यरूपाभिः 'नः' अस्मान् 'पाहि'। किं कुर्वन्, 'गिरो अप्रयच्छन्' अस्मदीयाः स्तुतीरप्रमादयन्, अस्माभिः कृतप्रमादं परिहरन्नित्यर्थः।

अथ पुरोऽनुवाक्या, "सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य। जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता''(४) इति। हे 'इन्द्राविष्णू', 'वां' युवामनेन 'कर्मणा' 'सं' 'हिनोमि' सम्यक् प्रीणयामि, 'इषा' हविर्लक्षणेनान्नेन च 'सं' 'हिनोमि'। किं निमित्तमिति?-तदुच्यते, 'अस्य' 'अपसस्पारे', अनुष्ठीयमानस्य कर्मणः पारनिमित्तं, अविघ्नेन परिसमाप्त्यर्थं। किञ्चास्मदीयमिमं 'यज्ञं' 'जुषेथाम्', अस्मभ्यं च 'द्रविणं' सम्पादयतः। किं कुर्वन्तौ, 'अरिष्टैर्नः पथिभिः पारयन्ता', विनाशरहितैरनुष्ठानमार्गैरस्मान् कर्मणः पारं प्रापयन्तौ।

अथ याज्यामाह, "उभा जिग्यथुर्न पराजयेथे न पराजिग्ये

* ऋतात् सत्यात् परमात्मनः इति E पु० पाठः।

कतरश्च नैनोः। इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम्"(५) इति। हे 'विष्णो', 'इन्द्रश्च' त्वं च उभौ 'जिग्यथुः' जयं प्राप्तवन्तौ, 'न पराजयेथे', कदापि पराजयं न प्राप्नुथः। 'एनोः' अनयोर्मध्ये 'कतरश्चन' अन्यतरोऽपि 'न' 'पराजिग्ये' पराजयं न प्राप्तवान्। 'यत्' यदा युवामुभौ 'अपस्पृधेथां' स्पर्धां कुर्यातां, त्वं 'तत्' तदा 'सहस्रं' दक्षिणारूपेण दातव्यं गोसहस्रं, 'त्रेधा' विभज्य 'ऐरयेथां, नीतवन्तौ। अयञ्च विभागः सप्तमकाण्डे स्पष्टमाम्नातः।

अथ स्विष्टकृतः पुरोनुवाक्यारूपां संयाज्यामाह, "त्रीण्यायूंषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ताभिर्देवानामवो यक्षि विद्वानथ भव यजमानाय शं योः"(६) इति। हे 'जातवेदः', 'तव' 'आयूंषि' आयुर्वृद्धिकारणानि हवींषि सोमसान्नाय्यपुरोडाशरूपेण 'त्रीणि'। हे 'अग्ने', 'ते' तव 'उषसः' उषःकालसदृश्यः, 'आजानीः' आविर्भावरूपा ज्वालाः 'तिस्रः' आहवनीयादिषु त्रिविधाः, 'ताभिः' ज्वालाभिः 'देवानाम्' 'अवो' रक्षकं हविः 'विद्वान्' 'यक्षि' यज। 'अथ' अनन्तरं 'यजमानाय' शम्भव सुखप्रदो भव। 'योः' 'भव' दुःखवियोजको भव।

अथ स्विष्टकृतो याज्यारूपां संयाज्यामाह, "अग्निस्त्रीणि त्रिधातून्याक्षेति विदथा कविः। स त्रीं एकादशां इह"(७) इति। 'कविः' विद्वानयमग्निः, 'वित्', 'अथ' एषु यज्ञेषु 'त्रीणि' हवींषि 'आक्षेति' सर्वतः प्राप्नोति, 'त्रयः पुरोडाशा भवन्ति' इत्युक्तत्वात् हविषां त्रित्वं। कीदृशानि त्रीणि हवींषि, त्रिधातूनि,

'उत्तरोत्तरो ज्यायान् भवति' इत्युक्तत्वात् त्रिप्रकाराणि। 'सः' अग्निः 'इह' अस्मिन् कर्मणि 'एकादशभिर्देवैरुपेतान् 'त्रीन्' गणान् तर्पयत्विति शेषः। 'ये देवा दिव्येकादश स्थ' इत्यनुवाके गणत्रयं विस्पष्टमाम्नातम्।

अथ तत्रैव विकल्पितरूपां संयाज्यामाह, "यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतः। नभन्तामन्यके समे"(८) इति। 'अग्निर्देवानां दूत आसीत्' इत्युक्तत्वात् दूतरूपोऽयमग्निः 'यक्षच्च' देवान् यजतु च। ब्राह्मणजात्यभिमानित्वादिप्ररूपोऽयमग्निः 'नो' अस्मान् 'पिप्रयच्च' प्रीणयतु च। कीदृशोऽग्निः, 'परिष्कृतः' दूतत्वचिह्नैरलङ्कृतः। अन्यशब्दः शत्रुवाची, कप्रत्ययः कुत्सितार्थे, समशब्दः सर्वशब्दपर्यायः। 'अन्यके समे' अस्मत्तोऽन्ये कुत्सिताः शत्रवः सर्वेऽपि 'नभन्तां' नश्यन्तु।

अथ प्रधानहविषो विकल्पितां पुरोऽनुवाक्यामाह, "इन्द्राविष्णू दृꣳहिताः शम्बरस्य नव पुरो नवतिञ्च श्नथिष्टं। शतं वर्चिनः सहस्रं च साकꣳ हथो अप्रत्यसुरस्य वीरान्"(९) इति। हे 'इन्द्राविष्णू', शम्बरनामकस्यासुरस्य सम्बन्धिन्यः 'पुरो' नगरीः 'श्नथिष्टं' युवां नाशितवन्तौ। कियतीर्नगरीः, 'नव नवतिञ्च', एकोनशतसङ्ख्यका इत्यर्थः। कीदृशीः, 'दृꣳहिताः' दृढाः। किञ्च 'असुरस्य' सम्बन्धिनो 'वर्चिनो' दीप्तिमतः 'शतं सहस्रं च' 'वीरान्' प्रधानभूतामात्यादीन्, 'अप्रति' पत्तराहित्यं यथा भवति तथा 'साकं हथः'।

अथ तत्रैव विकल्पितां याज्यामाह, "उत माता महिषमन्व·

वेनदमी त्वा जहति पुत्र देवाः। अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं विक्रमस्व"(१०) इति। 'उत माता' इन्द्रस्य देवस्य माता 'महिषं' महान्तमिन्द्रं 'अन्ववेनत्' अनुक्रमेणानुज्ञापितवतीत्यर्थः। कथं ज्ञापितवतीति?-तदुच्यते, हे 'पुत्र' इन्द्र, त्वयि शत्रून् हत्वा तूष्णींस्थिते सति सर्वेऽपि 'अमी' 'देवाः' त्वां 'जहति' परित्यजन्तीति। अथ मातृबोधनादूर्ध्वं 'इन्द्रो' 'वृत्रं' 'हनिष्यन्' बधोद्युक्तो विष्णुं प्रति एतदब्रवीत्, हे 'सखे विष्णो', 'वितरं विक्रमस्व' विशिष्टतरं पराक्रमं कुरु, शीघ्रं वृत्रं जहीति। तथाविधौ हे इन्द्राविष्णू, अस्मदभीष्टं सम्पादयतमिति तात्पर्यार्थः।

अथ विनियोगसङ्ग्रहः,—

प्र सो, त्रैधातवीयेष्टौ द्वे धाय्ये; अग्न, इत्यमौ।
तत्रैव परिधानीया; ह्यनुवाक्या समित्यमौ॥
उभेति, याज्या; त्रोणीति, संयाज्यास्तिस्र ईरिताः।
इन्द्रा,ऽनुवाक्योत, याज्या; दश मन्त्रा इहोदिताः॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः॥०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये तृतीयकाण्डे द्वितीयप्रपाठकः सम्पूर्णः॥०॥

॥ हरिः ॐ ॥



# अथ तैत्तिरीयसंहिताभाष्ये

## तृतीयकाण्डे तृतीयप्रपाठके

### प्रथमोऽनुवाकः



अग्ने तेजस्विन् तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु दीक्षायै च त्वा तपसश्च तेजसे जुहोमि[१] तेजोविदसि तेजो मा मा हासीन्माहं तेजो हासिषं मा मां तेजो हासीत्[२] इन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मा मायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ब्रह्मणश्च त्वा क्षत्रस्य च ॥ १ ॥

ओजसे जुहोम्योजोविदस्योजो मा मा हासीन्माहमोजो हासिषं मा मामोजो हासीत्[३] सूर्य भ्राजस्विन् भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मा मायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु वायोश्च त्वाऽपां च भ्राजसे जुहोमि सुवर्विदसि सुवर्मा मा हासीन्माहꣳ सुवर्हासिषं मा माꣳ

सुवर्हासीत्[६] मयि, मेधां मयि प्रजां मय्यग्निस्तेजो दधातु[७] मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु[८] मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु[९] ॥२॥

क्षत्रस्य च । मयि । त्रयोविꣳशतिश्च ॥ १ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥०॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रतिनिर्ग्राह्यपर्यन्ताः पवमानग्रहादयः ।
प्रपाठके द्वितीये तु मन्त्रयुक्ताः प्रपञ्चिताः ॥
अथावशिष्टा मन्त्राद्यास्तृतीयेऽस्मिन् प्रपाठके ।
उच्यन्ते वैकृताश्चान्ये समन्त्रा विधयः क्रमात् ॥

कल्पः, 'सहैवाध्वर्युणा आग्नेयं प्रतिप्रस्थाता दत्ते, ऐन्द्रं नेष्टा, सौर्यमुन्नेता, अग्ने तेजस्विन्नित्याग्नेयं प्रतिप्रस्थाता हुत्वा, तेजोविदसीत्यनुमन्त्रयते' इति। तत्र होममन्त्रपाठस्तु, "अग्ने तेजस्विन् तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु दीक्षायै च त्वा तपसश्च तेजसे जुहोमि"[१] इति। 'तेजः' कान्तिः, 'वर्चो' बलम । दीक्षायास्तपसश्च सम्बन्धि तेजः, तल्लाभार्थं

हे आग्नेयातिग्राह्य, त्वां 'जुहोमि'। अनेन होमेन दीक्षानियमारूपस्य निर्विघ्नेन सिध्यन्तु इत्ययमभिप्रायः।

अनुमन्त्रणमन्त्रपाठस्तु, "तेजोविदसि तेजो मा मा हासीन्माहं तेजो हासिषं मा मां तेजो हासीत्"(२) इति। हे अग्ने, त्वं तेजोऽभिज्ञो'ऽसि', अतस्त्वत्प्रसादात् 'तेजो' मां 'मा' परित्यजतु। 'अहम्' अपि तेजो न परित्यक्तवानस्मि, तस्मात् सर्वथा 'तेजो' 'मां' 'मा' परित्यजतु।

कल्पः, 'इन्द्रौजस्विन्नित्यैन्द्रं नेष्टा हुत्वौजोविदसीत्यनुमन्त्रयते' इति। पाठस्तु "इन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ब्रह्मणश्च त्वा क्षत्रस्य चौजसे जुहोमि(३) ओजोविदस्योजो मा मा हासीन्माहमोजो हासिषं मा मामोजो हासीत्"(४) इति। बलहेतुरष्टमो धातुरोजः, हे इन्द्रातिग्राह्य, ब्राह्मणजातेः क्षत्रियजातेश्च सम्बन्धि यत् 'ओजो' बलकारणं, तदर्थं त्वां 'जुहोमि'।

कल्पः, 'सूर्य भ्राजस्विन्निति सौर्यमुन्नेता हुत्वा सुवर्विदसीत्यनुमन्त्रयते' इति। पाठस्तु, "सूर्य भ्राजस्विन् भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु वायोश्च त्वाऽपाञ्च भ्राजसे जुहोमि(५) सुवर्विदसि सुवर्मा मा हासीन्माहᳫं सुवर्हासिषं मा माᳫं सुवर्हासीत्"(६) इति। शरीरकान्तेर्बहिर्भूता रश्मिरूपा दीप्तिर्भ्राजः। हे सौर्यातिग्राह्य, 'वायोः' 'अपाञ्च' सम्बन्धि यत् भ्राजस्तदर्थं त्वां 'जुहोमि'। हे सूर्य, त्वं 'सुवर्विदसि' स्वर्गमार्गाभिज्ञो'ऽसि'।

कल्पः, 'तान् हुत्वा सदसि प्रत्यङ्मुखा भक्षयन्ति मयि मेधामि-त्येतैः स्वं स्वं यथालिङ्गम्' इति। पाठस्तु, "मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु,(७) मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु(८) मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु"(९) इति। मन्त्रतदर्थयोर्धारणसामर्थ्यं 'मेधा'॥

अत्र विनियोगसंग्रहः,—

अग्ने,ऽतिग्राह्यमाग्नेयं हुत्वा, तेज, उपस्थितिः।
तथैन्द्रसौर्ययोर्भक्षेत् मयीति त्रीन्, नवोदिता इति॥

अत्र मीमांसा। दशमाध्यायस्याष्टमपादे (११अ०) चिन्तितम्,

"नातिदेशोऽतिदेशो वा वह्न्यतिग्राह्ययोर्न सः।
विकृतौ पुनरुक्तत्वादेषोऽङ्गान्तरवद्भवेत्॥
प्रकृतेर्विकृतीनाञ्च साम्याय स्यात्पुनर्वचः।
साम्ये च गुणकामानां प्रवृत्तिः प्रकृताविव" इति॥

अनारभ्य श्रूयते, 'य एवं विद्वानग्निं चिनुते' इति। 'उप-स्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः' इति। अतिग्राह्यसंज्ञका ग्रहा यज्ञस्योपष्टम्भकत्वादनुष्ठेया इत्यर्थः। अत्र चीयमानस्याग्नेरतिग्राह्याणां च विकृतिष्वतिदेशो नास्ति। कुतः?। पुनरुक्तिवैयर्थ्यप्रसङ्गात्, विकृतौ हि एवं पुनरुच्यते, 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण तं त्रिरात्रेण' इत्यादि। अयमर्थः, इष्टकाचितमग्निमनु तस्मिंश्चितेऽग्नावग्निष्टोमाद्यनुष्ठानमिति। तथा, अग्निष्टोमः प्रकृतिः, उक्थ्यादयो विकृतयः, यदि विकृतिषु

चोदकस्थितमग्निमतिदिशेत्, तदानीमुक्थ्यादिषु चोदकादेव तत्प्राप्तेः पुनर्विधानमनर्थकं स्यात् । अतिग्राह्यास्च विकृतिषु पुनर्विधीयन्ते, 'पृष्ठे गृह्णीयात्' इति । तस्मात् पुनर्विधानार्थवत्त्वाय विकृतावग्न्यतिग्राह्यातिदेशो नास्ति ।

इति प्राप्ते ब्रूमः, ऐन्द्रवायवादिग्रहादीनामङ्गान्तराणाम् उक्थ्यादिविकृतिषु यथा अतिदेशोऽभ्युपगतस्तथा अग्निचयनस्यातिग्राह्याणां चातिदेशः स्यात् । नहि अखण्डः सकृत् प्रवृत्तश्चोदकः कानिचिदङ्गानि अतिदिश्येत इतराण्युपेक्षेत, इति युक्तम् । अतिदेशप्राप्तानामपि पुनर्विधानं प्रकृतिविकृतिसाम्यार्थम् । यथा प्रकृतौ अग्न्यतिग्राह्ययोः प्रत्यक्षविधिस्तथा विकृतिष्वपीति तत्साम्यम् । नच साम्येन प्रयोजनाभावः, गुणकामप्रवृत्तेस्तत्प्रयोजनत्वात् । 'श्येनचितिं चिन्वीत स्वर्गकामः' इत्यादिना श्येनाकारादिगुणफलभूत*-स्वर्गादिकामाः श्रुताः, ते चोपदिष्टमाश्रयमपेक्षन्ते । तस्मात् 'अथातोऽग्निम्' इति वाक्येन प्रकृतावग्निष्टोमे कासुचिदुक्थ्यादिविकृतिषु च अग्निचयनलक्षण आश्रय उपदिश्यते । अन्यासु तु वाजपेयादिविकृतिषु उद्दिष्टस्याश्रयस्याभावादतिदिष्टस्य चानाश्रयत्वाद्गुणकामानां नास्ति प्रवृत्तिः । तस्मात् पुनर्विधानवैयर्थ्याभावादस्तु अतिदेशः" (न्या० मा०) ।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

---

* कारणादिगुणफलभूत इति न्यायमालायां पाठः ।

वायुर्हि कर्ताग्निः प्रस्तोता प्रजापतिः साम बृह-स्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणं मयि दधतु(१) एतद्वै सर्वमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोति ते देवाः प्राणभृतः प्राणं मयि दधत्वित्याहैतदेव सर्व-मात्मन्धत्त(२)* इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थाम-दानि शꣳसिषद्विश्वे देवाः॥ १॥

सूक्तवाचः पृथिवि मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ† शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु(३)॥ २॥

शꣳसिषत्। विश्वे देवाः। अष्टाविꣳशतिश्च॥ २॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीय-प्रपाठके द्वितीयोऽनुवाकः॥०॥

अतिग्राह्यगता मन्त्राः प्रथमे समुदीरिताः।

अथ द्वितीये स्तोत्रोपाकरणप्रतिगराङ्गमन्त्रा उच्यन्ते।

कल्पः, 'अथाध्वर्युस्तोत्रमुपाकरोति वायुर्हि कर्त्तेति प्रस्तोत्रे बर्हिर्मुष्टिं प्रयच्छति सर्वेषु पवमानेष्वेवमुपाकरणे' इति। पाठस्तु,

---

* विनियोगरूपोऽयं न मन्त्रः। † इद्यासꣳ इति D पु० पाठः।

"वायुर्हिङ्कर्त्ताग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्त्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणं मयि दधतु"(१) इति। गातव्यस्य साम्नः पञ्च भागाः, हिङ्कारः, प्रस्तावः, उद्गीथः, प्रतिहारो, निधनञ्चेति। तत्र हिङ्कारनिधनरूपावाद्यन्तौ भागौ सर्वैः पठनीयौ; द्वितीयं प्रस्तावभागं प्रस्तोता गायति; तृतीयमुद्गीथभागमुद्गाता गायति, चतुर्थं प्रतिहारभागं प्रतिहर्त्ता गायति। एतेषु गायत्सु सर्वेऽप्यृत्विजोऽध्वर्युव्यतिरिक्ता 'ओम्' इत्युपगायन्ति। यजमानस्तु'हो' इत्युपगायति। त एते सर्वे वाय्वादिदेवतारूपेण मन्त्रेण प्रतिपाद्यन्ते। सर्वदेवताजनकस्य प्रजापतेः समष्टिरूपत्वेन कृत्स्नसामरूपत्वम्। वाय्वादीनां प्रजापत्येकदेशत्वेन सामैकदेशहिङ्कारादिकर्तृत्वम्। त एते वाय्वादय इन्द्रान्ताः देवाः प्राणपोषकाः, तस्मात् 'प्राणं' मयि स्थापयन्तु।

तमेतं मन्त्रं विनियुङ्क्ते, "एतद्वै सर्वमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोति देवाः प्राणभृतः प्राणं मयि दधत्वित्याहैतदेव सर्वमात्मन्धत्ते" (२)इति। यदा अध्वर्युः 'उद्गातृभ्य उपाकरोति', स्तोत्रपाठानुज्ञां प्रयच्छति, तदानीम् 'एतत्' एव वाय्वादिरूपहिङ्कर्तृत्वादिकं 'सर्वम्' 'उपाकरोति', अभ्यनुजानाति। तस्माद्वायुरित्यादिमन्त्रेण बर्हिर्मुष्टिप्रदानरूपमुपाकरणं कुर्यादिति तात्पर्यार्थः। तस्मिन् मन्त्रे, ते देवा इति भागमध्वर्युः ब्रूयात्। तेन 'एतदेव' वाय्वादिरूपं हिङ्कर्तृत्वादिकं 'सर्वम्' आत्मनि स्थापितवान् भवति।

कल्पः, 'अध्वर्युः सदो बिले प्राङ्मुख उपविश्य इडा देवहूरिति शस्त्रं प्रतिगरिष्यन् जपति' इति। पाठस्तु, "इडा देवहूर्मनुर्यज्ञनी-

बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वे देवाः सूक्तवाचः पृथिवि मा-तर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदि-ष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु"(२) इति। येयम् 'इडा' देवगोरूपा, सेयमत्र 'देवहूः' देवानामाह्वयित्री, यस्तु 'मनुः' सोऽत्र 'यज्ञनीः' यज्ञप्रवर्त्तकः, यश्च 'बृहस्पतिः' सोऽयम् 'उक्था-मदानि' 'शंसिषत्' शंसति, उक्थैः शस्त्रैर्जायमानो मदो हर्षो येषु मन्त्रवाक्येषु, तानि वाक्यानि 'उक्थामदानि'। ये 'विश्वे देवाः', तेऽत्र 'सूक्तवाचः', सूक्तानां वक्तारः। हे मातृरूपे 'पृथिवि', यथोक्तानामिडादिदेवानामनुग्रहादपराधरहितं 'मां' 'मा' त्वं 'हिंसीः', त्वदनुग्रहादहं 'मधु मनिष्ये', मधुवत्प्रियमेव कार्यं मनसा चिन्तयिष्यामि। तथा 'मधु जनिष्ये', मधुवत्प्रियं कर्मफलमुत्पादयिष्यामि। तथा 'मधु वक्ष्यामि', मधुवत्प्रियस्य हविषो देवान् प्रति वहनं करिष्यामि। तथा 'मधु वदिष्यामि', मधुवत्प्रियं प्रतिगररूपं वाक्यमुच्चारयिष्यामि। तथा प्रतिगरात् 'शंसा मोद इव' इति एतादृशादूर्ध्वंशस्त्रान्ते 'वाचम्' 'उक्थशा' इत्यादिरूपाम् 'उद्यासं', सवनत्रये कथयामि। कीदृशीं वाचं?—'देवेभ्यो मधुमतीं', देवानां मधुवत्प्रियाम्। 'मनुष्येभ्यः' 'शुश्रूषेण्यां', मनुष्ये-र्होत्रादिभिः श्रोतुमिष्यमाणाम्। 'तं' तादृशीं वाचं ब्रुवाणं मां, 'शोभायै', वाचि प्रमादाभावरूपशोभार्थं, 'देवा अवन्तु', पूर्वोक्ता इडादयः सर्वेऽपि पालयन्तु। 'पितरः' च 'अनुमदन्तु', समीचीनेयं वागित्युपलापयन्तु॥

अत्र विनियोगसंग्रहः,—

वायुः, स्तोत्रमुपाकुर्यात्, शस्त्रं प्रतिगरिष्यता।
जपितव्य इडामन्त्रो, द्वौ मन्त्राविह कीर्तितौ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः॥ ०॥

---

वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसाग्नेः प्रियं पाथ उपेहि(१) रुद्रास्त्वा प्रवृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेहि(२) आदित्यास्त्वा प्रवृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि(३) मान्दासु ते शुक्र शुक्रमाधूनोमि(४) भन्दनासु(५) कोतनासु(६) नूतनासु(७) रेशीषु(८) मेषीषु(९) वाशीषु(१०) विश्वभृत्सु(११) माध्वीषु(१२) ककुहासु(१३) शक्करीषु(१४)॥ १॥

शुक्रासु ते शुक्र शुक्रमाधूनोमि(१५) शुक्रन्ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः(१६)। आऽस्मिन्नुग्रा

अचुच्यवुर्दिवो धारा असश्चत[१७]। ककुहꣳते रूपं वृष-
भस्य रोचते बृहत्सोमः सोमस्य पुरोगाः शुक्रः शु-
क्रस्य पुरोगाः[१८]। यत्ते सोमादाभ्यं नाम जागृवि तस्मै
ते सोम सोमाय स्वाहा[१९] उशिक्त्वं देव सोम
गायत्रेण छन्दसाऽग्नेः ॥ २ ॥

प्रियं पाथो अपीहि[२०] वशी त्वं देव सोम त्रैष्टुभेन
छन्दसेन्द्रस्य प्रियं पाथो अपीहि[२१] अस्मत्सखा त्वं देव
सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो
अपीहि[२२] आ नः प्राण एतु परावत आऽन्तरिक्षाद्दिव-
स्परि। आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा[२३]
इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः। वर्चो मे
विश्वे देवा वर्चो मे धत्तमश्विना[२४]। दधन्वे वा यदी-
मनु वोचद्ब्रह्माणि वेरु तत्। परि विश्वानि काव्या
नेमिश्चक्रमिवाभवत्[२५] ॥ ३ ॥

शक्करीषु। अग्नेः। बृहस्पतिः। पञ्चविꣳशतिश्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीय-
प्रपाठके तृतीयोऽनुवाकः ॥ ० ॥

उपाकृतिः प्रतिगर-जपश्लोकौ द्वितीयके।

अथ तृतीयानुवाके द्वौ अदाभ्यांशू ग्रहौ प्रति अपेक्षिता मन्त्रा उच्यन्ते। कल्पः, 'उपनद्धस्य राज्ञस्त्रीनंशून् प्रवृहति वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रम्' इति। पाठस्तु, "वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसाऽग्नेः प्रियम्पाथ उपेहि(१) रुद्रास्त्वा प्रवृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियम्पाथ उपेहि,(२) आदित्यास्त्वा प्रवृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियम्पाथ उपेहि(३)" इति। हे सोमांशो, वसुनामका देवास्त्वां 'प्रवृहन्तु', वाससा बद्धात् सोमलतासमूहात् प्रकर्षेण पृथक् कुर्वन्तु। केन साधनेन ?-'गायत्रेण च्छन्दसा', तव कर्षणे च्छन्दः साधनं। तथाविधस्त्वं 'अग्नेः प्रियं' 'पाथः' अन्नभावम्, 'उपेहि'। एवं द्वितीयतृतीयमन्त्रौ योज्यौ।

कल्पः, तैरेनञ्चतुराधूनोति पञ्चकृत्वः सप्तकृत्वो वा मान्दासु ते शुक्रेतान् प्रतिविभज्य' इति। पाठस्तु, "मान्दासु ते शुक्र शुक्रमाधूनोमि(४) भन्दनासु(५) कोतनासु(६) नूतनासु(७) रेशीषु(८) मेषीषु(९) वाशीषु(१०) विश्वभृत्सु(११) माध्वीषु(१२) ककुहासु(१३) शक्करीषु(१४) शुक्रासु ते शुक्र शुक्रमाधूनोमि"(१५) इति। अत्र होतृचमसे वसतीवरीनामिकाभ्योऽद्भ्यः सकाशात् कियदप्युदकं निषिच्य तैः पूर्वोक्तैस्त्रिभिः सोमांशुभिरेनं होतृचमसं 'मान्दासु' इत्यादिमन्त्रैः 'आधूनोति', चमसस्थमुदकं प्रकम्पयेदित्यर्थः। 'मान्दासु' इत्यादीनि सप्तम्यन्तानि द्वादशपदानि अपां गोप्यानि नामानि। 'ते शुक्र शुक्रमाधूनोमि' इत्येतावान् द्वादशस्वपि पदेषु अनुषज्यते। अनुषङ्गद्योतनायैव आदावन्ते च द्विःपाठः। मन्दगतय आपो 'मान्दाः'।

हे 'शुक्र', दीप्यमानसोम, 'ते' तव सम्बन्धि 'शुक्रं', दीप्यमानं सारं, 'मान्दासु' अप्सु 'आधूनोमि', सर्वतः कम्पयामि। एवमुत्तरत्रापि योज्यम्। 'भन्दनासु' भद्रासु कल्याणकारिणीषु। 'कोतनासु', ज्ञानकारिणीषु। 'नूतनासु' अभिनवासु। 'रेशीषु' शीघ्रगमनेन भुवोऽहिंसिकासु। 'मेषीषु' स्पर्धमानासु। 'वाशीषु' शब्दवतीषु। 'विश्वभृत्सु' विश्वस्य धारिकासु। 'माध्वीषु' मधुररसवतीषु। 'ककुहासु' ककुत्सदृशीषु प्रधानभूतासु। 'शक्वरीषु' शक्तिमतीषु। 'शुक्रासु' दीप्यमानासु। तान् एतान् द्वादश मन्त्राननुषङ्गेन सह प्रतिविभज्य चतुःपञ्चकृत्वः सप्तकृत्वो वा द्वादशमन्त्रैराधावनं कुर्यात्।

कल्पः, 'अंशुमदाभ्यं वा प्रथमं गृह्णाति शुक्रन्ते शुक्रेण गृह्णामीति दध्नः पयसो निर्ग्राह्याणां वा' इति। पाठस्तु। "शुक्रन्ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः"(१६) इति। हे दधिद्रव्य, 'ते' 'शुक्रं' तव सारं, 'शुक्रेण' सोमादिरूपेण सारेण, सह 'गृह्णामि'। केन साधनेन? इति, तदुच्यते, ये 'सूर्यस्य' रश्मयः 'अह्नो' रूपं, रसाख्येन तेन रूपेण।

कल्पः, 'आऽस्मिन्नुग्रा अचुच्यवुरित्यादाय' इति। पाठस्तु, "आस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत(१७)" इति। 'अस्मिन्' पात्रे 'उग्राः' 'धाराः' तीव्राः सोमरसधाराः 'आ' 'चुच्यवुः' आगत्य पतिताः। किञ्च पतितास्ता धाराः 'असश्चत' पात्रे सङ्गताः।

कल्पः, 'ककुहꣳ रूपमिति हरति' इति। पाठस्तु, "ककुहꣳ रूपं वृषभस्य रोचते बृहत्सोमः सोमस्य पुरोगा शुक्रः शुक्रस्य पुरोगाः"(१८) इति। 'वृषभस्य' वर्षयितुरिन्द्रस्य, 'ककुहं', ककुद्वत्

प्रधानभूतं रूपं वृष्टिलक्षणं स्वरूपं, 'रोचते' शोभते, तत्र 'बृहत्' प्रौढ़ं, अयं 'सोमो' वल्लीरूपः, राजरूपस्य 'सोमस्य' देवस्य 'पुरोगाः', प्रथमगामी, 'शुक्रो' दीप्यमानो रसः, 'शुक्रस्य' दीप्यमानस्येन्द्रस्य, 'पुरोगाः' ।

कल्पः, 'यत्ते सोमादाभ्यं नाम जागृवीति जुहोति' इति । पाठस्तु, "यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा(१९) इति । हे 'सोम', 'ते' 'यत्' 'नाम' 'अदाभ्यं' केनाप्यतिरस्करणीयं, 'जागृवि' सदा जागरणशीलं, हे 'सोम' 'तस्मै' 'सोमाय' सोमनाम्ने, 'ते' त्वदीयाय, 'स्वाहा' हुतमिदमस्तु ।

कल्पः, 'आधवनानंशून् प्रज्ञातान्निधायोशिक्त्वन्देव सोम गायत्रेण च्छन्दसेत्येतैः प्रतिमन्त्रमनुसवनमेकैकं महाभिषवेष्वपि सृजति' इति । पाठस्तु, "उशिक्त्वन्देव सोम गायत्रेण च्छन्दसाऽग्नेः प्रियं पाथो अपीहि(२०) वशी त्वं देव सोम त्रैष्टुभेन च्छन्दसेन्द्रस्य प्रियं पाथो अपीहि(२१) अस्मत्सखा त्वन्देव सोम जागतेन च्छन्दसा विश्वेषां देवानां प्रियं पाथो अपीहि(२२)" इति । हे 'सोम', 'देव', 'त्वम्' 'उशिक्' कमनीयस्तथाविधप्रथमांशुरूपस्त्वं, अग्नेः 'प्रियं' 'पाथो'ऽन्नभावं, यथा प्रतिपद्यसे, तथा 'गायत्रेण च्छन्दसा', सोमसमूहात् पृथक्कृतः इदानीम् 'अपीहि' पुनरपि सोमसमूहङ्गच्छ । एवं द्वितीयतृतीयांशुविषययोरुत्तरमन्त्रयोर्योजनीयम् । सर्वेषां प्राणिनां वशोऽस्यास्तीति 'वशी' द्वितीयोऽंशुः । अस्मासु सखिवत्प्रीतिमत्त्वात् 'अस्मत्सखा' तृतीयोऽंशुः ।

कल्पः, 'अंशुं गृह्णन्नेकग्रहायाप्तं राजानमुपरे न्युप्य* सकृदभि-

---

* उपरेन्युप इति E पु० पाठः । अत्र पाठसन्देहोऽस्ति ।

षुत्य वामदेव्यं मनसा गायमानो नवानं गृह्णाति यदि व्यनेदानः प्राण एतु परावत इति शतमानं हिरण्यमभिव्यनेयातामध्वर्युर्यज-मानश्च' इति। पाठस्तु, "आ नः. प्राण एतु परावत आऽन्तरिक्षा-द्दिवस्परि। आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा"(२३) इति। 'परावतो' दूरदेशात्, 'प्राणो' अस्मान् प्रति 'एतु' आगच्छतु। 'अ-न्तरिक्षात्' अप्यागच्छतु। 'दिवस्परि' स्वर्गस्योपरिस्थितोऽप्यागच्छतु। हे हिरण्य, 'पृथिव्या' 'अधि' उपरि, त्वम् 'आयुः' 'अमृतम्' 'असि'। आयुर्हेतुरमृतत्वहेतुश्चासि। तादृशं त्वां 'प्राणाय' प्राणस्थितये एवं क्षिपामीति शेषः।

कल्पः, 'इन्द्राग्नी इत्युदकमुपस्पृश्य' इति। पाठस्तु, "इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः। वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना(२४) इति। यावेतौ 'इन्द्राग्नी', तौ 'मे' 'वर्चः कृणुतां' बलं कुरुतां। तथा 'सोमः' 'बृहस्पतिः' च उभौ 'वर्चः' कुरुताम्। 'विश्वे देवाः' च 'मे वर्चः' कुर्वन्तु। हे अश्विनौ, मे वर्चो 'धत्तं' सम्पादयतम्।

कल्पः, 'दधन्वे वा यदीमित्यनिरुक्तया प्राजापत्यया प्राण्या-ऽपान्या नवानं जुहोति' इति। पाठस्तु, "दधन्वे वा यदीमनुवोचद्ब्र-ह्माणि वेरु तत्। परि विश्वानि काव्या नेमिश्चक्रमिवाभवत्(२५) इति। 'वेः' वेतव्यस्य गन्तव्यस्य यज्ञस्य सम्बन्धीनि, 'ब्रह्माणि' परिवृढ़ानि, दीक्षादीन्यङ्गानि, 'अनुवोचत्' अनुक्रमेण वेदो वक्ति, 'यत्' 'ईम्', इत्येतादृशं यदस्ति, 'तत्' 'उ' 'दधन्वे' तदप्यहं मनसि धारयामि, वेदोक्तं किमपि न विस्मरामीत्यर्थः। 'काव्या' काव्यसदृशानि वि-

स्पष्टमनभिहितानि, 'विश्वानि' सर्वाण्यङ्गानि, 'परि' 'अभवत्' अयं यज्ञः परितो व्याप्तवान्। व्याप्तौ दृष्टान्तः, 'नेमिश्चक्रमिव' इति। यथा रथस्य 'चक्रं' कृत्स्नं परितो नेमिर्व्याप्नोति तद्वत्। अत्र देवताविशेषस्य कस्यचिदपि विस्पष्टमप्रतीतत्वादियमनिरुक्ता प्राजापत्या। ततः प्रजापतये जुहोमीति तात्पर्यार्थः॥

अत्र विनियोगसंग्रहः,—

वस-त्रिभिर्ग्रहीतव्या नद्युसोमांशवस्त्रयः।
मान्द्रा, द्वादशमन्त्रास्तेष्वमष्ट्या अपोऽम्बुभिः।
आधूनोत्यथ शुक्रन्ते दाभ्यपात्रे दधिग्रहः।
अस्मिन्नदाभ्यमाधत्ते, कत्रुवं सोऽपनीयते॥
यत्ते जुहोत्युशिक् प्रोक्तानंशूनभिषवत्त्वये।
त्रिभिः संसृजते, ह्या नः स्वर्णोपरि समुच्छ्रयेत्॥
इन्द्रा, स्पृष्टोदकं, होमो दधन्वे, पञ्चविंशतिः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः॥ ०॥

---

एतद्वा अपां नामधेयं गुह्यं यदाधावा मान्दासु ते शुक्र शुक्रमाधूनोमीत्याहापामेव नामधेयेन गुह्येन दिवो वृष्टिमवरुन्धे शुक्रन्ते शुक्रेण गृह्णामीत्याहे-

तद्वा अग्नौ रूपं यद्वाचिः सूर्यस्य रश्मयो वृष्ट्या ईशते ऽग्न एव रूपेण सूर्यस्य रश्मिभिर्दिवो वृष्टिं च्यावयति(२) आऽस्मिन्नुग्राः ॥ १ ॥

ऋचुच्यावुरित्याह यथा यजुरेवैतत्(३) ककुहꣳ रूपं वृषभस्य रोचते बृहदित्याहैतद्वा अस्य ककुहꣳ रूपं यद्वृष्टी रूपेणैव वृष्टिमवरुन्धे(४) यत्ते सोमादाभ्यं नाम जागृवीत्याहैष ह वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति(५) परा वा एतस्यायुः प्राण एति ॥ २ ॥

योऽꣳशुं गृह्णात्या नः प्राण एतु परावत इत्याहायुरेव प्राणमात्मन्धत्ते(६) ऽमृतमसि प्राणाय त्वेति हिरण्यमभिव्यनित्यमृतं वै हिरण्यमायुः प्राणोऽमृतेनैवायुरात्मन्धत्ते(७) शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति(८) अप उपस्पृशति भेषजं वा आपो, भेषजमेव कुरुते ॥ ३ ॥

उग्रा। एति। आपः। त्रीणि च ॥ ४ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

अदाभ्यांशुग्रहार्थास्तु मन्त्राः प्रोक्तास्तृतीयके।

अथ चतुर्थे तेषां ब्राह्मणमुच्यते। तत्र मान्दास्वित्यादि-मन्त्राणां तात्पर्यं दर्शयति, "एतद्वा अपां नामधेयं गुह्यं यदा-धावा मान्दासु ते शुक्र शुक्रमाधूनोमीत्याहापामेव नामधेयेन गुह्येन दिवो वृष्टिमवरुन्धे(१)" इति। 'एतत्' एव 'मान्दा' इत्यादि-पदजातम् 'अपां' गोप्यं 'नामधेयं'; लोके प्रसिद्ध्यभावाद्वैदिकमन्त्र एव प्रतीयमानतया गोप्यत्वम्। आधूयन्ते सर्वतः कम्प्यन्ते आपो यैर्मा-न्दादिभिर्मन्त्रैस्ते मन्त्राः 'आधावाः', त एते* आधावा इति 'यत्' एतदेव गुह्यं नामेति पूर्वत्रान्वयः। तस्मादबभिमानिदेवतानां प्रीत्यै मान्दादिमन्त्रान् पठेत्। ततो 'गुह्येन' 'नामधेयेन' देवताः परितोष्य 'दिवः' सकाशात् 'वृष्टिं' सम्पादयति।

ग्रहणमन्त्रे तु 'अह्नो रूपेण सूर्यस्य रश्मिभिः' इत्यमुमंशं व्याचष्टे, "शुक्रन्ते शुक्रेण गृह्णामीत्याहैतद्वा अह्नो रूपं यद्रात्रिः सूर्यस्य रश्मयो वृष्ट्या ईशतेऽह्न एव रूपेण सूर्यस्य रश्मिभिर्दिवो वृष्टिं च्यावयति"(२) इति। 'रात्रिः' इति 'यत्' 'एतत्' एव 'अह्नो रूपं' अहर्निरूप्यते येन तदह्नो रूपं निरूपकमित्यर्थः ; एतावदहः, ना-तोऽधिकमित्यह्न इयत्ता रात्र्या निरूप्यते। सेयं रात्रिः, 'सूर्यस्य रश्मयः' च वृष्टिस्वामिभूताः, न खलु रात्रिरूपं सूर्यरश्मियुक्तञ्च कालं मुक्त्वा वृष्टेरन्यः† कालोऽस्ति। तस्मादेतं मन्त्रभागं पठन् 'अह्नो' निरूपकेण रात्रिलक्षणेन कालेन, 'सूर्यस्य रश्मिभिः' युक्तेन च कालेन 'दिवः' सकाशात् 'वृष्टिं' भूमौ पातयति।

---

* एतत् इति E पुस्तके पाठः।

† दृष्टेरन्यः इति E एवं F पुस्तके पाठः।

पात्रादानमन्त्रस्य स्पष्टार्थतां दर्शयति, "आऽस्मिन्नुग्रा अचु-च्यवुरित्याह यथा यजुरेवैतत्"(३) इति ।

हरणमन्त्रे प्रधानरूपवाचिभ्यां ककुहं रूपमिति पदाभ्यां वृष्टिर्विवक्षितेति दर्शयति, "ककुहꣳ रूपं वृषभस्य रोचते बृह-दित्याहैतद्वा अस्य ककुहꣳ रूपं यद्वृष्टोरूपेणैव वृष्टिमव-रुन्धे"(४) इति ।

होममन्त्रे सोमायेति देवतामुद्दिश्य दधिद्रव्यहवने तात्पर्यं दर्शयति, "यत्ते सोमादाभ्यन्नाम जागृवीत्याहैष ह वै हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति"(५) इति। यो यजमानो-ऽदाभ्यनामकं दधिग्रहं गृहीत्वा सोमाय देवाय जुहोति, एष एव यजमानो हविषा दध्ना हविःस्वरूपं देवमुद्दिश्य यजतीत्युक्तम् ।

हिरण्यस्योपरि श्वासमन्त्रे प्राणशब्देनायुर्विवक्षितमित्येवं दर्शयति, "परा वा एतस्यायुः प्राण एति योऽꣳशुं गृह्णात्या नः प्राण एतु परावत इत्याहायुरेव प्राणमात्मन्धत्ते"(६) इति। 'यो' यजमानो-ऽꣳशुनामकं सोमरसपात्रे 'गृह्णाति' 'एतस्यायुः' प्राणः 'परा' 'एति' गच्छति । अतो मन्त्रेणायुःप्रदप्राणमात्मन्येव स्थापयति ।

हिरण्यस्योपरि श्वासविशेषं विधत्ते, "अमृतमसि प्राणाय त्वेति हिरण्यमभिव्यनिति अमृतं वै हिरण्यमायुः प्राणोऽमृतेनैवायुरात्म-न्धत्ते"(७) इति। श्वासवायोर्बहिःपरित्यागः प्राणनम्। अन्तरा-कर्षणमपाननम्। माध्यस्थ्येन धावनं व्याननम्, 'अथ यः प्राणा-पानयोः सन्धिः स व्यानः' इति श्रुत्यन्तरात् । हिरण्यस्योपरि व्याननेन स्वात्मन्यायुर्धारयति ।

• हिरण्यस्यायुःपरिमाणं विधत्ते, "शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति"(८) इति।

'इन्द्राग्नी' इति मन्त्रेण यदुदकस्पर्शः तमिमं विधत्ते, "अप उपस्पृशति भेषजं वा आपो भेषजमेव कुरुते"(९) इति। 'आपो वै शान्ताः' इत्यन्यत्र श्रुतत्वादपां भेषजत्वम्। एतेऽदाभ्यांशुग्रहमन्त्रा "आददे ग्राव" इत्यनुवाकात्पूर्वं द्रष्टव्याः॥

अथ मीमांसा,—

द्वितीयाध्यायस्य तृतीयपादे (९ अ०) चिन्तितम्,—

"यददाभ्यं गृहीत्वेति गृह्णात्यंशुमिति द्वयम्।
तद्यागो वा गुणो यागः स्याददाभ्यांशुनामतः॥
ग्रहयोरेव नाम स्यादानन्तर्याद्विधिस्तयोः।
गुणोऽतस्तस्य वाक्येन ज्योतिष्टोमाभिगामिता॥

अनारभ्य श्रूयते, 'अदाभ्यं गृहीत्वा सोमाय यजते' 'अंशुं गृह्णाति' इति च। तत्रादाभ्यशब्दस्य ज्योतिरादिवदपूर्वनामत्वात्तन्नामको यागो 'यजते' इत्याख्यातेन विधीयते। अंशुमित्यत्र यजतेरश्रवणेऽपि नामविशेषबलादेवापूर्वयागविधिः। न चात्र द्रव्यदेवतयोरभावः, ग्रहणलिङ्गेन ज्योतिष्टोमविकृतित्वावगतौ तदीयविध्यन्तातिदेशेन तत्सिद्धेः। इति प्राप्ते ब्रूमः, भवत्वदाभ्यांशुशब्दयोर्नामत्वम्। ते च नामनी ग्रहयोरेव स्यातां नतु यागयोः, गृहीत्वेति शब्दस्यानन्तरमेव पाठात्, यजतिस्तु व्यवहितः। तादृशोऽपि यजिरंशुवाक्ये नास्ति तस्माद् ग्रहयोरेव विधिः। ग्रहणं

च ज्योतिष्टोमगतस्य सोमरसस्य संस्काररूपो गुणः, ऐन्द्रवायवादिग्रहणसमानरूपत्वात्। यद्यप्यत्र न प्रकृतो ज्योतिष्टोमः, तथापि तत्सम्बन्धिग्रहणद्वारा वाक्यात् ज्योतिष्टोमगामित्वम्। अत एव सोमार्थम् 'अदाभ्यं गृहीत्वा' इति निर्दिश्यते। अथ वा तैत्तिरीयाणां षष्ठकाण्डस्य षष्ठे प्रपाठके प्राकरणिकं विनियोजकं वाक्यं द्रष्टव्यं। तस्मात् ज्योतिष्टोमे गुणविधिः" (न्याय०मा०)॥

तृतीयाध्यायस्य षष्ठे पादे (११अ०) चिन्तितम्,—

"ग्रहधर्मा अनारभ्योक्तांश्वदाभ्यद्वये न हि।
विद्यन्ते वा, प्रकरणादाद्यो, वाक्यादिहान्तिमः॥

अनारभ्य द्वो ग्रहो श्रुतो,-'अंशुं गृह्णाति' इति, 'अदाभ्यं गृहीत्वा' इति च। तयोः सादनसम्मार्गादयो ग्रहधर्मा न विद्यन्ते, अनारभ्याधीतेषु ऐन्द्रवायवादिष्वेव प्रकरणेन व्यवस्थापितत्वात्, इति चेत्। मैवं, 'ग्रहाः साद्यन्ते' इत्यादिवाक्येन ग्रहधर्मत्वावगमे तयोरपि ग्रहयोरनिवार्यत्वात्। न चैन्द्रवायवादयः प्रकरणिनः। ज्योतिष्टोमो हि प्रकरणी। तस्मात् सन्ति तयोर्धर्माः" (न्या० मा०)॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः॥०॥

वायुरसि प्राणो नाम सवितुराधिपत्येऽपानं मे दाः[१] चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आयुर्मे दा[२] रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजां मे दा[३] ऋतमसि सत्यं नामेन्द्रस्याधिपत्ये क्षत्रं मे दा[४] भूतमसि भव्यं नाम पितृणामाधिपत्येऽपामोषधीनां गर्भं धा[५] ऋतस्य त्वा व्योमन[६] ऋतस्य ॥ १ ॥

त्वा विभूमन[७] ऋतस्य त्वा विधर्मण[८] ऋतस्य त्वा सत्याय[९] ऋतस्य त्वा ज्योतिषे[१०] प्रजापतिर्विराजमपश्यत्तया भूतञ्च भव्यञ्चासृजत तामृषिभ्यस्तिरोदधात्तां जमदग्निस्तपसापश्यत्तया वै स पृश्नीन् कामानसृजत तत् पृश्नीनां पृश्नित्वं[११]* यत् पृश्नयो गृह्यन्ते पृश्नीनेव तैः कामान् यजमानोऽवरुन्धे वायुरसि प्राणः ॥ २ ॥

नामेत्याह प्राणापानावेवावरुन्धे[१२] चक्षुरसि श्रोत्रं नामेत्याहायुरेवावरुन्धे[१३] रूपमसि वर्णो नामेत्याह प्रजामेवावरुन्धे[१४] ऋतमसि सत्यं नामेत्याह क्षत्र-

---

* मन्त्रस्तुतिरूपा एते न मन्त्राः।

मेषावरुन्धे[१५] भूतमसि भव्यं नामेत्याह पशवो वा अपामोषधीनां गर्भः पशूनेव ॥ ३ ॥

अवरुन्धे[१६] एतावद्वै पुरुषं परितस्तदेवावरुन्धे[१७] ऋतस्य त्वा व्योमन इत्याहेयं वा ऋतस्य व्योमेमामेवाभिजयति[१८] ऋतस्य त्वा विभूमन इत्याहान्तरिक्षं वा ऋतस्य विभूमान्तरिक्षमेवाभिजयति[१९] ऋतस्य त्वा विधर्मण इत्याह द्यौर्वा ऋतस्य विधर्म दिवमेवाभिजयति[२०] ऋतस्य ॥ ४ ॥

त्वा सत्यायेत्याह दिशो वा ऋतस्य सत्यं दिश एवाभिजयति[२१] ऋतस्य त्वा ज्योतिष इत्याह सुवर्गो वै लोक ऋतस्य ज्योतिः सुवर्गमेव लोकमभिजयति[२२] ऋतावन्तो वै देव लोकास्तानेवाभिजयति[२३] दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति[२४] ॥ ५ ॥

. व्योमन ऋतस्य । प्राणः । पशूनेव । विधर्म दिवमेवाभिजयत्यृतस्य । षट्चत्वारिꣳशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥*॥

चतुर्थेऽंशेऽग्रदाभ्यस्य मन्त्रव्याख्यानमीरितम्।

अथ पञ्चमेऽग्निष्टोमशेषं परित्यज्य विकृतिरूपस्य द्वादशाहस्य शेषाः पृश्निग्रहा उच्यन्ते। कल्पः, 'प्राकृतं यजमानमनुद्रुत्य वायुरसि प्राणो नामेति दशभिः पृश्निग्रहाणां मन्त्रैर्दश मानानि मिमीते' इति। 'इन्द्राय त्वा वृत्रघ्न' इत्यादीनि प्राकृतानि यजुंषि सोमोन्मानकारणानि, तदेतत् यजुर्जातमुच्चार्य, वायुरसीत्यादिभिर्मन्त्रैः सोमस्योन्मानं कुर्यात्। पाठस्तु, "वायुरसि प्राणो नाम सवितुराधिपत्येऽपानं मे दाः[१] चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आयुर्मे दाः[२] रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजां मे दाः[३] ऋतमसि सत्यं नामेन्द्रस्याधिपत्ये क्षत्रं मे दाः[४] भूतमसि भव्यं नाम पितॄणामाधिपत्येऽपामोषधीनां गर्भं धाः[५] ऋतस्य त्वा व्योमने[६] ऋतस्य त्वा विभूमने[७] ऋतस्य त्वा विधर्मणे[८] ऋतस्य त्वा सत्याय[९] ऋतस्य त्वा ज्योतिषे"[१०] इति। हे सोम, त्वं यजमानेन पीतः सन् शरीरमध्ये धारणादिवायोराप्यायनकारित्वात् 'वायुरसि'। सामान्याकारेण वायुर्भूत्वा विशेषाकारेण 'प्राणो नाम' असि, (बहिर्निर्गमनशीलस्त्वमुच्छ्वासरूपोऽसि)। तादृशस्त्वं 'सवितुः' (प्रेरकस्य परमेश्वरस्य) 'आधिपत्ये' स्थित्वा 'मे' (मह्यम्) 'अपानम्' (अन्तःप्रवेशवन्तं वायुविशेषं) 'दाः' (देहि)। तथा चक्षुःश्रोत्रयोराप्यायनकारित्वात् तदुभयरूपो'ऽसि'। अतो 'धातुः' (देहेन्द्रियादिस्रष्टुः) 'आधिपत्ये' स्थित्वा मह्यम् 'आयुः' देहि। तथा शरीरावयवसौष्ठवलक्षणस्य रूपस्य, कान्तिलक्षणस्य वर्णस्य च हेतुत्वात् तदुभयरूपो'ऽसि' च। अतस्तदुभयकारिणो 'बृहस्पतेराधिपत्ये'

स्थित्वा मह्यं पुत्रपौत्रादिरूपां 'प्रजां' देहि । तथा मनसा चिन्त्यमानस्य वाचा उच्चार्यमाणस्य च सत्यस्य च हेतुत्वात्तदुभयरूपो-'ऽसि' । अतस्तदुभयपालकस्य 'इन्द्रस्याधिपत्ये' स्थित्वा मह्यं बलं देहि । तथा शरीरमध्ये यत् 'भूतं' (पूर्वं सिद्धं) धातुवैषम्यं, यच्च 'भव्यम्' (इतः परं भविष्यत्), तदुभयसमाधानहेतुत्वात् तदुभयरूपो'ऽसि' । अतस्तदुभयसमाधातॄणां पितॄणाम् 'आधिपत्ये' स्थित्वा 'अपामोषधीनां' च सम्बन्धी यो गर्भः पशुरूपः तं 'धाः' (सम्पादय) । हे सोम, 'ऋतस्य व्योमने' (सत्यस्य विशेषेण रक्षणाय) त्वां मिमे । 'ऋतस्य' (सत्यस्य) 'विभूमने' (विशेषेण बाहुल्याय) त्वां मिमे । तथा 'ऋतस्य विधर्मणे' (सत्यस्य विशेषेण धारणाय) त्वां मिमे । तथा 'ऋतस्य' 'सत्याय' (सत्यस्य सत्याय प्रमादरूपानृतराहित्याय) त्वां मिमे । तथा 'ऋतस्य' 'ज्योतिषे' (सत्यस्य प्रकाशाय) त्वां मिमे ॥

तैरेतैर्दशभिर्मन्त्रैः सोमोन्मानरूपा ये पृश्निग्रहाः, तान् विधातुं प्रस्तौति, "प्रजापतिर्विराजमपश्यत्तया भूतञ्च भव्यञ्चासृजत तामृषिभ्यस्तिरोदधात्तां जमदग्निस्तपसापश्यत्तया वै स पृश्नीन् कामानसृजत तत्पृश्नीनां पृश्नित्वम्"(११) इति । 'प्रजापतिः' पूर्वं विचार्य, सृष्टेः साधनभूतां 'विराजमपश्यत्' । वायुरसीत्यादिमन्त्रसमष्टिः दशसंख्योपेतत्वात् दशाक्षरयुक्तच्छन्दःसाम्येन 'विराट्' इत्युच्यते । 'तया' 'च' विराजा 'भूतं' भविष्यच्च जगत् 'असृजत' कृत्स्नं जगत् सृष्ट्वा तत्र किञ्चिद्भूतं किञ्चिद्भविष्यदिति भागमकरोदित्यर्थः । ततः 'तां' विराजम् 'ऋषिभ्यो' न प्रकाशितवान् । तदा 'जमदग्निः'

तपः कृत्वा प्रजापत्यनुग्रहेण 'तां' (विराजम्) 'अपश्यत्', 'तया' (विराजा) 'स' (जमदग्निः) 'पृश्नीन्' (धेनुस्वरूपान्) 'कामान्' (भोगान्) 'असृजत'। यस्माद्वायुरसीत्यादिभिर्दशभिर्मन्त्रैः पृश्निशब्दाभिधेयान् धेनुरूपान् भोगानसृजत, तस्मात् कारणात् पृश्निनामकानां वायुरसीत्यादीनां 'पृश्नि'नाम सम्पन्नम्, पृश्नयः (कामधेनवः) सृष्टा यैर्मन्त्रैः, ते 'मन्त्राः' पृश्नय इति निर्वक्तुं शक्यत्वात्।

अथ विधत्ते, "यत् पृश्नयो गृह्यन्ते, पृश्नीनेव तैः कामान् यजमानोऽवरुन्धे, वायुरसि प्राणो नामेत्याह प्राणापानावेवावरुन्धे"(१२) इति। ग्रहणं नाम न पात्रेषु सोमरसस्य धारणं, किन्तु नद्धस्य सोमस्योन्मानं, पृश्निशब्दाभिधेयैर्वायुरसीत्यादिभिर्मन्त्रैर्गृहीतव्याः सोमभागाः 'प्रश्नयः', ते च 'गृह्यन्ते', गृहीतव्या इत्यर्थः। 'तैः' उन्मानलक्षणैर्ग्रहैः 'यजमानः' कामधेनुसदृशान् भोगान् प्राप्नोति। तत्र प्रथममन्त्रेण प्राणापानपोषणलक्षणं कामं दर्शयति, "वायुरसि प्राणो नामेत्याह प्राणापानावेवावरुन्धे" इति।

द्वितीयमन्त्रेण चक्षुःश्रोत्रस्थैर्य-हेतोरायुषः प्राप्तिं दर्शयति, "चक्षुरसि श्रोत्रं नामेत्याहायुरेवावरुन्धे"(१३) इति।

तृतीयमन्त्रेणावयवसौष्ठवकान्तिभ्यामुपेतायाः प्रजायाः सम्पत्तिं दर्शयति, "रूपमसि वर्णो नामेत्याह प्रजामेवावरुन्धे"(१४) इति।

चतुर्थमन्त्रेण मानसवाचिकसत्यसाधनस्य सम्पत्तिं दर्शयति, "ऋतमसि सत्यं नामेत्याह क्षत्रमेवावरुन्धे"(१५) इति।

पञ्चममन्त्रेण भूतभविष्यदस्वास्थ्यपरिहारहेतूनां पशूनां प्राप्तिं दर्शयति, "भूतमसि भव्यं नामेत्याह पशवो वा अपामोषधीनां

गर्भः पशूनेवावरुन्धे"(१६) इति। 'अपामोषधीनां गर्भन्धाः' इति तस्मिन् मन्त्रे समाम्नातं, तत्र तृणोदकपरिणामरूपत्वात् पशव एव तादृशो गर्भ इह विवक्षितः।

पञ्चममन्त्रफलमुपसंहरति, "एतावद्वै पुरुषं परितस्तदेवावरुन्धे"(१७) इति। प्राणापानस्वास्थ्यप्रभृतिपशुप्राप्तिपर्यन्तं यावत् फलमुक्तम्, 'एतावत्' एव 'पुरुषं परितो' वर्त्तते, पुरुषस्य सर्वतोऽपेक्षितं फलमित्यर्थः।

उत्तरस्मिन् मन्त्रपञ्चके 'व्योमने' इत्यादिभिः पञ्चभिश्चतुर्थ्यन्तपदैर्लोकत्रयस्य, दिशां, स्वर्गस्य विवक्षितत्वात्, तद्विजयः फलमित्येतद्दर्शयति, "ऋतस्य त्वा व्योमन इत्याह इयं वा ऋतस्य व्योम इमामेवाभिजयति(१८) ऋतस्य त्वा विभूमन इत्याह अन्तरिक्षं वा ऋतस्य विभूमा अन्तरिक्षमेवाभिजयति(१९) ऋतस्य त्वा विधर्मण इत्याह द्यौर्वा ऋतस्य विधर्म दिवमेवाभिजयति(२०) ऋतस्य त्वा सत्यायेत्याह दिशो वा ऋतस्य सत्यं दिश एवाभिजयति(२१) ऋतस्य त्वा ज्योतिष इत्याहं सुवर्गो वै लोक ऋतस्य ज्योतिः सुवर्गमेव लोकमभिजयति(२२) एतावन्तो वै देवलोकास्तानेवाभिजयति(२३)" इति। ऋतशब्दः सत्यवाची।

कामप्रापके पूर्वमन्त्रपञ्चके लोकजयहेतावुत्तरमन्त्रपञ्चके चावस्थितां संख्यां प्रशंसति, "दश सम्पद्यन्ते दशाक्षरा विराड़न्नं विराट् विराजि एवान्नाद्ये प्रतितिष्ठति"(२४) इति।

अत्र विनियोगसंग्रहः,—

वायुर्दश द्वादशाहे पृश्निग्रहणमन्त्रकाः ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

---

देवा वै यद्यज्ञेन नावारुन्धत तत्परैरवारुन्धत त-त्पराणां परत्वं(१)* यत्परे गृह्यन्ते यदेव यज्ञेन नावरुन्धे तस्यावरुध्यै(२) यं प्रथमं गृह्णातीममेव तेन लोकम-भिजयति यं द्वितीयमन्तरिक्षं तेन यं तृतीयममुमेव तेन लोकमभिजयति यदेते गृह्यन्त एषां लोकाना-मभिजित्यै(३) ॥ १ ॥

उत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्तेऽभिजित्यैवेमां लो-कान् पुनरिमं लोकं प्रत्यवरोहन्ति(४) यत्पूर्वेष्वहः-स्वितः पराञ्चो गृह्यन्ते तस्मादितः पराञ्च इमे लोका यदुत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्ते तस्मादमुतोऽर्वाञ्च

---

* इतः प्रभृति षष्ठान्ता न मन्त्राः, ततः परं मन्त्रत्रयमिति

इमे लोकास्तस्मादयातयाम्नो लोकान्मनुष्या उपजीवन्ति(५) ब्रह्मवादिनो वदन्ति कस्मात्सत्यादद्भ्य ओषधयः सम्भवन्त्योषधयः ॥ २ ॥

मनुष्याणामन्नं प्रजापतिं प्रजा अनु प्रजायन्त इति परानन्विति ब्रूयात्(६) यद् गृह्णात्यद्भ्यस्त्वौषधीभ्यो गृह्णामीति तस्मादद्भ्य ओषधयः सम्भवन्ति(७) यद् गृह्णात्योषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति तस्मादोषधयो मनुष्याणामन्नं(८) यद्गृह्णाति प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति तस्मात्प्रजापतिं प्रजा अनु प्रजायन्ते(९) ॥ ३ ॥

अभिजित्यै । ओषधयः । अष्टाचत्वारिंशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥०॥

पृश्निग्रहाख्या उन्मानविशेषाः पञ्चमे उक्ताः ।

अथ षष्ठे गवामयनगताः परःसंज्ञका अतिग्राह्यविशेषा उच्यन्ते ।

कल्पः, 'त्रिषु परःसामसु त्रीनतिग्राह्यान् गृह्णाति उपयाम गृहीतोऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णामीति ; प्रथमेऽहनि गृह्णाति ओषधीभ्यस्त्वा प्रजाभ्य इति द्वितीये ; प्रजाभ्यस्त्वा प्रजापतये इति

तृतीये ; एतानेवावृत्तान् अर्वाक्सामसु ; तानूर्ध्वानावृत्तांश्च विषुवति' इति। अस्ति गवामयनं नाम संवत्सरसत्रं, तस्य पूर्वमासषट्कमुत्तर-मासषट्कञ्चेति द्वौ भागौ, तयोर्मध्ये विषुवत्संज्ञकमेकं प्रधानमह-र्भवति, तस्य चाह्नः पूर्वभाविनि परःसामनामकानि त्रीण्यहानि भवन्ति, तानि पूर्वस्य* मासषट्कस्यान्तिमानि। तथा विषु-वतोऽह्न उत्तरभावीनि अनन्तराणि अर्वाक्सामनामानि त्रीण्यहा-नि भवन्ति ; तान्युत्तरस्य† मासषट्कस्यादिभूतानि। तत्रापि परः-सामकेषु त्रिषु अहःसु क्रमेणोक्तैस्त्रिभिर्मन्त्रैस्त्रयोऽतिग्राह्याख्याः सोमरसा गृहीतव्याः। अर्वाक्सामनामकेषु त्रिष्वहःसु तेषामेव मन्त्राणां विपरीतक्रमेण त्रयोऽतिग्राह्या गृहीतव्याः। विषुवन्नाम-के तु मुख्यदिने समाम्नातक्रमेण विपरीतक्रमेण चेत्येवं षडतिग्राह्या गृहीतव्याः।

तानेतानतिग्राह्यान् विधातुं प्रस्तौति, "देवा वै यत् यज्ञे-न नावारुन्धत तत्परैरवारुन्धत तत्पराणां परत्वम्"(१) इति। पुरा यज्ञमनुतिष्ठन्तो 'देवा' विधास्यमानातिग्राह्यरहितेन केवलेन 'यज्ञेन' 'यत्' फलं न प्राप्तवन्तः; 'तत्' फलं पराः स्वैर्ग्रहैराप्नुवन्। पारयन्ति (अभीष्टसमाप्तिं गमयन्ति) इति पराः।

विधत्ते, "यत्परे गृह्यन्ते यदेव यज्ञेन नावरुन्धे तस्या-वरुद्ध्यै"(२) इति।

समुदायाकारेण प्रशस्य विशेषाकारेण प्रशंसति, "यं प्रथम

* पुनरस्य इति F पु० पाठः।

† तानि पुनरस्य इति F पु० पाठः।

गृह्णातीममेव तेन लोकमभिजयति, यं द्वितीयमन्तरिक्षन्तेन, यं तृतीयममुमेव तेन लोकमभिजयति, यदेते गृह्यन्त एषां लोकानामभिजित्यै"[२] इति।

विषुवतोऽह्न उपरितनेष्वहःसु विपरीतक्रमं विधत्ते, "उत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्तेऽभिजित्यैवेमान्लोकान् पुनरिमं लोकं प्रत्यवरोहन्ति"[४] इति। 'अमुतो' ऽन्त्यात् 'अर्वाञ्चो' व्युत्क्रमस्थितान् गृह्णीयात्। तथा सति, पूर्वानुष्ठितैरनुलोमगतैर्ग्रहैः पृथिव्यन्तरिक्षद्युलोकानभिजित्यैव पुनर्द्युलोकात् भूलोकं प्रत्यारूढवान् भवति।

अथाम्नातक्रमं विपरीतक्रमं च मिलित्वा पुनः प्रशंसति, "यत्पूर्वेष्वहःसु इतः पराञ्चो गृह्यन्ते तस्मादितः पराञ्च इमे लोका यदुत्तरेषु अहःसु अमुतोऽर्वाञ्चो गृह्यन्ते तस्मादमुतोऽर्वाञ्च इमे लोकास्तस्मादयातयाम्नो लोकान्मनुष्या उपजीवन्ति"[५] इति। विषुवतोऽह्नः 'पूर्वेष्वहःसु' 'इतः' (प्रथमादतिग्राह्यात्) आरभ्य क्रमेणैव 'पराञ्चो' गृह्यन्ते। परमुत्तममञ्चति इति पराञ्चः। प्रथमं गृहीत्वा ततः परं द्वितीयोऽतिग्राह्यः, द्वितीयं गृहीत्वा ततः परं तृतीयोऽतिग्राह्यः; एते पराञ्चः। यस्मादेवं गृह्यन्ते, 'तस्मादितः' (भूलोकात्) आरभ्य त्रयो 'लोकाः' 'पराञ्चः' (उत्तरोत्तरगतयो) भवन्ति। विषुवत 'उत्तरेष्वहःसु' 'अमुतः' (तृतीयग्रहात्) आरभ्य 'अर्वाञ्चः' (अधस्तना गृह्यन्ते। प्रथमेऽहनि तृतीयो ग्रहः, द्वितीयेऽहनि द्वितीयो ग्रहः, तृतीयेऽहनि प्रथमो ग्रहः; ते एते 'अर्वाञ्चः'। यस्मादेवं, तस्मात् 'अमुतो' (द्युलोकात्) अधस्तनोऽन्तरिक्षलोकः,

तस्मादधस्तनो भूलोकः, ते एते 'अर्वाञ्चो' लोकाः, यस्मात्पराञ्चोऽर्वाञ्चश्च परस्परविलक्षणाः, अत एव अपुनरावृत्तत्वादगतसाराः; तस्मात् 'मनुष्याः' अगतसारान् 'लोकान्' 'उपजीवन्ति'। यानि स्थानानि उपभुक्तत्वेन गतसाराणि भवन्ति, तानि नापेक्षन्ते; किन्त्वभुक्तपूर्वाणि नूतनानि स्थानानि अपेक्षन्ते।

प्रथममन्त्रत्रयं विधातुं प्रस्तौति, "ब्रह्मवादिनो वदन्ति कस्मात्सत्यादद्भ्य ओषधयः सम्भवन्त्योषधयो मनुष्याणामन्नं प्रजापतिं प्रजा अनु प्रजायन्ते इति परानन्विति ब्रूयात्"[६] इति। लोके हि 'अद्भ्यः' सकाशात् 'ओषधयः' उत्पद्यन्ते इति यत्, तत् 'कस्मात्सत्यात्' (कुतः कारणात्); तथा, 'मनुष्याणाम्' 'ओषधयः,' 'अन्नम्' इति यत्, तदपि कुतः कारणात्? तथा 'प्रजापतिम्' 'अनु' 'प्रजाः' 'प्रजायन्ते' इति यत्, एतदपि कुतः कारणात्? इत्येवं ब्रह्मवादिभिः पृष्टः कश्चित् बुद्धिमान् 'परानन्विति' उत्तरं 'ब्रूयात्'। परतोऽतिग्राह्यग्रहणमन्त्राः उत्कृष्टत्वात्परशब्दाभिधेयाः, तदनुसारेण यथोक्तमेतत्त्रयं सम्पद्यते। तत्र प्रथमं मन्त्रं विधत्ते,

"यद्गृह्णात्यद्भ्यस्त्वौषधीभ्यो गृह्णामीति तस्मादद्भ्य ओषधयः सम्भवन्ति"[७] इति। हे प्रथमातिग्राह्य, 'त्वा' 'अद्भ्यः' सकाशात् 'गृह्णामि' किमर्थं? 'ओषधीभ्यः' (ओषध्युत्पत्त्यर्थम्)। अनेन मन्त्रेण प्रथमं गृह्णीयात्। यस्मादेवं गृह्णाति, 'तस्मादद्भ्यः' सकाशात् 'ओषधयः' सम्यक् भवन्ति।

द्वितीयं मन्त्रं विधत्ते, "यद्गृह्णात्योषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति तस्मादोषधयो मनुष्याणामन्नम्"[८] इति, हे द्वितीया-

तिग्राह्य, 'त्वाम्' 'ओषधीभ्यः' सकाशात् 'गृह्णामि'। किमर्थम्? 'प्रजाभ्यः' (प्रजाजीवनार्थम्)। अनेन द्वितीयातिग्राह्यं गृह्णीयात्। यस्मादेवं गृह्णाति, 'तस्मादोषधयो मनुष्याणामन्नं' भवन्ति।

अथ तृतीयं मन्त्रं विधत्ते, "यद्गृह्णाति प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति तस्मात् प्रजापतिं प्रजा अनु प्रजायन्ते"(९) इति। हे तृतीयातिग्राह्य, त्वां 'प्रजार्थं' प्रजापत्यर्थञ्च 'गृह्णामि'। 'प्रजाः' सर्वा अपि प्रजापतिमाश्रित्य यथा प्रजायेरन्नित्यनेनाभिप्रायेण गृह्णामीत्यर्थः।

अथ विनियोगसङ्ग्रहः,—

पराभिधा अतिग्राह्यास्ते गवामयने त्रयः।
तेष्वन्न ओषधीभ्यस्त्व प्रजाभ्यश्चेति मन्त्रका इति॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः॥ ०॥

---

प्रजापतिर्देवासुरानसृजत* तदनु यज्ञोऽसृज्यत यज्ञं छन्दांसि ते विष्वञ्चो व्यक्रामन्त्सोऽसुराननु यज्ञोऽपाक्रामद्यज्ञं छन्दांसि ते देवा अमन्यन्तामी वा

* अत्र सर्व्वे एव न मन्त्राः केचन स्तुतिरूपाः केचन मन्त्ररूपा इति।

इदमभूवन् यद्वयꣳस्म इति ते प्रजापतिमपाधावन्त्सो-
ऽब्रवीत्प्रजापतिश्छन्दसां वीर्यमादाय तद्वः प्रदास्यामी-
ति स च्छन्दसां वीर्यम्॥ १ ॥

आदाय तदेभ्यः प्रायच्छत्तदनु च्छन्दाꣳस्यपाक्रामन्
च्छन्दाꣳसि यज्ञस्ततो देवा अभवन् पराऽसुरा[1] य एवं
च्छन्दसां वीर्यं वेदाश्रावयास्तु श्रौषड्यज ये यजाम-
हे वषट्कारो भवत्यात्मना पराऽस्य भ्रातृव्यो भवति[2]
ब्रह्मवादिनो वदन्ति कस्मै कमध्वर्युराश्रावयतीति
च्छन्दसां वीर्यायेति ब्रूयादेतद्वै ॥ २ ॥

च्छन्दसां वीर्यमाश्रावयास्तु श्रौषड्यज ये यजामहे
वषट्कारो[3] य एवं वेद स वीर्यैरेव च्छन्दोभिरर्चति
यत्किञ्चार्चति[4] यदिन्द्रो वृत्रमहन्नमेध्यं तद्यद्यतीन-
पावपदमेध्यन्तदथ कस्मादैन्द्रो यज्ञ आ सꣳस्थाता-
रित्याहुरिन्द्रस्य वा एषा यज्ञिया तनुर्यद्यज्ञस्तामेव
तत्, यजन्ति[5] य एवं वेदोपैनं यज्ञो नमति[6] ॥ ३ ॥

छन्दसां वीर्यम्। वै। एव तत्। अष्टौ च ॥ ७ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीय-
प्रपाठके सप्तमोऽनुवाकः ॥०॥

---

षष्ठे प्रोक्ता अतिग्राह्या गवामयनिका त्रयः।

अथ सप्तमे सोमाङ्गत्वेन आश्रावयेत्यादयो मन्त्रा विधीयन्ते, "प्रजापतिर्देवासुरानसृजत, तदनु यज्ञोऽसृज्यत, यज्ञं छन्दाꣳसि, ते विष्वञ्चो व्यक्रामन्, सोऽसुराननु यज्ञोऽपाक्रामत्, यज्ञं छन्दाꣳसि, ते अमन्यन्तामी वा इदमभूवन् यद् वयꣳस्म इति, ते प्रजापतिमुपाधावन्, सोऽब्रवीत् प्रजापतिश्छन्दसां वीर्यमादाय तद्वः प्रदास्यामीति, स छन्दसां वीर्यमादाय तदेभ्यः प्रायच्छत्तदनु छन्दाꣳस्यपाक्रामन् छन्दांसि यज्ञस्ततो देवा अभवन् पराऽसुराः[१] इति। कदाचित् 'प्रजापतिः' देवानसुरांश्च पुरा 'असृजत' (सृष्टवान्)। तान् 'अनु' तेन 'यज्ञोऽपि' 'असृज्यत', 'यज्ञम्' अनु 'छन्दांसि' च ससर्जत,* तदानीं 'ते' देवाः परस्परमैकमत्याभावात् 'विष्वञ्चो' (नानागतयो) भूत्वा 'व्यक्रामन्' (विविधन्देशङ्गताः)।

अथ 'स' 'यज्ञः' 'असुरान्' 'अनुसृत्य', देवेभ्योऽपाक्रामत्, तञ्च 'यज्ञम्' अनुसृत्य 'छन्दांसि' अपि देवेभ्योऽपाक्रामन्। तदानीं 'ते' 'देवाः' परस्परमैकमत्यं प्राप्यैवं विचारितवन्तः, 'वयं' 'यत्' ऐश्वर्यं प्राप्य स्थिताः 'स्म', तत् 'इदं' सर्वं प्राप्य असुरा एवेदानीमवस्थिता अभवन्, इति विचार्य 'ते' देवास्तथाविधं परिभवमसहमानाः 'प्रजापतिमुपाधावन्' अथ देवैरुपसेवितः 'प्रजापतिः' तान् प्रति एवम् 'अब्रवीत्', 'छन्दसां' (वैदिकमन्त्राणां) मध्ये 'वीर्यं' (सारम्) आदाय युष्मभ्यं 'तत्' 'प्रदास्यामि', 'इति' उक्त्वा च तथैव कृतवान्।

अथ तद्वीर्यम् 'अनु' सर्वाणि 'छन्दांसि' असुरेभ्योऽपक्रम्य देवान्

---

* ससर्ज इति एकवचनान्तप्रयोगो भवितुं युक्तः।

प्राप्नुवन्, तानि 'छन्दांसि' अनुसृत्य 'यज्ञो'ऽपि असुरेभ्योऽपक्रम्य देवान् प्राप्नोत्, ततो देवा विजयिनोऽभवन्, असुरास्तु परिभूताः।

अथ मन्त्रान् विधत्ते "य एवं छन्दसां वीर्यं वेद आश्रावयास्तु श्रौषट् यज यं यजामहे वषट्कारो भवत्यात्मना पराऽस्य भ्रातृव्यो भवति"(२) इति। 'यो' 'वीर्यं' वेद, सः स्वयमेव विजयी भवति, तस्य, 'भ्रातृव्यः' 'परा'-'भवति'। तस्माद्वीर्यं विदित्वा प्रयुञ्जीत। आश्रावयेत्यादिमन्त्रपञ्चकं तद्वीर्यं,* एतेषां मन्त्राणामर्थाः "यो वै सप्तदशम्" इत्यस्मिन्ननुवाके (१का०६प्र०११अ०) प्रपञ्चिताः, इष्ट्यङ्गत्वेन तत्र विधिः, अत्र तु सोमाङ्गत्वेन, सोमस्येष्टिविकारत्वाभावेन चोदकात्ते मन्त्रा अप्राप्ताः।

इदानीन्तानेतान् मन्त्रान् प्रशंसति, "ब्रह्मवादिनो वदन्ति कस्मै कमध्वर्युराश्रावयतीति छन्दसां वीर्यायेति ब्रूयादेतद्वै छन्दसां वीर्यमाश्रावयास्तु श्रौषट् यज ये यजामहे वषट्कारः"(३) इति। 'कस्मै कं' (कस्मै कामाय प्रयोजनाय) अध्वर्युराश्रावणं करोतीति ब्रह्मवादिभिः पृष्टो बुद्धिमान् उत्तरं ब्रूयात्, प्रजापतिनोद्धृतवीर्याणां छन्दसां पुनर्वीर्यप्राप्तिलाभाय 'अध्वर्युराश्रावयति', इत्युत्तरम्; स एवोत्तरवादी वीर्यं दर्शयितुमाश्रावयेत्यादिकमनुवदति।

इदानीं वीर्यवेदनं प्रशंसति, "य एवं वेद स वीर्यैरेव छन्दोभिरर्चति यत्किञ्चार्चति"(४) इति। अस्मिन् यज्ञे लोकव्यवहारे वा वीर्यवेदी यत्किञ्चिद्देवादिकं पूजयति, तत्सर्वं 'स' 'वीर्यैरेव' छन्दोभिः, पूजितवान् भवति।

अथैतैर्मन्त्रैर्युक्तं यज्ञं प्रशंसति, "यदिन्द्रो वृत्रमहन्नमेध्यन्तत्

---

* अत्र तद्वीर्य्यमिति क्वचित् पाठः।

हत् यतोनपावपदमेध्यन्तदथ कस्मादैन्द्रो यज्ञ आ सꣳस्थातोरि-त्याहुरिन्द्रस्य वा एषा यज्ञिया तनूर्यद् यज्ञस्तामेव तद् यजन्ति"(५) इति। 'इन्द्रो' 'वृत्रं' हतवानिति 'यत', 'तत्' (एतद्वधरूपम्) 'अमेध्यम्' अयज्ञियं। किञ्चायमिन्द्रो 'यतोनपावपत्' (सालावृकेभ्यः प्रायच्छत्) इति 'यत्', तदपि पापरूपत्वादयज्ञियं। 'अथ' (एवं सति) 'कस्मात्' कारणादयं 'यज्ञः'* 'आ संस्थातोः' (समाप्तिपर्यन्तम्) 'ऐन्द्रः' सम्पन्नः ? इति ब्रह्मवादिन 'आहुः', तत्र बुद्धिमानेवमुत्तरं ब्रूते, इन्द्रस्य हि द्वे तन्वौ अयज्ञिया यज्ञिया च, राज्यं कुर्वन्ती चत्रादीन् हिंसन्ती तनूरयज्ञिया, सा च राजसी। यज्ञः-इति 'यत्', 'एषा' 'इन्द्रस्य' 'एव' 'यज्ञिया' (यज्ञार्हा) 'तनूः', सा च सात्त्विकी वच्यते इति, यज्ञे हविषा पूजनीयो यज्ञाङ्गदेवतारूपः सात्त्विको विग्रह इत्यर्थः। 'तत्' (तस्मिन् यज्ञे) 'तामेव' 'सात्त्विकीं यज्ञार्ह-तनूं' यजमानाः प्रयजन्ति।

यज्ञरूपतनुवेदनं प्रशंसति, "य एवं वेदोपैनं यज्ञो नमति"(६) इति।

अत्र विनियोगसङ्ग्रहः,—

आश्रावयेत्यादयोऽत्र पञ्च मन्त्रा उदीरिताः।
आश्रावणादि सोमार्थमत्र, प्राक्तनमिष्टिगम् इति† ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

* अत्र अयं यज्ञ इत्ययं पाठः E. पुस्तके नास्ति।

† आश्रावणादि सोमार्थे मन्त्रं प्राक्तनमिष्टिगम् इति B. पु॰ पाठः।

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिम(१)। आवृश्च्यते वा एतद्यजमानोऽग्निभ्यां यदेनयोः शृतं कृत्वाथान्यत्रावभृथमवैत्यायुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यं जुहुयादाहुत्यैवैना शमयति नार्तिमार्च्छति यजमानो(२) यत् कुसीदम् ॥ १ ॥

अप्रतीत्तं मयि येन यमस्य बलिना चरामि। इहैव सन्निरवदये तदेतत्तदग्ने अनृणो भवामि(३)। विश्वलोप विश्वदावस्य त्वा सञ्जुहोम्यग्धादेकोऽहुतादेकः समसनादेकः। ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यम्(४)। अयन्नो नभसा पुरः सꣳस्फानो अभिरक्षतु। गृहाणामसमर्त्यै बहवो नो गृहा असन्(५) स त्वन्नः ॥ २ ॥

नभसस्पत ऊर्जं नो धेहि भद्रया। पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि(६)। देव सꣳस्फान सहस्रपोषस्येशिषे स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम(७)। अग्निर्वाव यम इयं यमी

कुसीदं वा एतद्यमस्य यजमान आदत्ते यदोषधीभिर्वेदिं स्तृणाति यदनुपोष्य प्रयायाद्ग्रीवबद्धमेनम् ॥ ३ ॥

अमुष्मिंल्लोके नेनीयेरन्[८] यत् कुसीदमप्रतीत्तं मयीत्युपौषतीहैव सन्यमं कुसीदं निरवदायानृणः सुवर्गं लोकमेति[९] यदि मिश्रमिव चरेदञ्जलिना सक्तून् प्रदाव्ये जुहुयादेष वा अग्निर्वैश्वानरो यत् प्रदाव्यः स एवैनं स्वदयति[१०] अह्नां विधान्यामेकाष्टकायामपूपञ्चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपौषेद्यदि ॥ ४ ॥

दहति पुण्यसमं भवति यदि न दहति पापसमम्[११] एतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्रमुपयन्ति[१२] यो वा उपद्रष्टारमुपश्रोतारमनुख्यातारं विद्वान् यजते सममुष्मिन् लोक इष्टापूर्तेन गच्छतेऽग्निर्वा उपद्रष्टा वायुरुपश्रोतादित्योऽनुख्याता तान्य एवं विद्वान्यजते सममुष्मिन् लोक इष्टापूर्तेन गच्छते[१३] ऽयन्नो नभसा पुरः ॥ ५ ॥

इत्याहाग्निर्वै नभसा पुरोऽग्निमेव तदाहैतन्मे गोपायेति[१४] स त्वन्नो नभसस्पत इत्याह वायुर्वै नभसस्प-

निर्वायुमेव तदाहैतन्मे गोपायेति देव सꣳस्फानेत्याहा-
सौ वा आदित्यो देवः सꣳस्फान आदित्यमेव तदा-
हैतन्मे गोपायेति ॥ ६ ॥

कुसीदम्। त्वन्नः। एनम्। आपेद्यदि। पुरः। आ-
दित्यमेव तदाहैतन्मे गोपायेति ॥ ८ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीय-
प्रपाठकेऽष्टमोऽनुवाकः ॥ ० ॥

---

सोमाङ्गश्रावणादीनां मन्त्राणां सप्तमे विधिः।

अथाष्टमेऽवभृथाङ्गहोमादयो वक्तव्या.। कल्पः, 'आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यन्नाहवनीये हुत्वा' इति। पाठस्तु "आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यम्पितेव पुत्रमभिरक्षतादिम्"[१] इति। हे 'अग्ने', त्वम् 'आयुर्दा' 'एधि' (यजमानस्यायुःप्रदो भव)। कीदृशस्त्वं 'हविषो जुषाणः' (हविः सेवमानः) 'घृतप्रतीकः' (घृतोपक्रमः), आघारप्रयाजादीनां घृतेन हूयमानत्वात्। 'घृतयोनिः'

अवमानेऽप्यनुयाजादौ (घृतमेव योनिः स्थानोत्पत्तिकारणं यस्यासौ घृतयोनिः), (तादृशः) त्वं, 'मधु' (स्वादुतमं) 'चारु' (शोधितत्वेन निर्मलं) 'गव्यं' 'घृतं' 'पीत्वा' 'पिता' 'पुत्रम्' इव 'इमं' यजमानम् अभितो रक्ष ।

अनेन मन्त्रेण होमं विधत्ते, "आवृश्चते वा एतद्यजमानो ऽग्निभ्यां यदेनयोः शृतं कृत्वाथान्यत्र अवभृथमवैत्यायुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यं जुहुयादाहुत्यैवैनौ शमयति नार्त्तिमार्च्छति यजमानः"(२) इति । 'एनयोः' (आहवनीयगार्हपत्ययोः) हविः पक्कं कृत्वा अत्र अवभृथहविषो वारुणपुरोडाशस्य पक्कस्य होममकृत्वा 'अन्यत्र' (जलसमीपे) अवभृथकर्मार्थं गच्छति इति 'यत्', एतेनापराधेन 'यजमान' आहवनीयगार्हपत्याभ्याम् 'अग्निभ्यां' विच्छिन्नो भवति । अतो'ऽवभृथं' जिगमिषुः 'आयुर्दा' इति-मन्त्रेणाज्यमाहवनीये 'जुहुयात्', एतया 'आहुत्या' 'एव' 'एनौ' आवाहवनीयगार्हपत्यौ शान्तौ करोति, तयोः शान्तयोः 'यजमानः' 'आर्त्तिं' न प्राप्नोति ।

कल्पः, 'आहवनीयादुल्मुकमादाय वेदिमुपोषति यत् कुसीदमप्रतीत्तम्' इति । अवभृथोदयनीयानुबन्ध्याख्येभ्यः कर्मभ्य ऊर्ध्वमयं वेदिदाहः । मन्त्रपाठस्तु "यत् कुसीदमप्रतीत्तं मयि, येन यमस्य बलिना चरामि । इहैव सन्निरवदये तदेतत्तदग्ने अनृणो भवामि"(१) इति । 'यत्' 'कुसीदम्' (ऋणम्) 'अप्रतीत्तम्' (अनर्पितं) 'मयि' वर्त्तते । 'येन यमस्य बलिना', यम उत्तमर्णः, बलिः प्रत्यर्पणीयमृणं, येनाहमृणेन युक्त इदानीं वर्त्ते । 'तदेतत्' (ऋणम्) 'इहैव'

वधन्' (अस्मिन्नेव जन्मनि यज्ञदेशे वर्त्तमानः) 'निरवदये', (निःशेषेणापाकरोमि) 'तत्' (तेनैव कारणेन) हे 'अग्ने' यमरूपादुत्तमर्णादहम् 'अनृणो' भवामि।

कल्पः, 'यदि भिश्रमिव चरेदञ्जलिना सक्तून् प्रदाव्ये जुहुयादिश्वलोप विश्वदावस्य त्वा' इति। अस्मिन् पक्षे यदङ्गं संकीर्णमिव यजमानोऽनुतिष्ठेत्, तस्य साङ्कर्यस्य परिहाराय वेदिदाहके दावाग्नौ सक्तूनञ्जलिना जुहुयात्। मन्त्रपाठस्तु, "विश्वलोप विश्वदावस्य त्वा सञ्जुहोम्यग्धादेकोऽहुतादेकः समसनादेकः, ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यम्"(४) इति। हे 'विश्वलोप' (सर्वस्य पापस्य विनाशक), सक्तूनञ्जलिना 'विश्वदावस्य' (कृत्स्नपापदहनाय प्रवृत्तस्य) दावाग्नेरासन्नास्ये त्वां जुहोमि। अनेन होमेन सन्तुष्टा अग्नयस्त्रयः, तेषु 'एकः' इध्मे होमेनागतमत्तीति 'अग्धात्'। 'अहुतं' (होमरहितम) अत्तीति 'अहुतात्', तादृश 'एकः'। 'समसनं' (समस्तम्) अप्यत्तीति 'समसनात्', तादृश 'एकः'। 'ते' त्रयोऽप्यग्नयोऽस्माकं 'भेषजं' 'कृण्वन्तु' (क्षुधः परिहारं कुर्वन्तु)। तथा 'सदो' (निवासस्थानं) कुर्वन्तु। 'सहः' (बलं) कुर्वन्तु। 'वरेण्यं' (वरणीयं धनादिकं श्रेष्ठं) कुर्वन्तु।

कल्पः, 'अयन्नो नभसा पुर इत्येतैर्यथाब्राह्मणमुपस्थाय' इति। प्रथममन्त्रपाठस्तु "अयन्नो नभसा पुरः सꣳस्फानो अभिरक्षतु। गृहाणामसमर्त्यै बहवो नो गृहा असन्"(५) इति। 'अयम्' अग्निः पुरो वर्त्तमानो 'नभसा संस्फानः' (तेजसा वर्धमानः) 'नः' अस्मान् (अभिरक्षतु)। किमर्थं, 'गृहाणामसमर्त्यै', (समर्त्तिः

सम्यग्विनाशस्तद्राहित्यार्थं ततोऽग्निरक्षणात् 'नः' (अस्माकं) 'बह्वी 'गृहाः' 'असन्' (सन्तु)।

द्वितीयमन्त्रपाठस्तु, "स त्वन्नो नभसस्पत ऊर्जं नो धेहि भद्रया। पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि[६]" इति। 'नभसस्पते' (आकाशस्य पालक) हे वायो, 'स त्वं' 'नः' (अस्मभ्यं) 'भद्रया' (अनुग्रहरूपया) वाचा, 'ऊर्जं धेहि' (अन्नादिरसं प्रयच्छ)। किञ्चास्माकं 'नष्टम्' अन्नादिरसं, 'पुनः' 'आकृधि' (आनीय देहि)। 'पुनः' अप्यस्मभ्यं 'रयिम्' (अपेक्षितं धनम्) आनीय देहि।

तृतीयमन्त्रपाठस्तु, "देव संस्फान सहस्रपोषस्येशिषे स नो रास्वाज्यानिं रायस्पोषं सुवीर्यं संवत्सरीणां स्वस्तिम्[७]" इति। हे 'संस्फान' (सम्यगभिवृद्धियुक्त) आदित्य 'देव', त्वं 'सहस्र-पोषस्य' (सहस्रसङ्ख्यकधनपश्वादिपुष्टेः) 'ईशिषे' (प्रभुर्भवसि,) 'स' त्वं 'नः' (अस्मभ्यं) 'रास्व' (देहि)। किं किमिति? तदुच्यते, 'अज्यानिम्' (अक्षीणत्वं दारिद्र्याभावं), 'रायस्पोषं' (धनपुष्टिं), 'सुवीर्यं' (शोभनापत्यं), 'संवत्सरीणां' (तत्तत्संवत्सरसम्बद्धां) 'स्वस्तिम्' (अविनष्टनाशरूपां सम्पदं) च।

अथ वेदिदाहं विधातुं प्रस्तौति, 'अग्निर्वाव यम इयं यमी कुसीदं वा एतद्यमस्य यजमान आदत्ते यदोषधीभिर्वेदिं स्तृणाति यदनुपोष्य प्रयायाद्ग्रीवबद्धमेनममुष्मिंल्लोके नेनीयेरन्[८]" इति। "यमस्य बलिना चरामि" इत्यस्मिन् मन्त्रेऽभिधीयमानो 'यमो' 'ऽग्निः' एव, तस्य होमाधारत्वेन नियतत्वात्। 'इयं' (वेदिरूपा भूमिः) 'यमी'। यजमानो वेदिमदग्ध्वा भूमेर्निर्गत्य प्रयाणं कुर्यात्, तदानीं

यमस्य भृत्या गले रज्ज्वा बद्धमेनं यजमानं स्वर्गलोकं भ्रंशन्नयेयुः।

इदानीं दाहं विधत्ते, "यत् कुसीदमप्रतीत्तं मयीत्युपोषतीहैव सन् यमं कुसीदं निरवदायानृणः सुवर्गं लोकमेति(९)" इति। 'उपोषति' दहेदित्यर्थः। 'इहैव' (अस्मिन्नेव) जन्मनि, यज्ञप्रदेश एवावस्थितः 'सन्', 'यमं' प्रति विद्यमानं 'कुसीदं' (ऋणं) निःशेषमनेन दाहेनापाकृत्य अनन्तरमृणरहितः स्वर्गं प्राप्नोतीति।

विश्वलोपेतिमन्त्रेण होमं विधत्ते, "यदि मिश्रमिव चरेदञ्जलिना सक्तून् प्रदाव्ये जुहुयादेष वा अग्निर्वैश्वानरो यत्प्रदाव्यः स एवैनꣳ स्वदयति(१०)" इति। 'यदि' अङ्गजातं सङ्कीर्णमिव यजमानोऽनुतिष्ठेत्तस्य साङ्कर्यपरिहाराय वेदिदाहके दावाग्नौ 'सक्तून्' 'अञ्जलिना' 'जुहुयात्'। 'एषः' एव 'अग्निर्वैश्वानरः' (सर्वपुरुषसम्बद्धः), सर्वपुरुषापेक्षितव्यवहाराय पर्याप्तत्वात्। 'स एव' अग्निः सक्तुहोमेन तुष्टो मिश्रचारिणम् 'एनं' यजमानं 'स्वदयति' (स्वादूकरोति), मिश्रणदोषरहितं करोतीत्यर्थः।

अथ वेदिदाहप्रसङ्गेन बुद्धिस्थमन्यदपि किञ्चिद्दाहरूपं कर्मान्तरं विधत्ते, "अन्तां विधान्यामेकाष्टकायामपूपञ्चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेद्यदि दहति पुण्यसमं भवति यदि न दहति पापसमम्(११)" इति। एकाष्टका नाम माघकृष्णाष्टमी, सा चान्तां विधानी (प्रतिपदादितिथीनां प्रवर्त्तयित्री), सम्वत्सरनामकस्य पुरुषस्य पत्नीत्वात्। अत एवान्यत्र श्रूयते, 'एषा वै सम्वत्सरस्य पत्नी यदेकाष्टका' इति।

अथ वा गवामयने सम्वत्सरसत्रे यान्यनुष्ठेयानि कर्मा-

णि, तेषामियं प्रवर्त्तयित्री, तदारम्भकालत्वात् । अत एवान्यत्र श्रूयते, 'सम्वत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्' इति । द्विप्रस्थः शरावः, तथाविधशरावचतुष्टयपरिमितद्रव्यनिर्मितमपूपमेकाष्टकायां पक्त्वा तेनात्यन्तमुष्णेनापूपेन परेद्युः प्रातररण्ये कक्षन्दहेत्, अपूपस्योपरि उल्मुकं प्रक्षिप्य तस्योपरि जीर्णतृणं प्रक्षिपेत्* । तदेतत्सर्वं कक्षमध्ये कर्त्तव्यं । तथा कृते सति यद्ययमपूपाग्निः कृत्स्नं कक्षं दहति, तदानीं यत्कार्यमुद्दिश्येदं दहनं कृतं, तत् कार्यं पुण्यसमं भवति, सम्यक् पारङ्गच्छतीत्यर्थः । अदाहे तु पापसमन्तत्कार्यं विनश्यति ।

कक्षदहनेन यदेतदभिवृद्धिज्ञानं तदेतद्गवामयनादिप्रौढकर्मारम्भे परीक्षणीयमित्येतद्दर्शयति, "एतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्रमुपयन्ति(१२)" इति । 'एतेन' कक्षदाहरूपेण, निर्विघ्नं सम्पूर्त्तिज्ञानेन निश्चित्य दीर्घं सम्वत्सरसत्रादिकं प्रौढं कर्म पूर्वं महर्षयः प्रारभन्ते ।

अथ "अयन्नो नभसा" इत्याद्युपस्थानमन्त्रत्रयं व्याख्यातुं प्रस्तौति, "यो वा उपद्रष्टारमुपश्रोतारमनुख्यातारं विद्वान् यजते सममुष्मिंल्लोके इष्टापूर्त्तेन गच्छते अग्निर्वा उपद्रष्टा वायुरुपश्रोतादित्योऽनुख्याता तान् य एवं विद्वान् यजते सममुष्मिन् लोके इष्टापूर्त्तेन गच्छते(१३)" इति । 'इष्टं' श्रौतकर्म, 'पूर्त्तं' स्मार्त्तं कर्म, तदुभयफलेन स्वर्गलोके सङ्गच्छते । कोऽसौ ? योऽग्न्यादीनामुपद्रष्ट्रादिरूपतां ज्ञात्वा यजते, तस्येयमिष्टापूर्त्तफलसङ्गतिः ।

* प्रक्षिपयुरिति E पु० पाठः ।

अथ मन्त्रान् व्याचष्टे, "अयन्नो नभसा पुर इत्याहाग्निर्वै नभसा पुरोऽग्निमेव तदाहैतन्मे गोपायेति, स त्वन्नो नभसस्पत इत्याह वायुर्वै नभसस्पतिर्वायुमेव तदाहैतन्मे गोपायेति, देव सꣳस्फानेत्याहासौ वा आदित्यो देवः संस्फान आदित्यमेव तदाहैतन्मे गोपायेति(१४)" इति। 'पुरो'देशे 'नभसा' (ज्वालया) युक्तः अग्निर्दृश्यते, अतोऽग्निः 'नभसा पुरः' इति शब्दाभ्यां विवक्ष्यते। तादृशमग्निमेव प्रत्युपस्थाता, मदीयमेतत् कर्मफलं 'गोपायेति' प्रार्थितवान् भवति। नभसि सञ्चारेण तत्पालकत्वात् 'वायुः' एव 'नभसस्पतिः'। रश्मिभिः सर्वत्राभिवर्धमानत्वात् 'आदित्यः' एव 'देवः संस्फानः'।

"अन्नायुर्दाः" इति मन्त्रः "उरुꣳ हि राजा" (१।४।४५ अ०) इत्यस्मादनुवाकात् पूर्वं द्रष्टव्यः। "यत् कुसीदम्" इत्यादिमन्त्रास्तु तस्मादूर्द्ध्वं द्रष्टव्याः।

अत्र विनियोगसङ्ग्रहः,—

आयु,स्त्ववभृथप्रेप्सोर्होम आहवनीयके।
यत्कु,वेदिं दहेत्, तत्र विश्वसत्काहुतिर्भवेत्॥
अय,न्निभिरुपस्थानं षमणन्त्रा अष्टमे स्थिताः।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः।

---

एतं युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण। मा नः शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम[१] नमो महिम्न उत चक्षुषे ते मरुतां पितस्तदहं गृणामि। अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यं[२]। देवानामेष उपनाह आसीदपाङ्गर्भ ओषधीषु न्यक्तः। सोमस्य द्रप्समवृणीत पूषा ॥ १ ॥

बृहन्नद्रिरभवत्तदेषां[३] पिता वत्सानां पतिरघ्नियानामथो पिता महतां गर्गराणां। वत्सो जरायु प्रतिधुक्पीयुष आमिक्षा मस्तु घृतमस्य रेतः[४]। त्वाङ्गावोवृणत राज्याय त्वाꣳ हवन्त मरुतः स्वर्काः। वर्ष्मन् क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो विभजा वसूनि[५]। ऋद्धेन वा एष पशुना यजते यस्यैतानि न क्रियन्ते एष, ह त्वै समृद्धेन यजते यस्यैतानि क्रियन्ते[६] ॥ २ ॥

पूषा। क्रियन्ते एषः। अष्टौ च ॥ ९ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥ ० ॥

---

अष्टमे वेदिदाहोऽयं प्राधान्येन प्रपञ्चितः।

अथ नवमे वृषालम्भाख्यं किञ्चित्कर्माभिधीयते। कल्पः, वृषभे गोषु जीर्णे यून: कर्णमाजपेत् पिशङ्गरूपस्तन्नस्तुरीयमित्येताभ्यामथैनं गोष्वपि सृजत्येतं युवानम्' इति। 'पिशङ्गरूपः', 'तन्नस्तुरीयम्' इत्येतौ नाऽत्यौ, 'एतं युवानम्' इत्यत्यः। तत्पाठस्तु, "एतं युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण। मा नः शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम[१]" इति। हे गावो, 'वो' (युष्मभ्यम्) 'एतं युवानं' वृषभं अहं 'परि'-'ददामि' 'तेन' 'प्रियेण' सह 'क्रीडन्तीश्चरत,' 'नः' (अस्मान्) 'मा' 'शाप्त,' यतो यूयं 'जनुषा सुभागाः' (जन्मनैव सुष्टुभागवत्यः), ततोऽस्माकं शापो भवतीभिर्न कार्यः, किन्तु तरुणं दत्तवानित्यनुग्रहः कार्यः। युष्माकं प्रसादाद्वयं धनपुष्ट्या अन्नेन च 'सं'-'मदेम' (सम्यग्यथा भवति तथा हृष्टाः सम्भवेम)।

कल्पः, 'अथ जीर्णमालभते प्राजापत्यमैन्द्रं त्वाष्ट्रं वा नमो महिम्न उपाकरणेऽनुवर्त्तयते तृतीयया वपां जुहोति चतुर्थ्या हविः पञ्चम्या सौविष्टकृतम्' इति। 'एतं युवानम्' इत्यनुवाकादिमपेक्ष्य तृतीयादिव्यवहारः। तत्रोपाकरणमन्त्रपाठस्तु, "नमो महिम्न उत चक्षुषे ते मरुतां पितस्तदहं गृणामि। अनुमन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम्[२]" इति। हे 'मरुतां पितः' (देवानां जनक) प्रजापते, त्वदीयाय सृष्ट्यादिरूपाय 'महिम्ने' 'नमः'। 'उत' (अपिच), 'चक्षुषे' (दृष्टिरूपाय सर्वगोचरज्ञानाय) त्वदीयाय नमः, 'तत्' (मदीयं विवक्षितम्) 'अहं गृणामि' तुभ्यं (ब्रवीमि), तच्च

मदुक्तं त्वम् 'अनुमन्यस्व', 'सुयजा' (शोभनेन यज्ञसाधनेन वृषभेण) वयं, 'यजाम'। 'इदं' वृषभरूपं 'हव्यं', (देवानां) 'जुष्टं' (प्रियम्) 'अस्तु'।

वपाहोममन्त्रपाठस्तु, "देवानामेष उपनाह आसीदपाङ्गर्भ ओषधीषु न्यक्तः। सोमस्य द्रप्समवृणीत पूषा वृहन्नद्रिरभवत्तदेषाम्(३)" इति। 'एष' वृषभो 'देवानां' 'उपनाहो' (बन्धनहेतुः) 'आसीत्', दाम्ना बलीवर्दा इवास्मिन् वृषभे देवाः प्रीत्यतिशयेन सक्ता इत्यर्थः। स च वृषभो हुतः सन् मेघेषु 'अपां' सम्बन्धी 'गर्भो' भूत्वा पुनः 'ओषधीषु न्यक्तः' (वृष्टिरूपेणाधोमुखः पतितः)। सोऽयञ्जलरूपो गर्भः कथं सम्पन्नः? इति तदुच्यते, 'पूषा' 'सोमस्य द्रप्समवृणीत', (आदित्यः सलिलात्मनश्चन्द्रस्य द्रप्सं रश्मिभिर्गृहीतवान्) तच्च द्रप्सरूपं जलमेषां रश्मीनां सम्बन्धी। 'वृहन्' (प्रौढः) 'अद्रिः' (पर्वतसदृशः) मेघः 'अभवत्'। देवानां प्रिय एष वृषभ आहुतिरूपेण वह्नौ हुत आदित्यं प्राप्य रश्मिरूपेण चन्द्रसम्बन्धि जलं भूमौ वर्त्तमानं गृहीत्वा मेघरूपतामवलम्ब्य मेघोदरे जलरूपो गर्भो भूत्वा वृष्टिरूपेणौषधीष्वधः पतित इत्यर्थः। अनेन 'अग्नौ प्रास्ताहुतिः सम्यक्'* इत्यादिश्रुत्यर्थः सङ्गृहीता भवति।

हृदयाद्यङ्गहोममन्त्रपाठस्तु, "पिता वत्सानां पतिरघ्नियानामथो पिता महतां गर्गराणां। वत्सो जरायु प्रतिधुक्पीयूष आमिक्षा मस्तु घृतमस्य रेतः(४)" इति। ये गवां वत्साः, तेषामयं वृषभः 'पिता', 'अघ्नियानां' (गवाम्) 'पतिः', न केवलमिदानीन्तनानां

* सम्यगिति। पु० पाठः।

बाल्लानां वत्सानां पिता, 'अथो' (अपि च), 'महतां गर्गराणां' 'पिता', गभीरध्वनियुक्ता बहवो वृषभा गर्गरास्ते च शरीरवृद्ध्या महान्तः, पूर्वं ब्रह्माग्रपादानां महान्तो वृषभाः संयताः, तेषामप्ययं पिता। किञ्च गवामुदरे गर्भरूपो यो 'वत्सः' यच्च जरायुरूपं गर्भाधिकरणं, 'यच्च' 'प्रतिधुक्' (दोहनपात्रस्थन्दुग्धं,) यच्च 'पीयूषः' (उधस्थममृतसमानं चोरं), या च 'आमिक्षा' रन्धनेन निष्पन्ना, यच्च 'मस्तु' (नवनीतं), यदपि पक्वं 'घृतं', तत्सर्वम् 'अस्य' (वृषभस्य) रेतः, एतदीयमारभूतम्* रसपरिणामरूपम्। एवम्-महाभागो वृषभो देवांस्तर्पयत्वित्यभिप्रायः।

सोविष्टकृतमन्त्रपाठस्तु, "त्वां गावोऽवृणत राज्याय त्वाꣳ हवन्त मरुतः स्वर्काः। वर्ष्मन् क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो विभजा वसूनि(५)" इति। हे वृषभ, 'गावः' सर्वाः 'त्वां' 'राज्याय' 'अवृणत', (अस्माकमयं राजा भवत्विति वृतवत्यः)। 'स्वर्काः' (सुष्ठु अर्चनीयाः) 'मरुतो' (देवाः) 'त्वां' 'हवन्त' (त्वामेव हविस्स्वरूपमाह्वयन्ति)। 'क्षत्रस्य' (क्षत्रियजातेः) 'ककुभि' (ककुत्समाने प्रधानभूते) 'वर्ष्मन्' (शरीरे) 'शिश्रियाणः' (आश्रित्य बलरूपेणावस्थितः), क्षत्रियजातौ प्रधानभूते राजविग्रहे त्वमेव 'बलरूपेणावस्थितोऽसि ; यथा वृषभस्य सर्वेषु पशुषु बलाधिक्यं, राजविग्रहस्य सर्वनियामकत्वं दृश्यत इति राजविग्रहेऽयं वृषभः स्थित इत्युपचर्यते। 'ततो' राजसदृशस्त्वम् 'उग्रो' 'भूत्वा' 'नः' (अस्मदर्थं) शत्रूणां 'वसूनि' तेभ्यो 'विभज'।

---

* एतदीयसारभूतरसं परिणामरूपमिति B, E, एवं J, पु॰ पाठः।

"एतं युवानम्" इत्यादिभिर्मन्त्रैः साध्यानि यानि कर्माणि, तानि विधत्ते, "वृद्धेन वा एष पशुना यजते यस्यैतानि न क्रियन्ते एष ह त्वै (तु वै) समृद्धेन यजते यस्यैतानि क्रियन्ते[१]" इति। 'यस्य' यजमानस्य 'एतानि' अङ्गानि 'क्रियन्ते', 'एष' यजमानः, सर्वाङ्गसमृद्धेन पशुना यागं करोति।

अथ विनियोगसङ्ग्रहः—

गोयूथे जीर्णवृषभस्यालम्भं यदि वाञ्छति।
तदा युवानं वृषभन्त्वेतमिति योजयेत्॥
नमो, जीर्णमुपाकुर्यात्, देवानान्तदुपाकृतिः।
पिता,-ऽङ्गहोम,-स्त्वाङ्गावः स्विष्टकृत्यश्च वर्णिताः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः॥०॥

---

सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः। बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं जुहोतु[१]। यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी। अङ्गान्यह्रुता यस्यै तां देवैः समजीगमं[२]। आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद। भूम्याश्चतस्रः प्रदिशस्ताभिरा वर्तया पुनः[३]। वि ते भिनद्मि तकरीं वि योनिं वि गवीन्यौ वि॥ १॥

मातरञ्च पुत्रं च विगर्भं च जरायु च(४)। बहिस्ते अस्तु बालिति(५)। उरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भ(६)। एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुवनानु प्रथताꣳ स्वाहा(७)। मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां। पिपृतान्नो भरीमभिः(८)॥ २ ॥

गवीन्यौ वि। चतुश्चत्वारिꣳशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥ ० ॥

नवमे जीर्णवृषभालम्भ उक्तोऽनुवाकके*।

अथ दशमे पशुप्रायश्चित्तविशेष उच्यते। कल्पः, 'यद्यष्टापदीत्यनुबुध्येत, धाता रातिः सूर्या देव इत्याहुती हुत्वा' इति। यद्यतिरात्रादिषु पशुविकृतिभूतायां छाग्यां संज्ञप्तायामियमष्टापदी गर्भिणीति बुध्येत, तदा द्वे आहुती जुहुयात्। पाठस्तु,

* E० पुस्तके पाठान्तरं वर्त्तते, यथा, "नवमे जीर्णवृषभमन्त्रा नैमित्तिकाः श्रुताः। अथ दशमेऽनुवाके उपाकृतायां वशायां गर्भदर्शने सति तद्विषया मन्त्रा उच्यन्ते। कल्पः, 'यद्यष्टापदीत्यनुबुध्येत धाता रातिः सूर्या देवो दिविषद्भ्य इत्याहुती हुत्वा' इति, तत्र धाता रातिरितिमन्त्रः प्रथमकाण्डे समाम्नातः व्याख्यातश्च। अन्त्यमन्त्रपाठस्तु "सूर्या-जुहोतु" इति। हे गर्भिणि वशे पूर्वं बन्ध्यात्वबुद्ध्या हता,

"सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः। बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं जुहोतु[१]" इति। 'सूर्यो देवो' दिविषदामभिवृद्ध्यर्थं, 'धाता' 'देवः' 'क्षत्राय' (तदभिवृद्ध्यर्थं), 'वायुः' प्रजाभिवृद्ध्यर्थं, 'बृहस्पतिः' प्रजापतिप्राप्त्यर्थं 'ज्योतिष्मतीं' त्वां 'जुहोतु'।*

कल्पः, 'अथैनामभिमन्त्रयते यस्यास्ते' इति। पाठस्तु, "यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी। अङ्गान्यह्रुता यस्यै तां देवैः समजीगमम्[२]" इति। 'यस्याः ते' 'हरितो' (हृतसारो हरितवर्णो वा) 'गर्भः' 'योनिर्हिरण्ययी' (हृतसारा हरिद्वर्णा वा)। 'यस्यै' (यस्याः) 'अङ्गानि' 'अह्रुता' (अपिहिता), इमां 'तां' देवैः सङ्गतां करोमि§।

कल्पः, 'आ वर्त्तन वर्तयेति प्रदक्षिणं गर्भमावृत्य' इति। पाठस्तु, "आ वर्त्तन वर्त्तय नि निवर्त्तन वर्त्तयेन्द्र नर्दबुद। भूम्याश्चतस्रः प्रदिशस्ताभिरावर्त्तया पुनः[३]" इति। 'वर्त्तन' (गर्भस्य प्रवर्त्तक) हे देव, गर्भम् 'आ'-'वर्त्तय'। हे 'निवर्त्तन' (गर्भस्य निर्गमकृत्) देव, गर्भं 'नि'-'वर्त्तय' (निर्गतं कुरु। हे 'इन्द्र' (ईश्वर) 'नर्दबुद' (गर्भस्य

---

* पश्चात् तत्र गर्भो दृष्टः, हे तथाविधे, ये देवा दिवि सीदन्ति तेषामर्थं सूर्यो देवः त्वां जुहोतु, धाता सर्व्वस्य जगतो विधाता क्षत्राय राजाभिवृद्धये त्वां जुहोतु, वायुः प्रजाभ्यः प्रजाभिवृद्धये त्वां जुहोतु। बृहस्पतिः प्रजापतये प्रजातुष्ट्यर्थं ज्योतिष्मतीं दीप्तिमतीं त्वां जुहोतु" इति।

§ अत्रापि E॰ पुस्तके पाठान्तरं वर्त्तते, यथा, "हे गर्भिणि वशे यस्यास्तव गर्भो हरितः निःसारत्वेन हरितवर्णो जातः। अथो अपि च, योनिर्हिरण्ययी निःसारत्वेन विकृता हिरण्यवर्णा दृश्यते। किञ्च यस्यै यस्यास्तव अङ्गानि मुखपादरूपा अवयवाः अह्रुता अकुटिलानि, निर्जीवत्वेन सङ्कोचयितुमशक्यतया भूमौ प्रसारितानीत्यर्थः। तां तथाविधां त्वां देवैः समजीगमं संयोजितवानस्मि" इति॥

शब्दयितः, निशामक) पूर्वान्वित-'भूम्याः' 'याश्चतस्रः' प्रकृष्टा 'दिशः', ताभिः 'पुनः' गर्भम् 'आवर्त्तय' तद्व्याप्तं कुर्वित्यर्थः* ।

कल्पः, 'वि ते भिनद्मीति गर्भमाच्छिनत्ति' इति। पाठस्तु, "वि ते भिनद्मि तकरीं वि योनिं वि गवीन्यौ वि। मातरञ्च पुत्रं च वि गर्भञ्च जरायु च[४]" इति। हे वशे 'ते' (तव) 'तकरीं' 'वि'-'भिनद्मि' (विच्छिनद्मि), 'योनिं' च 'वि' भिनद्मि। 'गवीन्यौ' (वृषणस्थानीयौ योन्यन्तर्गतगतिविशेषनिमित्तभूतौ), प्रवर्त्तकौ 'मातरं' 'गर्भञ्च जरायु च' 'वि'-'भिनद्मि' (विशेषयामि)‡ ।

कल्पः, 'बहिस्ते अस्तु बालित्यन्तरा सक्थिनी गर्भं निरस्य' इति । पाठस्तु, "बहिस्ते अस्तु बालिति[५]" इति। हे 'बाल्'(बालहेतुप्राणवृत्तिरूप) आत्मा 'बहिः' सर्वव्यापी 'अस्तु' इति विभिनद्मीति पूर्वच्च हेतुः‡‡।

---

* E० पुस्तके अत्रापि विभिन्नः पाठो वर्त्तते, यथा, हे वर्त्तन परिधापयितुं शक्त इन्द्र, आवर्त्तय परिभ्रामणेन मातुरवयवेभ्यः, शिथिलावयवं गर्भं कुरु। किञ्च हे निवर्त्तन निर्गमयितुं शक्त इन्द्र, निवर्त्तय गर्भं बहिर्निर्गमय। हे नर्द्बुद वृष्टिहेतुतया नर्दैर्गर्ज्जितैः, बुद्बुदैरुपेत इन्द्र, भूम्याः प्रदिशः प्रधानभूता दिशो या चतस्रः सन्ति, ताभिर्दिग्भिरेनं गर्भं पुनरावर्त्तय सर्व्वासु दिक्षु यथा नेतुं शक्यते तथा कुर्वित्यर्थः।

‡ निःशेषयामि इति J० पु० पाठः। अत्रापि E० पुस्तके विभिन्नः पाठः, यथा, "हे वशे ते तव तकरीं विभिनद्मि, तके गर्भस्य निवासो यस्याः, गुल्मरूपायामावृतौ, सेयं तकरी,तां विशेषेण विच्छिनद्मि। मातरं च त्वां पुत्रं वा गर्भस्थितं वत्सं विभिनद्मि। गर्भो मुखपादसङ्कोचेन पीडितः, तस्यापादकमन्तर्वेष्टनं जरायुशब्देनोच्यते। तदुभयं विभिनद्मि, पूर्व्वोक्ता तकरी बहिर्वेष्टनमिति।

‡‡ अत्र E०पुस्तके, "अत्र मन्त्रे श्रौत इतिशब्दः प्रकाराभिनयार्थः। हे वशे अनेन प्रकारेण ते तव वत्सो निर्गतोऽस्तु" इति पाठः॥

कल्पः, 'उरुद्रप्सो विश्वरूप इन्दुरिति गर्भरसाय पात्रमुपो-हति' इति। पाठस्तु, "उरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भम्[६]" इति। 'उरुद्रप्सो' (बहुसारावयवः) 'विश्वरूपो' (नानारूपः), 'इन्दुः' (शुक्रः), 'पवमानः' (शुद्धरूपः) 'धीरः' (स्थिरः), ईदृशो यः प्रजापशुरूपोऽवयवसङ्घात 'आनञ्ज' (गच्छतु) 'गर्भं' जननान्तरमित्यर्थः* ।

कल्पः, 'एकपदी द्विपदीति पुरस्तात्स्विष्टकृतो जुहोति' इति। आज्यमित्यर्थः। पाठस्तु, "एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुवनाऽनु प्रथताꣳ स्वाहा[७]" इति। एषा वशा एकपद्यादिरूपा भुवनानि भूतजातान्यनुक्रमेण 'प्रथताम्'† ।

---

* अत्रापि E० पुस्तके पाठान्तरम् "कल्पः, 'शूले प्रणीय शामित्रे निहत्य अपयत्युरुद्रप्सो विश्वरूप इन्दुरिति गर्भरसा यथापात्रमुपो-हति' इति। तीक्ष्णाग्रे शूले तं गर्भमासज्य शामित्राग्नेरुपरि धृत्वा तदाश्रयति। तदानीं स्रवतो रसस्य धारणाय पात्रोपोहनम्। पाठस्तु, "उपद्रप्सोः- गर्भम्" इति। उपद्रप्सो बहुविन्दूपेतोऽवयवसङ्घातः। विश्वरूपो मुखपादादिरूपेण नानारूपः। इन्दुः चन्द्रवत् निर्मलः पवमानो देवप्रियत्वेन शुद्धः तद्रूपः। धीरो घनीभावेन स्थिरः। सदृशोऽवयवसङ्घातः गर्भं आनञ्ज वत्साकारं व्यक्तीचकार। अथ वा उपद्रप्सो बहुलो रसविन्दुः उक्तविशेषणविशिष्टो गर्भं आनञ्ज वत्सं स्निग्धीचकार" इति ॥

† अत्र E० पु० पाठो यथा, "भवत्वेयं वशा अष्टभिः पादैरुपेता, तत्राष्टसंख्यायामेकादिसंख्यान्तर्भावादेकपदी इत्यादिनिर्देशः। एकः पादो यस्याः सेयमेकपदी। एवं द्विपदीत्यादि द्रष्टव्यम्। तादृशी वशा भुवना सर्गादिलोकेषु अनुप्रथताम्, क्रमेण प्रस्थिता भवन्तु। रसरूपमिदं हविः स्वाहा हुतमस्तु" इति ॥

०कल्पः, 'गर्भं पुरोडाशमन्त्रेणोत्तरेण गार्हपत्यस्य शामित्रस्य वा शीते भस्मन्युपोह्य मही द्यौरिति शीतेन भस्मनाऽभिसमूह्य' इति*। पाठस्तु, "मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां। पिपृतां नो भरीमभिः(८)" इति। महती 'द्यौः' 'पृथिवी' च 'इमम्' 'यज्ञं' 'मिमिक्षतां' (आसिञ्चतां) 'नः' (अस्मांश्च) 'भरीमभिः'(भरणप्रकारैः) 'पिपृतां' (पालयताम्)।

अत्र विनियोगसंग्रहः,—

सूर्य्या, हुत्वाज्यङ्गिण्या, यस्याः, इत्यनुमन्त्रणम्।
आ वर्त्त, गर्भमावृत्य, वि ते, गर्भं छिनत्ति हि।
बहि,-र्गर्भं निरस्योर्व्वा,-रन्तरावीतिभाजनम्।
एक, होमो, मही, भस्माच्छादनं गर्भडाशयोः।
अनुवाके तु दशमे मन्त्रा अष्टावुदीरिताः†।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः॥ ० ॥

---

* "अभिसमूहनं गर्भस्याच्छादनम्" इति। अधिकः पाठः E० पुस्तके। अन्यत् प्रायः समानम्॥

† E०पुस्तके पाठः उपाकृतवशायाश्चेत् गर्भो मन्त्रास्तदा अमी। सूर्य्या हुत्वेति यस्या,-स्तां अपित्वावर्त्तनेत्यतः। गर्भं एष्यावृत्य वि ते, छित्वोत्त्वं बहिरित्यतः। निःसार्य्योर्व्वीतीरेत् पात्रमेकेति रसहोमकः। महीत्याच्छादयेत् गर्भमष्टमन्त्राः प्रकीर्त्तिता" इति॥

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती। उक्थं मदश्च शस्यते[१]। अयं वाम्परिषिच्यते सोम इन्द्राबृहस्पती। चारुर्मदाय पीतये[२]। अस्मे इन्द्राबृहस्पती रयिन्धत्तꣳ शतग्विनं। अश्वावन्तꣳ सहस्रिणं[३]। बृहस्पतिर्नः परिपातु पश्चादुतोत्तरस्मादधरादाघयोः इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु[४]। वि ते विश्वग्वातजूतासो अग्ने भामासः॥१॥

शुचे शुचयश्चरन्ति। तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः[५]। त्वामग्ने मानुषीरीडते विशो होत्राविदंविविचिꣳरत्नधातमं। गुहासन्तꣳ सुभग विश्वदर्शतन्तुविष्मणसꣳ सुयजं घृतश्रियं[६]। धाता ददातु नो रयिमीशानो जगतस्पतिः। स नः पूर्णेन वावनत्[७]। धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनञ्जजान। धाता पुत्रं यजमानाय दाता॥२॥

तस्मा उ हव्यं घृतवद्विधेम[८]। धाता ददातु नो रयिं प्राचीं जीवातुमक्षितां। वयं देवस्य धीमहि सुमतिꣳ सत्यराधसः[९]। धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे। तस्मै देवा अमृताः संव्ययन्तां विश्वे देवासो अदितिः सजोषाः[१०]। अनु नोद्यानुम-

तिर्यञ्चं देवेषु मन्यतां। अग्निश्च हव्यवाहनो भवतान्दाशुषे मयः(११)। अन्विदनुमते त्वम्॥ ३॥

मन्यासै शञ्च नः कृधि। क्रत्वे दक्षाय नो हिनु प्र ण आयूꣳषि तारिषः(१२)। अनु मन्यतामनुमन्यमाना प्रजावन्तꣳ रयिमक्षीयमाणं। तस्यै वयꣳ हेडसि मापि भूम सा नो देवी सुहवा शर्म यच्छतु(१३)। यस्यामिदं प्रदिशि यद्विरोचतेनुमतिं प्रति भूषन्त्यायवः। यस्या उपस्थ उर्वन्तरिक्षꣳ सा नो देवी सुहवा शर्म यच्छतु(१४)॥ ४॥

राकामहꣳ सुहवाꣳ सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना। सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरꣳशतदायमुक्थ्यं(१५)। यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपागहि सहस्रपोषꣳ सुभगे रराणा(१६)।सिनीवालि या सुपाणिः(१७।१८) कुहूमहꣳसुभगां विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि। सा नो ददातु श्रवणं पितॄणान्तस्यास्ते देवि हविषा विधेम(१९)। कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषश्चिकेतु। सन्दाशुषे किरतु भूरि वामꣳ रायस्पोषञ्चिकितुषे ददातु॥५॥

भामासः। दाता। त्वम्। अन्तरिक्षं सा नो देवी सुहवा शर्म यच्छतु। अवरणम्। चतुर्विंशतिश्च ॥ ११ ॥

अग्ने तेजस्विन्। वायुः। वसवस्त्वा। एतद्वा अपां नामधेयं। वायुरसि प्राणो नाम। देवा वै यद् यज्ञेन। प्रजापतिर्देवासुरान्। आयुर्दा। एतं युवानम्। सूर्यो देवः। इदं वाम्। एकादश ॥ ११ ॥

अग्ने तेजस्विन्। वायुरसि। छन्दसां वीर्यम्। मातरश्च। षट्त्रिंशत् ॥ ३६ ॥

हरिः ओम् ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

॥ ० ॥ तृतीयः प्रपाठकः सम्पूर्णः ॥ ० ॥

---

दशमे पाशुकं गर्भप्रायश्चित्तमुदीरितम्* ।

अथैकादशे याज्याः, तत्रैन्द्राबार्हस्पत्यपुरोनुवाक्या, 'इदं वामास्ये-इति यं कामयेत राजन्यमनपोध्यो जायेत'† इति चरौ। पाठस्तु, "इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती। उक्थं मदश्च शस्यते(१)" इति । हे 'इन्द्राबृहस्पती,' 'इदं' 'हविः' 'वाम्' 'आस्ये' 'प्रियम्' अस्तु, हूयते वा। 'उक्थं'(शस्त्रं), 'मदः' (हर्षहेतुः) प्रतिगरश्च 'शस्यते' युवामितीत्यर्थः।

तत्रैव याज्या, "अयं वाम्परिषिच्यते सोम इन्द्राबृहस्पती। चारुर्मदाय पीतये(२)" इति। 'अयं' (हवीरूपः) 'सोमो' 'वाम्परिषिच्यते' (युवाभ्यामर्थे परित्यज्यते)। हे 'इन्द्राबृहस्पती', 'चारुः' 'अयं' 'वां' (युवयोः) 'पीतये' 'मदाय' च 'परिषिच्यते'।

तत्रैव विकल्पिता पुरोनुवाक्या, "अस्मे इन्द्राबृहस्पती रयिं धत्तꣳ शतग्विनं। अश्वावन्तꣳ सहस्रिणम्(३)" इति। हे 'इन्द्राबृहस्पती', युवामस्मभ्यं 'शतग्विनम्' 'अश्वावन्तं सहस्रिणं' च 'रयिन्धत्तम्'।

तत्रैव याज्या, "बृहस्पतिर्नः परिपातु पश्चादुतोत्तरस्मादधरादघायोः। इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु(४)" इति। 'बृहस्पतिः' 'नः' (अस्मान्) 'पश्चात्' 'उत' (अपि च)'उत्तरस्मात्' 'अधरात्' च'अघायोः' (हिंसकात्) 'पातुः'। 'इन्द्रः'

---

* अत्रापि E० पुस्तके पाठान्तरं वर्त्तते विस्तरभिया नोद्धृतम्।

† 'राजन्यमनपोब्ध्दे' इति J० पु० पाठः।

पुरस्तादुत मध्यतो नः' पातु। 'सखा सखिभ्यः' (अस्मभ्यं सखा) बृहस्पतिरिन्द्रस्य, 'वरिवः' (सुखं) 'कृणोतु'।

'यस्याहिताग्नेरन्यैरग्निभिरग्नयः सꣳसृज्यन्ते' इत्यत्र विविचीष्टौ पुरोनुवाक्या, "वि ते विष्वग्वातजूतासो अग्ने भामासः शुचे शुचयश्चरन्ति। तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः(५)" इति। हे 'अग्ने' 'शुचे' 'ते' 'शुचयः' (दीप्तयः) 'विष्वक्' 'वि'-'चरन्ति'(सर्वतः)। कीदृश्यः ? 'वातजूतासः' (वायुना प्रेरिताः), 'भामासः' (अन्याग्निमिश्रणेन क्रोधनशीलाः), 'तुविम्रक्षासः' (बहूनां शोधकाः), 'दिव्याः' (द्युलोकस्थानार्हाः), 'नवग्वाः' (नूतनगतयः) नित्याभिनवा इत्यर्थः। 'धृषता रुजन्तः' (धर्षणेन बलात्कारेण वैगुण्यभङ्गं कुर्वत्यः)। तथाविधा दीप्तिविशेषाः 'वनाः' (अस्मदीयानि वननीयानि हवींषि) 'वनन्ति' (संभजन्ताम्)।

तत्रैव याज्यामाह, "त्वामग्ने मानुषीरीडते विशो होत्राविदं विविचिꣳ रत्नधातमं। गुहासन्तꣳ सुभग विश्वदर्शतं तुविष्मणसं सुयजं घृतश्रियम्(६)" इति। हे 'सुभग' (सौभाग्ययुक्त) अग्ने, 'मानुषीः' 'विशः' (मनुष्यरूपाः प्रजाः) 'त्वाम्' 'ईडते' (स्तुवन्ति)। कीदृशं त्वां ?-'होत्राविदं' (होमविशेषाभ्यभिज्ञं), 'विविचिं' (मिश्रितानामग्नीनां विवेचकं), 'रत्नधातमं' (रत्नमण्यादीनान्धनानामतिशयेन सम्पादकं), 'गुहा'-(गोप्येषु मन्त्रेषु स्थानेषु वा)-'सन्तं' (वर्त्तमानं), विश्वस्य प्रदर्शयितारं, 'तुविष्मणसं' (सुप्रवृद्धमनस्कं) 'सुयजं' (सुष्ठु यष्टुशक्यं), 'घृतश्रियं' (घृतसेविनम्)।

अथ देविकाख्यानां हविषां याज्यानुवाक्या उच्यन्ते।

तानि हवींषि, 'देविका निर्वपेत्प्रजाकामः' इत्यादौ विहितानि; तेषां स्वरूपन्तत्रैवाम्नातं, 'धात्रे पुरोडाशं द्वादशकपालन्निर्वपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुम्' इति। तत्र प्रथमे हविषि पुरोनुवाक्यामाह, "धाता ददातु नो रयिमीशानो जगतस्पतिः। स नः पूर्णेन वावनत्(७)" इति। 'धाता' (विश्वस्य धारयिता) 'जगतस्पतिः' (जगतः पालकः) 'ईशानः' (परमेश्वरः) 'नः' (अस्मभ्यं) 'रयिं' (धनं) 'ददातु', 'सः' (परमेश्वरः) 'नः' (अस्मान्) 'पूर्णेन' (समृद्धेन धनेन) 'वावनत्' (सम्भजतां) संयोजयत्वित्यर्थः।

तत्रैव याज्यामाह, "धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान। धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम(८)" इति। अयं 'धाता' 'प्रजायाः' (पुत्रादेः) 'ईशे' (ईष्टे, स्वामी भवति) 'उत' (अपि च), 'राय ईशे' (धनस्यापि स्वामी भवति), 'धाता' सर्वम् 'इदं' 'भुवनं' प्राणिजातं 'जजान' (उत्पादितवान्)। स च 'धाता' 'यजमानाय' 'पुत्रं' दास्यति, 'तस्मै उ' (तथाविधायैव देवाय) 'हव्यम्' इदं 'घृतवद्विधेम' (घृतयुक्तङ्करवाम)।

अथ तत्रैव विकल्पितामन्यां पुरोनुवाक्यामाह, "धाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम्। वयन्देवस्य धीमहि सुमतिꣳ सत्यराधसः(९)" इति। स च 'धाता' 'जीवातुम् अक्षितां' (जीवनाय पर्याप्तामक्षीणां) 'प्राचीं' (प्रकर्षेणास्मास्वनुकूलां) 'रयिं' 'नः' (अस्मभ्यं) 'ददातु'। 'सत्यराधसः' (सत्येन यज्ञेनाराधकाः) 'वयं' 'देवस्य' 'सुमतिम्' (अनुग्रहयुक्तं) चित्तं 'धीमहि' (ध्यायेम) प्रार्थयामह इत्यर्थः।

अथ तत्रैव विकल्पितामन्यां याज्यामाह, "धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे। तस्मै देवा अमृताः संव्ययन्तां विश्वे देवासो अदितिः सजोषाः(१०)" इति। स 'धाता' 'दाशुषे' (हविर्दत्तवते) यजमानाय 'वसूनि' 'ददातु'। कीदृशाय?- 'प्रजाकामाय' 'दुरोणे'(स्वगृहे) 'मीढुषे'(देवानामाज्येन सेवितवते)। 'अमृताः' (मरणरहिताः) 'विश्वे देवासः' (सर्वे देवाः), 'सजोषाः' (समानप्रीतिः) 'अदितिः', 'देवाः' च 'तस्मै' तथाविधयजमानार्थं 'संव्ययन्तां' (तद्गृहे संवृत्य अवतिष्ठन्ताम्)।

अथ द्वितीयहविषः पुरोनुवाक्यामाह, "अनु नोऽद्यानुमतिर्यज्ञन्देवेषु मन्यतां। अग्निश्च हव्यवाहनो भवतान्दाशुषे मयः(११)" इति। अथास्मिन् इयमनुमतिशब्दाभिधेया देवता 'नः' (अस्माकम्) इमं 'यज्ञं' 'देवेषु' 'अनु'-'मन्यतां' देवानामग्रे प्रशंसत्वित्यर्थः। 'हव्यवाहनो' 'ऽग्निश्च' 'दाशुषे' (हविर्दत्तवते) यजमानाय 'मयो' 'भवतां' (सुखं भावयतु)।

तत्रैव याज्यामाह, "अन्विदनुमते त्वं मन्यासै शञ्च नः कृधि। क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः(१२)" इति। हे 'अनुमते' 'त्वं' 'अन्वित्' (अन्वेव) 'मन्यासै' सर्वथा इदमनुमन्यस्वेत्यर्थः। किञ्च 'नः' (अस्मभ्यं) 'शं' 'कृधि' (सुखङ्कुरु)। 'किञ्च' 'नः' (अस्माकं) 'दक्षाय' क्रतवे (दक्षक्रतौ, समृद्धे यागे) 'हिनु' (प्रीतियुक्ता भव)। किञ्च 'नः' (अस्माकम्) 'आयूंषि' (चिरकालजीवनानि) 'प्र'-'तारिषः' (प्रकर्षेण सम्पादय)।

अथ तत्रैव विकल्पितामन्यां पुरोनुवाक्यामाह, "अनुमन्यता-

मनुमन्यमाना प्रजावन्तꣳ रयिमक्षीयमाणं। तस्यै वयꣳ हेडसि मापि भूम सा नो देवी सुहवा शर्म यच्छतु(१३)" इति। 'अनु-मन्यमाना' सेयमनुमतिर्देवी 'प्रजावन्तं' (पुत्रादियुक्तम्)'अक्षीयमाणं' (क्षयरहितं) एवं 'रयिं' (धनं, पोषम्)* 'अनुमन्यतां'। 'वयं''तस्यै' (तस्याः) अनुमतेर्देव्या 'हेडसि' (क्रोधे) स्थिता 'मा भूम'। अपि-शब्दादौदासीन्येऽपि मा भूम ; किन्त्वनुग्रह एव भूया स्म। 'सा च' 'देवी' 'सुहवा' (सुष्ठु आह्वातुं शक्या) सती 'नः' (अस्मभ्यं) 'शर्म' 'यच्छतु' (सुखं ददातु)।

अथ तत्रैव विकल्पितामन्यां याज्यामाह, "यस्यामिदं प्रदि-शि यद्विरोचतेऽनुमतिं प्रति भूषन्त्यायवः। यस्या उपस्थ उर्वन्त-रिक्षꣳ सा नो देवी सुहवा शर्म यच्छतु(१४)" इति। 'यत्' जगत् 'विरोचते' (विविधम्भासते), तत् 'इदं' जगत् 'यस्याम्' मनु-मतिदेव्यां वर्त्तते। कीदृश्यां ?-'प्रदिशि' (प्रकर्षेण दिशत्याज्ञा-पयतीति प्रदिक्, तस्यां), अनुमत्याज्ञाधीनमशेषं जगदित्यर्थः। तामिमाम् 'अनुमतिं' प्रति 'आयवः' (गन्तारः) यजमाना 'भूषन्ति' (हविर्भिरलंकुर्वन्ति) च। 'यस्या उपस्थः' (शरीरैकदेशः) तत्स्थानी-यम् 'उर्वन्तरिक्षं' (महदिदमाकाशं) विश्वव्यापित्वेन तस्या अव-स्थितत्वात्। 'सा नः'-इत्यादि पूर्ववत्।

अथ तृतीयस्य हविषः पुरोनुवाक्यामाह, "राकामहꣳ सुह-वाꣳ सुष्टुता हुवे शृणोतु नः सुभगा बोधतु त्मना। सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरꣳ शतदायमुक्थ्यम्(१५)" इति।

---

* अत्र धनपोषमिति पाठो भवितुं युक्तः।

'सुहवां'(सुखेनाह्वातुशक्यां)'राकां' देवीम् 'अहं' 'सुष्टुता' (शोभनया स्तुत्या) 'ह्वे' (आह्वयामि) 'सुभगा' (सौभाग्ययुक्ता) सा देवी 'नः' (अस्माकम्) आह्वानं 'शृणोतु'। श्रुत्वा च बुध्यतामस्मदभिप्रेतमात्मनैव। किञ्च 'अच्छिद्यमानया' (अविच्छिन्नया) सूचीसदृश्या अनुग्रहबुद्ध्या 'अपः' (कर्म) 'सीव्यतु' (निविडं करोतु) निर्दोषङ्करोत्वित्यर्थः। ततः 'शतदायं'(बहुधनं) 'उक्थ्यं' (स्तोत्रशस्त्रादिसहितं) 'वीरं' पुत्रं 'ददातु'।

तत्रैव याज्यामाह, "यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपागहि सहस्रपोषꣳ सुभगे रराणा(११)" इति। हे 'राके' तव 'याः' 'सुमतयः' 'सुपेशसः' (शोभनक्रियायुक्ताः) सन्ति, किञ्च 'याभिः' सुमतिभिः 'दाशुषे' यजमानाय 'वसूनि' 'ददासि', अथास्मिन् यज्ञे सौमनस्ययुक्ता अतीताभिः सुमतिभिरनुग्रहरूपाभिः 'नः' (अस्मान्) 'उपागहि' (अनुगृहाण)। 'सुभगे' इति देव्याः सम्बोधनम्। किङ्कुर्वती?-देवी 'सहस्रपोषं रराणा' (सहस्रसङ्ख्यायुक्तां पुष्टिन्ददती)।

अथ चतुर्थे हविषि याज्यापुरोनुवाक्ययोः प्रतीके दर्शयति, "सिनीवालि या सुपाणिः(१७।१८)" इति। 'सिनीवालि पृथुष्टुके' इति पुरोनुवाक्या,'या सुपाणिः स्वङ्गुरिः' इति याज्या। एतच्चोभयम् "अग्निना रयिमश्नवत्" इत्यनुवाके (३।१।११अ०)व्याख्यातम्।

अथ पञ्चमस्य हविषः पुरोनुवाक्यामाह, "कुहूमहꣳ सुभगां विद्मनापसमस्मिन् यज्ञे सुहवां जोहवीमि। सा नो ददातु अ-

वणं पितृणां तस्यास्ते देवि हविषा विधेम[१८]" इति। कुहूशब्दाभिधेयां देवतां (अहमस्मिन् यज्ञे) 'जोहवीमि' (भृशमाह्वयामि)। कीदृशीं?-'सुभगां' (सौभाग्ययुक्तां) 'विद्मनापसं' (विदितकर्माणम्) 'सहवां' (सुखेनाह्वातुशक्यां) 'सा' कुहूदेवी 'नः' 'पितृणाम्' (अस्मदादीनां पूर्वेषां) 'श्रवणं' (श्रोतुं योग्यं) यशः 'ददातु'। हे 'देवि' 'तस्यास्ते' (तथाविधायास्तव) 'हविषा' 'विधेम' (परिचर्यां करवाम)।

तत्रैव याज्यामाह, "कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषश्चिकेतु। सन्दाशुषे किरतु भूरि वामꣳ रायस्पोषञ्चिकितुषे ददातु[१९]" इति। इयं 'कुहूः'देवी 'नः' (अस्मदीयस्य) 'अस्य' 'हविषः' 'चिकेतु' (सारज्ञानातु)। कीदृशी कुहूः?-'देवानां' सम्बन्धि यदमृतं दर्शपूर्णमासादिहवीरूपम्, तस्य 'पत्नी' (पालयित्री),'हव्या' (आह्वाने पृच्छार्हा)। तादृशी देवी 'दाशुषे' यजमानाय 'भूरि' (भूयिष्ठं) 'वामं' (वननीयम् पारलौकिकफलं) 'सं'-'किरतु' (सम्यग्ददातु)। किञ्च 'चिकितुषे' (त्वदीयमहिमानं ज्ञातवते) यजमानाय 'रायस्पोषं' 'ददातु' (धनपुष्टिं सम्पादयतु)।

अत्र विनियोगसङ्ग्रहः,—

भवेदिदं वामित्यैन्द्राबार्हस्पत्ये चतुष्टयम्।
वि ते विविचिमद्यागे धातेत्येतच्चतुष्टयम्॥
देविकाख्याद्ययागे स्यादन्वित्यनुमते चरौ।
चतुष्टयं स्याद्राकान्तु राकादेव्याश्चरौ तथा॥

सिनीवालु सिनीवाल्याः कुहूङ्कुहाश्च विंशतिः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्य्यविरचिते माधवीये* वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः ॥

समाप्तश्च तृतीयः प्रपाठकः† ॥

---

* माधवीये इति J पुस्तके नास्ति ।

† एवमेव सर्व्वत्र आदर्शपुस्तकेषु पाठः। केचित् अत्र "इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीय-यजुःसंहिताभाष्ये तृतीयकाण्डे तृतीयप्रपाठकः सम्पूर्णः" इति पाठं मन्यन्ते ॥ ० ॥

## अथ तैत्तिरीय-संहिताभाष्ये

### तृतीयकाण्डे चतुर्थप्रपाठके

#### प्रथमोऽनुवाकः।

हरिः ॐ।

वि वा एतस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते सूर्यो देवो दिविषद्भ्य इत्याह बृहस्पतिना चैवास्य प्रजापतिना च यज्ञस्य व्यृद्धमपि वपति(१) रक्षाꣳसि वा एतत् पशुꣳ सचन्ते यदेकदेवत्य आलब्धो भूयान् भवति यस्यास्ते हरितो गर्भ इत्याह देवत्रैवैनाङ्गमयति रक्षसामपहत्या(२) आवर्तन वर्तयेत्याह ॥ १ ॥*

ब्रह्मणैवैनमावर्तयति(३) वि ते भिनद्मि तकरीमित्याह यथायजुरेवैतत्(४) उरुद्रप्सो विश्वरूप इन्दुरित्याह प्रजा वै पशव इन्दुः प्रजयैवैनं पशुभिः समर्द्धयति(५) दिवं वै यज्ञस्य व्यृद्धं गच्छति पृथिवीमतिरिक्तं तद्यन्न शमये-

---

* अयमनुवाको ब्राह्मणरूपः।

द्रातिमाच्छैद्यजमानो मही द्यौः पृथिवी च न इति॥
॥ २ ॥

आह द्यावापृथिवीभ्यामेव यज्ञस्य व्यृद्धञ्चातिरिक्तञ्च शमयति नातिमाच्र्छति यजमानो[६] भस्मनाभिसमूहति स्वगाकृत्या अथो अनयोर्वा एष गर्भोऽनयोरेवैनं दधाति[७] यदवद्येदति तद्रेचयेद्यन्नावद्येत्पशोरालब्धस्य नावद्येत्पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यत् पुरस्ताद्वै नाभ्यै ॥ ३ ॥

प्राण उपरिष्टादपानो यावानेव पशुस्तस्यावद्यति[८] विष्णवे शिपिविष्टाय जुहोति यद्वै यज्ञस्यातिरिच्यते यः पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यतिरिक्तस्य शान्त्यै[९] अष्टापृद्धिरण्यं दक्षिणाष्टापदी ह्येषात्मा नवमः पशोराप्त्यै[१०] अन्तरकोश उष्णीषेणाविष्टितं भवत्येवमिव हि पशुरुल्बमिव, चर्मेव मांसमिवास्थीव यावानेव पशुस्तमाप्त्वावरुन्धे[११] यस्यैषा यज्ञे प्रायश्चित्तिः क्रियत इष्ट्वा वसीयान् भवति[१२] ॥ ४ ॥

---

* व्यृद्धते इति J एवं मू० पु०पाठः।

ग 2

वर्तयेत्याह। न इति। वै नाभ्यै। उल्वमिव। एकविꣳशतिश्च ॥ १ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके तृतीयेऽपि होमशेषः कियानपि।
उक्तः, कर्मान्तरं किञ्चिदपि तत्रोपवर्णितम् ॥
प्रपाठके चतुर्थे तु किञ्चिन्नैमित्तिकं तथा।
पश्विष्टिर्दर्विहोमाश्च वाच्याः, काम्याश्च केचन ॥

तत्राद्येनानुवाकेन वशागर्भस्य दर्शननिमित्ताः पूर्वोक्ता मन्त्रा व्याख्यायन्ते। तत्र प्रथममन्त्रगतयोर्बृहस्पतिप्रजापतिशब्दयोस्तात्पर्यं दर्शयति, "वि वा एतस्य यज्ञ ऋध्यते, यस्य हविरतिरिच्यते, सूर्यो देवो दिविषद्भ्य इत्याह बृहस्पतिना चैवास्य प्रजापतिना च यज्ञस्य व्यृद्धमपि वपति[१]" इति। 'यस्य' यजमानस्य 'हविरतिरिच्यते' (अधिकं भवति); वशायाः शरीरमेकं हविष्ट्वेन सङ्कल्पितं, तत्र गर्भे सति वपाद्याधिक्यं हविरतिरेक इत्युच्यते। ईदृशातिरेकवत 'एतस्य' यजमानस्य 'यज्ञो' 'वि'-'ऋध्यते' एव (विगुण एव भवति)। तत्र, 'सूर्यो देवः' इतिमन्त्रेण होमे सति एतन्मन्त्रोक्ताभ्यां बृहस्पतिप्रजापतिभ्यां 'यज्ञस्य व्यृद्धम् अपि' 'वपति' (वैगुण्यं समादधाति)।

अनुमन्त्रणमन्त्रे, 'देवैः समजीगमम्' इत्यस्यांशस्य तात्पर्यं दर्शयति, "रक्षाꣳसि वा एतत्पशुꣳ सचन्ते यदेकदेवत्य आलब्धो भूयान् भवति, यस्यास्ते हरितो गर्भ इत्याह देवत्रैवैनां गमयति रक्षसामपहत्यै"(१) इति। 'एकदेवत्य आलब्धः' (एकां देवतामुद्दिश्योपाकृतः) पशुर्गर्भधारणेन 'भूयान् भवति' इति 'यत्', एतेन 'वै' कल्केन 'रक्षांसि' समवयन्ति। तत्परिहाराय, 'यस्यास्ते' इत्यभिमन्त्रणेन कृतेन 'तां देवैः समजीगमम्' इत्युक्तत्वाद्देवेषु 'एवैनां' वशां प्रापितवान् भवति। ततो रक्षांस्यपहन्यन्ते।

लौकिकस्य गर्भपर्य्यावर्त्तनस्य व्यावृत्तये मन्त्रेणैव तत्पर्यावर्त्तनमित्येतद्दर्शयति, "आवर्तन वर्त्तयेत्याह ब्रह्मणैवैनमावर्त्तयति(२)" इति।

उल्वच्छेदनमन्त्रस्य स्पष्टार्थतां दर्शयति, "वि ते भिनद्मि तकरीमित्याह यथायजुरेवैतत्(४)" इति।

द्रप्स*धारणार्थपात्रोपोहनमन्त्रगतस्येन्दुशब्दस्य तात्पर्यं दर्शयति, "उरुद्रप्सो विश्वरूप इन्दुरित्याह प्रजा वै पशव इन्दुः प्रजयैवैनं पशुभिः समर्द्धयति(५)" इति। 'इदि परमैश्वर्ये' इत्यस्माद्धातोरुत्पन्न इन्दुशब्दः। प्रजानां पशूनाञ्चैश्वर्यरूपत्वादिन्दुत्वम्, अत इन्दुशब्दप्रयोगेण प्रजादिभिरेतं रसं† समृद्धं करोति।

तस्याभिसमूहनमन्त्रे‡ द्युशब्दस्य पृथिवीशब्दस्य च तात्पर्यं दर्शयति, "दिवं वै यज्ञस्य व्यृद्धं गच्छति पृथिवीमतिरिक्तं तद्यन्न

---

* रस इति E पु॰ पाठः।

† अनन्तरसमिति E पु॰ पाठः। एनं तरसमिति J पु॰ पाठः।

‡ तस्याभिः समूहनमन्त्रे इति E पुस्तकं विना सर्व्वत्रैव पाठः।

शमयेदार्त्तिमार्च्छेद्यजमानो मही द्यौः पृथिवी च न इत्याह द्यावापृथिवीभ्यामेव यज्ञस्य व्यृद्धञ्चातिरिक्तञ्च शमयति नार्त्तिमार्च्छति यजमान इति(६)" इति। 'यज्ञस्य' सम्बन्धि यदङ्गं 'व्यृद्धं', (न्यूनं) तत् 'दिवम्' एव 'गच्छति', यत् 'अतिरिक्तं' तत् 'पृथिवीं' गच्छति। तथा सति 'तत्' यदुभयं 'न शमयेत्' तदा 'यजमानः' 'आर्त्तिं' प्राप्नुयात्। अतो मन्त्रे 'द्यौः पृथिवी' इति-प्रयोगात्ताभ्यां तदुभयं शमयित्वा 'यजमानः' 'आर्त्तिं' न प्राप्नोति।

अथ विधत्ते, "भस्मनाभिसमूहति स्वगाकृत्या अथो अनयोर्वा एष गर्भोऽनयोरेवैनं दधाति(७)" इति। कथं नाम द्यावापृथिवीभ्यां गर्भोऽयमात्मसात् क्रियेतेति विचार्य, तस्मै स्वगाकृत्यै शीतेन भस्मना गर्भमाच्छादयेत्। किञ्च 'एष गर्भो' 'ऽनयोः' (द्यावापृथिव्योरेव) समुत्पन्नः, अतः अनेन मन्त्रेण भस्माच्छादने सति 'अनयोः' द्यावापृथिव्योः 'एनं' गर्भं स्थापयतीति।

यदुक्तं सूत्रकारेण 'पशोर्देवतान्यवद्यन् गर्भस्य पुरस्तान्नाभ्या अन्यदवदाय दैवतेष्ववदधाति उपरिष्टादन्यत्सौविष्टकृतेषु' इति; तदेतद्विधत्ते, "यदवद्येदति तद्रेचयेद्यन्नावद्येत्पशोरालब्धस्य नावद्येत्पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यत्पुरस्ताद्वै नाभ्यै प्राण उपरिष्टादपानो यावानेव पशुस्तस्यावद्यति(८)" इति। यदि गर्भस्य हृदयाद्यङ्गम् 'अवद्येत्', तदा पशुहृदयाद्यपेक्षया हविरतिरिक्तं भवेत् यदि, तद्दोषपरिहाराय 'नावद्येत्', तदानीम् 'आलब्धस्य' 'पशोः' अवदानन्न कृतं स्यात्। अत उभयदोषपरिहाराय 'नाभ्याः' 'पुरस्तात्', किञ्चिदङ्गमवद्येत्; 'उपरिष्टात्' 'अन्यत्' किञ्चित्

'अवद्येत्'। एवं सति 'यावानेव पशुः' तत्सर्वमवत्तं भवति। तत्कथमिति, तदुच्यते,—तिरश्चां हि नाभ्याः 'पुरस्तात्' 'प्राणो' (मुखे) सञ्चरति, अपानम्* 'उपरिष्टात्' (पुच्छदेशे) सञ्चरति। अत उभयावदानेन सर्वावदानसिद्धिः।

कल्पः, 'गर्भस्य दक्षिणं पूर्वपादं प्रच्छिद्य विष्णुं शिपिविष्टं यजति' इति। तदेतद्विधत्ते, "विष्णवे शिपिविष्टाय जुहोति यद्वै यज्ञस्यातिरिच्यते यः पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यतिरिक्तस्य शान्त्यै(९)" इति। 'यज्ञो वै विष्णुः पशवः शिपिः' इति श्रुत्यन्तरात्पशुस्वामी कश्चिद्यज्ञदेवः शिपिविष्टो विष्णुः, तस्मै जुहुयात्। 'यज्ञस्य' सम्बन्धि 'यत्' अङ्गमुपाकृतात् 'अतिरिक्तं' भवति, 'यः' च 'पशोर्भूमा' (बहुत्वं, हविराधिक्यहेतुः) पशोः शरीरे, 'या' 'पुष्टिः' (आधिक्यहेतुः), तत्सर्वं शिपिविष्टस्य विष्णोरधीनम्। अतो विष्णुमुद्दिश्य तद्धोमे सत्यतिरिक्तहेतावेवातिरिक्तं स्थापितं भवति ; तच्चातिरेकदोषस्य 'शान्त्यै' भवति।

देयां दक्षिणां विधत्ते, "अष्टाप्रूड्ढिरण्यं दक्षिणाष्टापदी ह्येषात्मा नवमः पशोराप्त्यै"(१०) इति। अष्टभिर्विन्दुभिर्लाञ्छितम् 'अष्टाप्रूट्', तादृशं 'हिरण्यं' दद्यात् ; यस्मादियं वशा सगर्भा, सा अष्टाभिः पादैर्युक्ता 'आत्मा' (पशोर्देहो) यस्मादतिरिक्तो 'नवमः', तस्मादष्टाभिर्विन्दुभिर्युक्तं हिरण्यं अष्टभिः पादैर्युक्तेन पशुना च सदृशं भवतीति पशुप्राप्त्यै सम्पद्यते।

यदुक्तं सूत्रकारेण, 'अष्टाप्रूड्ढिरण्यमुष्णीषेणावेष्ट्य कोशेऽवधाय

---

* अत्र अपान इति पाठो भवितुं युक्तः।

द्वितीयेऽवधाय तृतीयेऽवदधाति' इति। तदेतद्विधत्ते, "अन्तरकोश उष्णीषेणाविष्टितं भवत्येवमिव हि पशुरुल्बमिव चर्मेव मांसमिवास्थीव यावानेव पशुस्तमाप्त्वावरुन्धे(११)" इति। बाह्यकोशमारभ्य योऽयमभ्यन्तरः तृतीयः कोशः, तस्मिन् कोशे तद्धिरण्यम् 'उष्णीषेण' सर्वतो वेष्टनीयम्। यथैव तद्धिरण्यं चतुर्भिर्वेष्टितं, तथैव गर्भरूपः पशुरपि चतुर्भिर्वेष्टितो भवति। तत्कथमिति,—तदुच्यते,—'उल्बं' (बहिर्वेष्टनम्)। तस्याभ्यन्तरे चर्म, तस्याभ्यन्तरे मांसं, ततस्तस्याभ्यन्तरेऽस्थि, अस्थ्नोऽभ्यन्तरे पशोर्जीवः; एवं हिरण्यस्य पशुसादृश्ये सति तद्दानेन 'यावान्' (सम्पूर्णः) 'पशुः', तं प्राप्य स्वाधीनं करोति।

इदानीमेतत्साङ्गं कर्म विधत्ते, "यस्यैषा यज्ञे प्रायश्चित्तिः क्रियते, इष्ट्वा वसीयान् भवति(१२)" इति। 'यस्य' यजमानस्य 'यज्ञे' वशागर्भमपराधनं निमित्तीकृत्य यथोक्तहोमरूपा 'प्रायश्चित्तिः क्रियते', स यजमानः प्रायश्चित्तेन प्रकृतेन यज्ञेन 'इष्ट्वा' वसुमत्तरो भवति।

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः॥ ० ॥

---

आ वा॑यो भूष शुचिपा॒ उप॑ नः स॒हस्रं॑ते नि॒युतो॑ विश्ववार। उपो॑ ते॒ अन्धो॒ मद्य॑मयामि॒ यस्य॑ देव दधि-

षे पूर्व्वं पेयम्(१)। आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा(२) किक्किटा ते प्राणं वायवे स्वाहा(३) किक्किटा ते चक्षुः सूर्य्याय स्वाहा(४) किक्किटा ते श्रोत्रन्द्यावापृथिवीभ्याꣳ स्वाहा(५) किक्किटा ते वाचꣳ सरस्वत्यै स्वाहा(६) ॥ १ ॥

त्वन्तुरीया वशिनी वशासि सकृद्यत्त्वा मनसा गर्भ आशयत्। वशा त्वं वशिनी गच्छ देवान् सत्याः सन्तु यजमानस्य कामाः(७)। अजासि रयिष्ठा पृथिव्याꣳ सीदोर्द्ध्वान्तरिक्षमुपतिष्ठस्व दिवि ते बृहद्भाः(८)। तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्(९)। अनुल्बणं वयत जोगुवामपो* मनुर्भव जनया दैव्यं जनं(१०)। मनसो हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभाजो भूयास्म(११) ॥ २ ॥

सरस्वत्यै। स्वाहा। मनुः। त्रयोदश च ॥ २ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ ० ॥

वशागर्भनिमित्तोऽयं होमोऽस्मिन् प्रथमे श्रुतः।

अथ द्वितीयानुवाके भूत्यादिकामस्य वशालम्भार्थमन्त्रा वक्तव्याः। कल्पः,—'वायव्यामालभेत भूतिकामः' इत्युक्तानि दैव-

* 'अपो' इति सर्व्वत्र पाठः, केवलं ङ पुस्तके 'अपो' इति साधुः पाठः।

तानि वायव्याम् उपाकरोति 'आ वायो भूष शुचिपाः' इति। पाठस्तु, "आ वायो भूष, शुचिपा उप नः सहस्रन्ते नियुतो विश्ववार। उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्ब्वपेयम्(१)" इति। हे 'वायो', त्वम् 'आ'-गत्य पशुं 'भूष' (अलं कुरु)। हे 'शुचिपाः' (शुद्धहविःपालक), त्वं 'नः' (अस्मान्)'उप'-गच्छ। हे 'विश्ववार' (विश्वव्यापक) 'ते' 'सहस्रं' 'नियुतः' सन्ति। नियुच्छब्देन वायुवाहनभूता अश्वा उच्यन्ते। 'ते' (तव), 'अन्धः' (पशुरूपमन्नं) 'मद्यं' (हर्षकरं), तस्मात्, 'उपो' (समीपं) त्वाम् 'अयामि' (प्राप्नोति)*। तत् हे 'देव', 'यस्य' पशोः सम्बन्धि हविः, 'पूर्ब्वपेयं' (सोमसदृशम्) इति मनो 'दधिषे' (मनो धृतवानसि); तादृशेन हविषा त्वामयामि-इत्यन्वयः।

कल्पः,—'आकूत्यै त्वा कामाय त्वा' इति पर्य्यग्नौ क्रियमाणे जुहोति' इति। पाठस्तु, "आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा(२)। किक्किटा ते प्राणं वायवे स्वाहा(३)। किक्किटा ते चक्षुः सूर्य्याय स्वाहा(४)। किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याꣳ स्वाहा(५)। किक्किटा ते वाचꣳ सरस्वत्यै स्वाहा(६)" इति। हे पशो, 'आकूत्यै' (मदीयसङ्कल्पसिद्ध्यर्थं) त्वां प्राप्य; तथा, 'कामाय' (अभीष्टपालनार्थं) त्वां प्राप्य; तथा, 'समृधे' (समृद्धिसिद्ध्यर्थं) त्वां प्राप्य, किक्किटाकारपूर्ब्वकं 'ते मनः' प्रीणयित्वा, इदम् आज्यद्रव्यं 'प्रजापतये स्वाहा'† (हुतमस्तु)।

---

* 'प्राप्नोमि' इति तु E. पुस्तके समीचीनः पाठः।

† 'प्रजापतयेऽग्नौ' इति J. पु० पाठः।

'किक्किटा' इति अनुकरणशब्दः; मनुष्या हि पशूनामाभिमुख्यार्थं मुखमध्ये स्वजिह्वाग्रम् ऊर्ध्वमाकुञ्चय कञ्चित् ध्वनिविशेषं कुर्व्वन्ति, सोऽयं ध्वनिः, किक्किटाशब्देन अनुक्रियते। 'आकूत्यै' इत्यादिकम् उपरितनमन्त्रेषु अनुषज्य सर्व्वं पूर्व्ववत् व्याख्येयम्।

कल्पः,—'त्वन्तुरीयेत्युदीचीन्नीयमानामनुमन्त्रयते' इति। पाठस्तु, "त्वन्तुरीया वशिनी वशासि सकृद्यत्त्वा मनसा गर्भ आशयत्। वशा त्वं वशिनी गच्छ देवान्, सत्याः सन्तु यजमानस्य कामाः[(७)]" इति। हे वशे, 'त्वं तुरीया' (उपरितनमन्त्रे लोकत्रयस्य वक्ष्यमाणत्वात् तदपेक्षया चतुर्थी); 'विशिनी' (वशः,—इन्द्रियनियमः, वृषभसंयोगापेक्षाया अभावात् वशोऽस्या अस्ति इति वशिनी)। 'वशासि' (वन्ध्या भवसि)। तदेतत् वशिनीत्वं, वशात्वं च प्रतिपादयति*,—'यद्' (यस्मात्) कारणात् पुरुषाभिलाषयुक्तेन 'मनसा' 'सकृद्' एव 'गर्भः' त्वाम् 'आशयत्' (त्वामागत्य त्वदुदरे शयनं कृतवान्), तस्मात् द्वितीयतृतीयादिपुरुषसंयोगेच्छारहितत्वात् त्वं वशिनी; अपत्यान्तररहितत्वात् 'वशा'; तादृशी 'त्वं' हविरूपेण 'देवान्' 'गच्छ'। तेन च गमनेन 'यजमानस्य कामाः' 'सत्याः सन्तु'।

कल्पः,—'अजासि रयिष्ठेति निहत्यमानाम्'† इति, अनुमन्त्रयते इत्यनुवर्त्तते। पाठस्तु,—"अजासि रयिष्ठा पृथिव्याः सीदोर्द्धान्तरिक्षम् उपतिष्ठस्व दिवि ते बृहद्भाः[(८)]" इति। हे

* 'वशिनीत्वं प्रतिपादयति' इत्येतावन्मात्रः J. पु० पाठः,
† 'निहन्यमानाम्' इति J. पुस्तके साधुः पाठः।

पशो, त्वम् 'अजासि' (जातितश्छागीभवसि), 'रयिष्ठा' (धने स्थिता,) हविस्स्वरूपत्वेन देवानां धनभूतासि। तादृशी त्वमादौ 'पृथिव्यां' 'सीद' (उपविश)। ततः 'ऊर्द्ध्वम्' उन्नीता सती 'अन्तरिक्षम्, 'उपतिष्ठस्व' (प्राप्नुहि)। 'दिवि ते' 'बृहद्भाः' (प्रौढं तेजः)। एवं त्रिषु लोकेषु तिष्ठ।

कल्पः,—'तन्तुं तन्वन्निति वपां जुहोति' इति। पाठस्तु, "तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान्[९]" इति। हे पशो, 'रजसो' (रजआत्मकस्य) हविषः, 'तन्तुं तन्वन्' (विस्तारं कुर्व्वन्) 'भानुमन्विहि' (आदित्यमनुगच्छ)। किं च, 'धिया कृतान्' (प्रज्ञया सम्पादितान्) 'ज्योतिष्मतः' (प्रकाशवतः), 'पथः' (अस्मदीयस्वर्गमार्गान्) 'रक्ष'।

कल्पः,—'अनुल्बणं वयत जोगुवामपः—इति, हविः' इति। जुहोति इत्यनुवर्त्तते। पाठस्तु,—"अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम्[१०]" इति। हे हृदयादीनि पश्वङ्गानि, 'जोगुवां' (निर्विघ्नेन समाप्त्यर्थं त्वरमाणानाम्) अस्माकं 'अपः' (कर्म्म*) 'अनुल्बणम्' (अनतिरिक्तं) 'वयत' (कुरुत)। हे पशो, 'मनुर्भव' (मनुरिव उत्पादको भवेः); ततो 'दैव्यं जनं' 'जनय',—अयं च यजमानो जन्मान्तरे यथा देवजनो भवति, तथा उत्पादय।

कल्पः,—'मनसो हविरसीति हविःशेषान् प्राश्नन्ति' इति। पाठस्तु,"—मनसो हविरसि प्रजापतेर्वर्णो गात्राणान्ते गात्रभाजो

---

* 'श्रेयः कामम्' इति आदर्शपुस्तकपाठो न सम्यक्।

भूयास्म[११]" इति। हे पशो, त्वं 'मनसो' (मन्त्रद्वयस्य) देवस्य 'हविरसि'; 'प्रजापतेः' 'वर्णः' (स्वरूपम्) असि; तेन उत्पादितत्वात् तादृशस्य तव 'गात्राणाम्' (अङ्गानां) प्राशनात् वयं, 'गात्रभाजः' (पुष्टाङ्गाः) 'भूयास्म'।

अत्र विनियोगसङ्ग्रहः,—

आ वायो, इत्युपाकुर्य्यात्, आकृत्ये, पञ्चभिर्हुतिः।
त्वं, गच्छन्तीं मन्त्रयित्वा, हन्यमानामजेति च॥
तन्तुं, वपाहुतिः, तद्वदनुत्वेति हविर्हुतिः।
मन, शेषान् भक्षयन्ति, मन्त्रा एकादशेरिताः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः॥ ०॥

---

इमे* वै सहास्तां ते वायुर्व्यवात् ते गर्भमदधातां तꣳ सोमः प्राजनयदग्निरग्रसत स एतं प्रजापतिराग्नेयमष्टाकपालमपश्यत् तं निरवपत्तेनैवैनामग्नेरधि निरक्रीणात्[१] तस्मादप्यन्यदेवत्यामालभमान आग्नेयमष्टाकपालं पुरस्तान्निर्वपेदग्नेरेवैनामधि निष्क्रीयालभते[२] यत्॥ १॥

वायुर्व्यवात् तस्माद्वायव्या यदिमे गर्भमदधातां

* अयमनुवाको न मन्त्रात्मकः, किन्तु ब्राह्मणरूपः।

तस्माद्द्यावापृथिव्या यत् सोमः प्राजनयदग्निरग्रसत तस्मादग्नीषोमीया यदनयोर्वियत्योर्वागवदत् तस्मात् सारस्वती यत् प्रजापतिरग्नेरधि निरक्रीणात् तस्मात् प्राजापत्या सा वा एषा सर्वदेवत्या यदजावशा[३] वायव्यामालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन ॥ २ ॥

भागधेयेनोपधावति स एवैनं भूतिं गमयति[४] द्यावापृथिव्यामालभेत कृषमाणः प्रतिष्ठाकामो दिव एवास्मै पर्जन्यो वर्षति व्यस्यामोषधयो रोहन्ति समर्धुकमस्य सस्यं भवति[५] अग्नीषोमीयामालभेत यः कामयेतान्नवानन्नादः स्यामित्यग्निनैवान्नमवरुन्धे सोमेनान्नाद्यमन्नवानेवान्नादो भवति[६] सारस्वतीमालभेत यः ॥ ३ ॥

ईश्वरो वाचो वदितोः सन्वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोपधावति सैवास्मिन् वाचं दधाति[७] प्राजापत्यामालभेत यः कामयेतानभिजितमभिजयेयमिति प्रजापतिः सर्वा देवता देवताभिरेवानभितमभिजयति[८] वायव्ययोपाकरोति वायोरेवैनामवरुध्यालभत[९] आकूत्यै त्वा कामाय त्वा ॥ ४ ॥

इत्याह यथा यजरेवैतत्[१०] किंकिटाकारं जुहोति

किक्किटाकारेण वा ग्राम्याः पशवो रमन्ते प्रारण्याः पतन्ति यत् किक्किटाकारं जुहोति ग्राम्याणां पशूनां धृत्यै[११] पर्य्यग्नौ क्रियमाणे जुहोति जीवन्तीमेवैनांऽ सुवर्गं लोकं गमयति त्वन्तुरीया वशिनी वशासीत्याह देवत्रैवैनां गमयति[१२] सत्याः सन्तु यजमानस्य कामा इत्याहैष वै कामः ॥ ५ ॥

यजमानस्य यदनार्त्त उदृचं गच्छति तस्मात् एवमाह[१३] अजासि रयिष्ठेत्याहैष्वेवैनां लोकेषु प्रतिष्ठापयति[१४] दिवि ते बृहद्भा इत्याह सुवर्ग एवास्मै लोके ज्योतिर्दधाति[१५] तन्तुं तन्वन् रजसो भानुमन्विहीत्याहेमानेवास्मै लोकान् ज्योतिष्मतः करोति[१६] अनुल्बणं वयत जोगुवामप* इति ॥ ६ ॥

आह यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शान्तिः[१७] मनुर्भव जनया दैव्यं जनमित्याह मानव्यो वै प्रजास्ता एवाद्याः कुरुते[१८] मनसो हविरसीत्याह स्वगाकृत्या[१९] गात्राणां ते गात्रभाजो भूयास्मेत्याहाशिषमेवैतामाशास्ते[२०] तस्यै वा एतस्या एकमेवादेवयजनं यदालब्धायामभ्रः ॥ ७ ॥

भवति[२१] यदालब्धायामभ्रः स्यादप्सु वा प्रवेशयत्

* 'अपः' इति सर्वत्र पुस्तके पाठः केवलं E. पुस्तके अप इति साधुः पाठः।

सर्व्वां वा प्राश्नीयात्[११] यदप्सु प्रवेशयेद्यज्ञवेशसं कुर्य्यात् सर्व्वामेव प्राश्नीयादिन्द्रियमेवात्मन् धत्ते[१२] सा वा एषा त्रयाणामेवावरुद्धा सम्वत्सरसदः सहस्रयाजिनो गृहमेधिनस्त एवैतया यजेरन्तेषामेवैषाप्ता ॥ ८ ॥

यत्। स्वेन। सारस्वतीमालभेत यः। कामाय त्वा। कामः। अय इति। अग्नः। द्विचत्वारिंशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ० ॥

मन्त्राः काम्यपश्वोरत्र द्वितीये समुदीरिताः।

अथ तृतीये तद्विधिरुच्यते। तत्रादौ तं पशुमालभमानस्य पूर्व्वंकर्त्तव्यमष्टाकपालं पुरोडाशं विधातुं प्रस्तौति,—"इमे वै सहास्तान्ते वायुर्व्यवात्ते गर्भमदधातां तꣳ सोमः प्राजनयदग्निरग्रसत स एतं प्रजापतिराग्नेयमष्टाकपालमपश्यत्तं निरवपत्तेनैवेनामग्नेरधि निरक्रीणात्[१]" इति। 'इमे' (द्यावापृथिव्यौ) पुरा 'सहास्तां' (अवियुक्ते अभूतां)। 'ते' च सहस्थिते उभे 'वायुर्व्यवात्' (वियुक्ते अकरोत्)। 'ते' च* पुनर्व्वायुना सम्परिष्वक्ते सत्यौ, वशारूपं 'गर्भं' धारितवत्यौ। 'तं' च गर्भं 'सोमः' उत्कर्षात् 'अजनयत्'। उत्पादितं तमेतम् 'अग्निः' ग्रसितवान्। ततः 'प्रजापतिः' अग्नेरुत्कोचरूपेण पुरोडाशं निरूप्य तस्मात् अग्नेरेतां वशां निष्क्रीतवान्।

* तेन इति B. एवं J. पु० पाठः।

इदानीं विधत्ते,—"तस्मात् अपि अन्यदेवत्यामालभमानः आग्नेयमष्टाकपालं पुरस्तान्निर्वपेत्, अग्नेरेवैनामधि निष्क्रीयालभते[२]" इति। यस्मात् अग्नेः सकाशात् प्रजापतिना वशा निष्क्रीता, 'तस्मात्' वशाया यद्यपि अग्नेरन्या देवता, तथापि तदालम्भात् पूर्व्वं, 'आग्नेयं' पुरोडाशं कुर्य्यात्, तेन पुरोडाशेन अग्नेः सकाशात् वशां 'निष्क्रीय' तदालम्भे प्रवृत्तो भवति।

का असावन्यदेवत्या?—इत्याकाङ्क्षायां तद्योग्यान् देवताविशेषान् दर्शयति,—"यत् वायुर्व्यवात्, तस्मात् वायव्या, यद् इमे गर्भमदधातां, तस्मात् द्यावापृथिव्या, यत् सोमः प्राजनयत्, अग्निरग्रसत, तस्मात् अग्नीषोमीया, यदनयोर्वियत्योर्वागवदत् तस्मात् सारस्वती, यत् प्रजापतिरग्नेरधि निरक्रीणात, तस्मात् प्राजापत्या, सा वा एषा सर्व्वदेवत्या यद् अजावशा[३]" इति। कारकत्वस्य पूर्व्वं दर्शितत्वात् तत्तद्देवतात्वं युक्तम्। संश्लिष्टे द्यावापृथिव्यौ यदा वियुज्येते तदा वेणुदलविभागध्वनिः समुत्पन्नः, तदिदं वाचो वदनम्। तस्मात् उपकारित्वात् सरस्वत्यत्र देवता। तदेवं वायु-द्यावापृथिव्यग्नीषोम-सरस्वती-प्रजापतीनां, अत्र देवतात्वात् सेयमजा* बन्ध्या सर्व्वदेवत्येत्युच्यते।

तदैश्वर्य्यसिद्धये† देवताविशेषं विधत्ते,—"वायव्यमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेन उपधावति स एवैनं भूतिं गमयति[४]" इति।

---

* अत्र 'अजावशा' इति पाठो भवितुं युक्तः।

† 'ऐश्वर्य्योदये' J. पु० पाठः।

कृषीबलस्य सस्यसमृद्धिरूपां प्रतिष्ठां कामयमानस्य देवतां विधत्ते,—"द्यावापृथिव्यामालभेत कृषमाणः प्रतिष्ठाकामो दिव एव अस्मै पर्जन्यो वर्षति वि अस्यामोषधयो रोहन्ति समर्धुकमस्य सस्यं भवति(५)" इति। विविधं रोहन्ति उत्पद्यन्ते, ततोऽस्य यजमानस्य सस्यं समृद्धिशीलं भवति।

अन्नसमृद्धिं तद्भोगसामर्थ्यं च कामयमानस्य देवतां विधत्ते, —"अग्नीषोमीयामालभेत यः कामयेतान्नवानन्नादः स्याम् इत्यग्निनैव अन्नमवरुन्धे सोमेनान्नाद्यम् अन्नवानेव अन्नादो भवति(६)" इति। 'अन्नाद्यम्' अन्नभक्षणसामर्थ्यम्।

राजादिसभारञ्जनयोग्यां वाचं कामयमानस्य देवतां विधत्ते,—"सारस्वतीमालभेत य ईश्वरो वाचो वदितोः सन् वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेन उपधावति, सैवास्मिन् वाचं दधाति(७)" इति। वेदशास्त्रपारङ्गतत्वात् वाचं वदितुं समर्थः सन्नपि सभाकम्पादिप्रतिबन्धेन यो न वदेत्तस्य अयं विधिः।

यत् फलम् उपायान्तरेण न सम्पादितं, तत्सम्पादनकामस्य देवतां विधत्ते,—"प्राजापत्यामालभेत यः कामयेत अनभिजित-मभिजयेयम् इति, प्रजापतिः सर्व्वा देवता देवताभिरेवानभि-जितम् अभिजयति(८)" इति।

"आ वायो भूष" इत्येतामृचं विनियुङ्क्ते,—"वायव्यया उपा-करोति वायोरेवैनाम् अवरुध्यालभते(९)" इति। 'एतां' वशाम्। 'अवरुध्य' सम्पाद्य।

होममन्त्राणां स्पष्टार्थतां दर्शयति,—"आकूत्यै त्वा कामाय त्वेत्याह यथायजुरेवैतत्[१०]" इति।

जिह्वाग्राकुञ्चननिष्पाद्याः पशुप्रिया ये ध्वनिविशेषास्तत्पूर्व्वकं होमं विधत्ते,—"किक्किटाकारं जुहोति किक्किटाकारेण वै ग्राम्याः पशवो रमन्ते प्रारण्याः पतन्ति, यत् किक्किटाकारं जुहोति ग्राम्याणां पशूनां धृत्यै[११]" इति। 'आकूत्यै' इति मन्त्रम् उच्चार्य्य जिह्वाग्रेण ध्वनिविशेषं कृत्वा पश्चाज्जुहुयात्। तेन ध्वनिना गोमहिषादयो ग्राम्याः पशवः क्रीडन्ते। आरण्यास्तु मृगाः प्रकर्षेण पलायन्ते। अतः अयं ध्वनिर्ग्राम्यपशुधृत्यै भवति।

अस्याज्यहोमस्य कालं विधत्ते,—"पर्य्यग्नौ क्रियमाणे जुहोति जीवन्तीमेवैनाꣳ सुवर्गं लोकं गमयति त्वन्तुरीया वशिनो वशासि इत्याह देवत्रैवैनां गमयति[१२]" इति। उल्मुकेन पशोः प्रदक्षिणावृत्तिः पर्य्यग्निकरणं, तत् यदा अनुष्ठीयते, तदैवायं होमः; तथा सति जीवन्तीमेनां स्वर्गं प्रापयति।

मन्त्रेषु मनआदीनां प्रजापत्यादिषु कृतत्वाभिधानात् नीयमानपश्वनुमन्त्रणमन्त्रे देवान् गच्छेत्यस्याभिप्रायं दर्शयति,—"सत्याः सन्तु यजमानस्य कामा इत्याहैष वै कामः यजमानस्य यदनार्त्त उदृचं गच्छति तस्मात् देवमाह[१३]" इति। अयं यज्ञः 'अनार्त्तः' (विघ्नरहितः) 'उदृचम्' (उत्तमामृचं) समागच्छतीति 'यत्', 'एष' एव 'यजमानस्य' मुख्यः 'कामः;' तत्समाप्त्या फलस्यावश्यम्भावात्; तस्मादध्वर्युः, 'सत्याः सन्तु कामाः' इत्येवं ब्रूते।

हन्यमानानुमन्त्रणमन्त्रे, "पृथिव्यां सीद" इत्यादेस्तात्पर्यं दर्शयति,—"अजामि रयिष्ठेत्याहैष्वेवैनां लोकेषु प्रतिष्ठापयति(१४)" इति।

चरमस्य मन्त्रभागस्य तात्पर्यं दर्शयति,—"दिवि ते बृहद्भा इत्याह सुवर्ग एवास्मै लोके ज्योतिर्दधाति(१५)" इति। 'अस्मै' (यजमानार्थं) स्वर्गे प्रकाशमुत्पादयति।

वपाहोममन्त्रे, 'पथः' इति लोका विवक्षिता इति दर्शयति,—"तन्तुं तन्वन्रजसो भानुमन्विहीत्याहेमानेवास्मै लोके ज्योतिष्मतः करोतीति(१६)" इति।

हविर्होममन्त्रस्य तात्पर्यं दर्शयति,—"अनुल्बणं वयत जोगुवामप इत्याह यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शान्तिः(१७)" इति। विधिमतिक्रम्यानुष्ठितमङ्गम् 'उल्बणम्'; अनुल्बणशब्दोच्चारणेन तस्य शान्तिर्भवति।

तस्य मन्त्रस्योत्तरभागे मनुशब्दप्रयोगस्य तात्पर्यमाह,—"मनुर्भव जनया दैव्यं जनमित्याह मानव्यो वै प्रजास्ता एवाद्याः कुरुते(१८)" इति। स्वायम्भुवस्य मनोः प्रजापतिरूपत्वात् प्रजापतिसृष्टाः दैव्यजनादयः सर्वाः प्रजा मानव्या भवन्ति। अतोऽनेन मन्त्रभागेन ताः सर्वाः 'आद्याः' (भोग्याः) कुरुते।

हविःशेषप्राशनमन्त्रस्य, उदरगतं कर्त्तुम् मनःशब्दप्रयोग इति दर्शयति,—"मनसो हविरसीत्याह स्वगाकृत्यै(१९)" इति।

तस्मिन् मन्त्रे उत्तरभागस्याशीःपरत्वं दर्शयति,—"गात्राणां ते गात्रभाजो भूयास्मेत्याहाशिषमेवैतामाशास्ते(२०)" इति।

एतस्या वशाया आलम्भे वर्जनीयं दिनं दर्शयति,—"तस्यै वा एतस्या एकमेवादेवयजनं यदालब्धायामभ्रो भवति(२१)" इति। अस्यां वशायाम् 'आलब्धायां' सत्यां गगने मेघावरणेन यद्दुर्दिनं भवति, तत् 'एव' 'एकम्' दिनम् 'एतस्याः' वशाया देवयागानर्हं, तस्मात् यदा, मेघो न भविष्यति इति निश्चयो मनसि जायते, तदानीमेवैतामालभेत ।

तथा कृतेऽपि प्रमादादभ्रदर्शने सति नैमित्तिकं प्रयोगविशेषमाह,—"यदालब्धायामभ्रः स्यादप्सु वा प्रवेशयेत्सर्वां वा प्राश्नीयात्(२२)" इति । तत्र जलप्रवेशः पूर्वः पक्षः। सर्वस्याः प्राशनं राद्धान्तः ।

तदुभयं स्पष्टीकरोति,—"यदप्सु प्रवेशयेद्यज्ञवेशसं कुर्यात्सर्वामेव प्राश्नीयादिन्द्रियमेवात्मन् धत्ते(२३)" इति । 'यज्ञवेशसं' यज्ञविघातम् । यजमानः सर्वप्राशनेनेन्द्रियमात्मनि धारयति ।

एतदेवाभिप्रेत्य सूत्रकारेणोक्तम्,—'सर्वां वा यजमान एवान्वक्षं प्राश्नीयात्' इति ।

एतस्यां वशायां मुख्याधिकारिणो दर्शयति,—"सा वा एषा त्रयाणामेवावरुद्धा संवत्सरसदः सहस्रयाजिनो गृहमेधिनस्त एवैतया यजेरंस्तेषामेवैषाप्ता(२४)" इति । सेयं वशा त्रयाणामेवाधिकारिणामधीना । कस्य कस्येति तदुच्यते,—गवामयनादिरूपं संवत्सरसत्रं योऽनुतिष्ठति, सोऽयं संवत्सरसत्, तस्य ; सहस्रसङ्ख्याकदक्षिणायुक्तेन यज्ञेन यो यजते, सोऽयं सहस्रयाजी, तस्य ; संवत्सरसत्रादर्वाचीनेष्वपि सत्रेषु यो गृहपतित्वेन दीक्षितो भवति

सोऽयं गृहमेधी, तस्य; त एव त्रयोऽधिकारिणः, एतया वशया यजेरन्, तेषामेवैषा वशा युक्ता ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥०॥

---

चित्तञ्च चित्तिश्चाकूतञ्चाकूतिश्च विज्ञातञ्च विज्ञानञ्च मनश्च शक्वरीश्च दर्शश्च पूर्णमासश्च बृहच्च रथन्तरञ्च प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव[१] देवासुराः संयत्ता आसन्त्स इन्द्रः प्रजापतिमुप, अधावत्तस्मा एताञ्जयान् प्रायच्छत्तानजुहोत्ततो वै देवा असुरानजयन्यदजयन्तज्जयानां जयत्वꣳ[२] स्पर्धमानेनैते होतव्या जयत्येव तां पृतनां[३] ॥ ॥ १ ॥

उप। पञ्चविꣳशतिश्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

अजावशा या तु काम्या तद्विधिः स्यात् तृतीयके।

अथ यदुक्तं सूत्रकारेण,—'जयानभ्यातानान् राष्ट्रभृत इति ब्राह्मणे व्याख्याता, अस्मिन् ब्रह्मन्नित्यभ्यातानेष्वनुषजति' इति। तत्र चतुर्थानुवाके जया उच्यन्ते। तत्रादौ जयसञ्ज्ञकांस्त्रयोदश मन्त्रान् पठति,—"चित्तञ्च, चित्तिश्च, आकूतञ्च, आकूतिश्च, विज्ञातञ्च, विज्ञानञ्च, मनश्च, शक्करीश्च, दर्शश्च, पूर्णमासश्च, बृहच्च, रथन्तरञ्च, प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव(१)" इति। सामान्याकारेण निर्विकल्पकज्ञानेन प्रतीतं वस्तु 'चित्तम्'। वक्ष्यमाणापेक्षया समुच्चयार्थः चशब्दः। इदञ्चित्तं मयि समास्त्विति शेषः। एवमुत्तरत्र योज्यम्। 'चित्तिः' निर्विकल्पकज्ञानम्। 'आकूतिः' सङ्कल्पः। 'विज्ञातं' विशेषाकारेण निश्चितं वस्तु। 'विज्ञानं' तन्निश्चयः। 'मनः' ज्ञानसाधनमन्तःकरणम्। 'शक्करीः' चक्षुरादिबाह्येन्द्रियशक्तयः। दर्शपूर्णमासौ यागविशेषौ। बृहद्रथन्तरे सामनी। 'पृतनाज्येषु' (सङ्ग्रामाभिगमनेषु) 'उग्रः' 'प्रजापतिः' 'वृष्णे' (वर्षयित्रे) 'इन्द्राय' 'जयान्' (जयहेतून्) मन्त्रानेतान् 'प्रायच्छत्'। 'तस्मै' इन्द्राय 'विशः' (प्रजाः) 'सर्वाः' 'समनमन्त' (सम्यगानता, विधेयाः) अभवन्। 'स' चेन्द्रः, स्वासु प्रजासु 'उग्रः' (शिक्षकः) अभवत्। 'हि' (यस्मात्) 'स' इन्द्रः 'हव्यः' (होमयोग्यः) 'बभूव', तत्तस्मिन्निन्द्रे प्रजापतेरनुग्रहो युक्तः।

अथैतैर्मन्त्रैः होमं विधातुं प्रस्तौति,—"देवासुराः संयत्ता आसन् स इन्द्रः प्रजापतिमुपाधावत्तस्मा एताञ्जयान् प्रायच्छत्तान्

जुहोत्ततो वै देवा असुरानजयन्यदजयन् तज्जयानाञ्जयत्वम्(१)" इति। जयन्ति एभिरिति जयाः।

अथ विधत्ते,—"स्पर्धमानेनैते होतव्या जयत्येव तां पृतनाम्(२)" इति।

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः॥ ०॥

---

अग्निर्भूतानामधिपतिः स मावत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपाꣳ समुद्रः स्रोत्यानामन्नꣳ साम्राज्यानामधिपति तन्मावतु सोम ओषधीनाꣳ सविता प्रसवानाꣳ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते मावन्तु पितरः पितामहाः परेवरे, ततास्ततामहा इह मावत। अस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्यां॥ १॥

अवरे। सप्तदश च॥ ५॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥ ०॥

जयाख्यमन्त्रतद्धोमाश्चतुर्थे समुदीरिताः।

अथ पञ्चमेऽभ्यातानाा उच्यन्ते। तन्मन्त्रपाठस्तु,—"अग्निर्भूतानामधिपतिः स माऽवत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपाꣳ समुद्रः स्रोत्यानामन्नꣳ साम्राज्यानामधिपति तन्माऽवतु सोम ओषधीनाꣳ सविता प्रसवानाꣳ रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते माऽवन्तु पितरः पितामहाः परेऽवरे ततास्ततामहा इह माऽवत। अस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिषि अस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम्[१]" इति। अयम् 'अग्निः भूतानां' (प्राणिनाम्) 'अधिपतिः' (स्वामी)। 'स' (तादृशः) माम् 'अवतु'। 'अधिपतिः स माऽवतु' इत्येतत् पदचतुष्टयं, वक्ष्यमाणेषु षष्ठ्यन्तेषु वाक्यशेषत्वेनानुवर्त्तन्ते। 'ज्येष्ठानां' (वृद्धतमानां) लोकपालानाम् 'इन्द्रः' अधिपतिः। यमशब्देनाग्निविशेष उच्यते, 'अग्निर्वाव यमः' इति श्रुत्यन्तरात्। अग्नि-वायु-सूर्य चन्द्र-बृहस्पतयः पृथिव्यन्तरिक्ष-द्यु-नक्षत्र-ब्राह्मणजातीनामधिपतयः प्रसिद्धाः। 'मित्रः' सत्यवचनानामधिपतिः। 'वरुणः' कूपादिगतानां स्थिराणाम् 'अपाम्' अधिपतिः। 'समुद्रः स्रोत्यानां' (नदीप्रवाहगतानाम्) अपामधिपतिः। 'अन्नं साम्राज्यानां' (सार्वभौमराजभोग्यानां द्रव्याणां) स्वामी। अनुवर्त्यमानस्य लिङ्गव्यत्ययं द्योतयितुम् 'अधिपति तन्माऽवतु' इत्याम्नातम्। सोम-सवितृ-रुद्र-त्वष्टार ओषध्यनुज्ञा-पशु-स्वरूपाण-

मधिपतयः प्रसिद्धाः। 'विष्णुः पर्वतानां' गोवर्द्धनादीनामधिपतिः। 'मरुतो गणानां' (आदित्यवस्वादिगणदेवतानां) स्वामिनः। अत्रानुषज्यमानस्य वचनव्यत्ययं द्योतयितुम् 'अधिपतयस्ते माऽवन्तु' इत्याम्नातम्। 'पितरः' इत्यादीनि यजुर्मन्त्राणां पदानि। पितृपितामहशब्दौ जीवद्विषयौ; तत-ततामहशब्दौ मृतविषयौ। "सपिण्डता तु पुरुषात् सप्तमाद्विनिवर्त्तते", ततः सप्तमादूर्द्ध्वा ये विप्रकृष्टास्ते 'परे', ततोऽर्वाचीनाः सन्निकृष्टा 'अवरे'। हे पित्रादयः, यूयं 'इह' एव तेषु तेषु विषयेषु मां 'अवत' (रक्षत)। कुत्र कुत्र? इति,—तदुच्यते, 'अस्मिन् ब्रह्मन्' (अस्यां ब्राह्मणजातौ), 'अस्मिन् क्षत्रे', 'अस्यामाशिषि' (आशासनीये प्रजापश्वादिरूपे ऽस्मिन् फले), 'अस्यां पुरोधायां' (पुरस्करणरूपे अस्मिन् प्राधान्ये), 'अस्मिन् कर्मन्' (क्रियमाणे अस्मिन्ननुष्ठानविशेषे), 'अस्यां देवहूत्यां' (देवान् प्रति यदेतदस्मदीयमाह्वानं तस्मिन् आह्वाने), एतेषु सर्वेषु विषयेषु मां रक्षत। 'पितरः' इत्यादिके चरममन्त्रे समाम्नातम् 'अस्मिन् ब्रह्मन्' इत्यादिकं पूर्वेषु सप्तदशमन्त्रेष्वनुषञ्जनीयम्; तथा सति 'अग्निर्भूतानामधिपतिः स माऽवत्वस्मिन् ब्रह्मन्(१)। इन्द्रो ज्येष्ठानामधिपतिः स माऽवत्वस्मिन् ब्रह्मन्(२)।—इत्येवं सर्वत्र पाठः सम्पद्यते॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥ ०॥

---

देवा वै यद्यज्ञे कुर्वत तदसुरा अकुर्वत ते देवा एतानभ्यातानानपश्यन् तानभ्यातन्वत यद्देवानां कर्मासीदार्ध्यत तद्यदसुराणां न तदार्ध्यत(१) येन कर्मणेर्त्सेत्तत्र होतव्या ऋध्नोत्येव तेन कर्मणा(२) यद्विश्वेदेवाः समभरन् तस्मादभ्याताना वैश्वदेवा यत् प्रजापतिर्जयान् प्रायच्छत् तस्माज्जयाः प्राजापत्याः ॥ १ ॥

यद्राष्ट्रभृद्भी राष्ट्रमाददत तद्राष्ट्रभृतां राष्ट्रभृत्त्वं ते देवा अभ्यातानैरसुरानभ्यातन्वत जयैरजयन् राष्ट्रभृद्भी राष्ट्रमाददत यद्देवा अभ्यातानैरसुरानभ्यातन्वत तदभ्यातानानामभ्यातानत्वं यज्जयैरजयन् तज्जयानां जयत्वं यद्राष्ट्रभृद्भी राष्ट्रमाददत तद्राष्ट्रभृतां राष्ट्रभृत्त्वं ततो देवा अभवन् परासुरा(३) यो भ्रातृव्यवान्त्स्यात् स, एतान् जुहुयादभ्यातानैरेव भ्रातृव्यानभ्यातनुते जयैर्जयति राष्ट्रभृद्भी राष्ट्रमादत्ते भवत्यात्मना परास्य भ्रातृव्यो भवति(४)* ॥ २ ॥

प्राजापत्याः । सः । अष्टादश च ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

* अयमनुवाको न मन्त्ररूपः ।

अभ्यातानाभिधा मन्त्राः पञ्चमे समुदीरिताः।

अथ षष्ठे तद्धोमविधिरभिधीयते। तच्च होमं विधातुं प्रस्तौति,—"देवा वै तद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतानभ्यातानानपश्यन् तानभ्यातन्वत, यद्देवानां कर्मासीदार्ध्यत तत्, यदसुराणां न तदार्ध्यत[१]" इति। अभ्यातानाख्यान्मन्त्रान् कर्मसमृद्धिहेतून् दृष्ट्वा तानाभिमुख्येनानीय देवा अजुहवुः, तेन देवानां कर्म समृद्धमासीत्। तद्धोमाभावादसुराणां कर्म न समृद्धम्।

अथ विधत्ते,—"येन कर्मणेर्त्सेत्तत्र होतव्या ऋध्नोत्येव तेन कर्मणा[२]" इति। 'ईर्त्सेत्' (वृद्धिमिच्छेत्), 'ऋध्नोत्येव' (समृद्धिं प्राप्नोत्येव)।

अथ भ्रातृव्यवतः समुच्चितानाम् अभ्यातानजयराष्ट्रभृतां होमं विधत्ते,—"यद्विश्वे-देवाः समभरन् तस्मादभ्यातानाः वैश्वदेवाः, यत्प्रजापतिर्जयान् प्रायच्छत् तस्माज्जयाः प्राजापत्याः, यद्राष्ट्र-भृद्भी—राष्ट्रमाददत, तद्राष्ट्रभृतां राष्ट्रभृत्त्वं, ते देवा अभ्याता-नैरसुरान् अभ्यातन्वत, जयैरजयन्, राष्ट्रभृद्भी—राष्ट्रमाददत, यद्देवा अभ्यातानैरसुरान् अभ्यातन्वत, तदभ्यातानानामभ्यातानत्वं यज्जयै-रजयन्, तज्जयानां जयत्वं; यद्राष्ट्रभृद्भी—राष्ट्रमाददत, तद्राष्ट्र-भृतां राष्ट्रभृत्त्वं; ततो देवा अभवन्, परासुराः[३]" इति। यस्मात् सर्वेऽपि देवाः, पूर्वोक्तप्रकारेणाभ्यातानमन्त्रान् 'समभरन्' (सम्पा-दितवन्तः), तस्मादेते 'वैश्वदेवाः' इत्युच्यन्ते। यस्मात् 'प्रजापति-र्जयान्' इन्द्राय 'प्रायच्छत्', तस्मात् ते 'प्राजापत्याः' इत्युच्यन्ते।

यस्मादुपरितनानुवाकाम्नातैः राष्ट्रभृत्सञ्ज्ञकैर्मन्त्रैरसुरसम्बन्धिराष्ट्रं देवाः स्वीकृतवन्तः, तस्मात् ते 'राष्ट्रभृतः' उच्यन्ते। देवास्तु प्रथममभ्यातानैरसुरान् वशीकृत्य जयैर्विनष्टैश्वर्यान् कृत्वा राष्ट्रभृद्भिस्तदीयं निवासस्थानमपहृतवन्तः। अभ्यातन्वते एभिरित्यभ्यातानत्वम्। जयन्ति एभिरिति जयत्वम्। राष्ट्रं भ्रियते (स्वीक्रियते) एभिरिति राष्ट्रभृत्त्वम्। समुच्चितैरेतैस्त्रिभिर्होमैर्देवा विजयिनोऽभवन्; असुरास्तु पराभूताः।

अथ विधत्ते,—"यो भ्रातृव्यवान्स्यात् स एतां जुहुयादभ्यातानैरेवं भ्रातृव्यानभ्यातनुते, जयैर्जयति, राष्ट्रभृद्भी—राष्ट्रमादत्ते, भवत्यात्मना परास्य भ्रातृव्यो भवति[४]" इति। अभ्याततिर्वशीकारः; जयोऽन्यदीयैश्वर्यनाशनम्; राष्ट्रादानं तदीयभूमेरपहारः। तत्त्रिविधफलसिद्ध्यर्थं त्रिविधान् समुच्चित्य जुहुयात्।

अथ मीमांसा,—तृतीयाध्यायस्य चतुर्थपादे(१३अ०) चिन्तितम्।

'येनेर्त्सेत्कर्मणा तत्र' जयहोमेऽखिलार्थता।
वैदिकेष्वेव वा? सर्वशेषोऽसङ्कोचकत्वतः॥
होम आहवनीये स्यात् कृष्यादिषु न सोऽस्ति हि।
तेनानारभ्यपाठेऽपि वैदिकेष्वेव ते जयाः॥

अनारभ्य श्रूयते, 'येन कर्मणेर्त्सेत्तत्र जयान् जुहुयात् तद्द्राष्ट्रभृतो* जुहोत्यभ्यातानान् जुहोति' इति। 'ईर्त्सेत्' (वृद्धिमिच्छेत्)। "चित्तञ्च स्वाहा" इत्यादयो जयाः; "ऋताषाड्"(७अ०) इत्यादयो राष्ट्रभृतः, "अग्निर्भूतानाम्" इत्यादयोऽभ्यातानाः;

* राष्ट्रभृता इति J. पु०पाठः।

तत्र वैदिककर्मणीव लौकिककृष्यादिकर्मण्यपि ऋद्धेरिष्यमाणत्वात्, सङ्कोचे कारणाभावाज्जयादिहोमः सर्वशेष इति चेत्, मैवं, "यदाहवनीये जुह्वति* तेन सोऽस्याभीष्टः प्रीतः" इति वाक्येन होममुद्दिश्याहवनीयविधानात् कृष्यादौ तदभावाद् वैदिकेष्वेव जयादिहोमः ॥

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ताभ्यः स्वाहा(१) सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवः(२) सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयः(३) भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः स्तवाः(४) प्रजापतिर्विश्वकर्मा मनः ॥ १ ॥

गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयः(५) इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा(६) भुवनस्य पते यस्य त उपरि गृहा इह च। स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिं(७)।

---

* जुहोति इति अन्यत्र पाठः।

परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवः(८) सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान् पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचः(९) दूरे हेतिरमृडयः ॥ २ ॥

मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवः(१०) चारुः कृपणकाशी कामो गन्धर्वस्तस्याधयोऽप्सरसः शोचयन्तीर्नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा(११) स नो भुवनस्य पते यस्य त उपरि गृहा इह च। उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ(१२) ॥ ३ ॥

मनः। मृडयः। षट्चत्वारिंशच्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

अभ्याताना जये-राष्ट्रभृद्भिः षष्ठे तु वर्णिताः।

अथ सप्तमे राष्ट्रभृन्मन्त्रा उच्यन्ते। तेषां विनियोगविशेषमग्निकाण्डे सूत्रकारो दर्शयति,—'षड्भिः पर्यायैर्द्वादश राष्ट्रभृतो जुहोति, ऋताषाडृतधामेति, पर्यायमनुद्रुत्य तस्मै स्वाहेति प्रथमामाहुतिं जुहोति, ताभ्यः स्वाहेत्युत्तराम् एवमितरान् पञ्च पर्यायान् विभजति, भुवनस्य पत इति पर्यायाणां सप्तमो, आहुतीनां त्रयोदशी, एतेन व्याख्यातं, भुवनस्य पत इति रथमुखेन पञ्चाहुतीर्जुहोति दश च' इति। अत्राद्येषु षट्पर्यायेषु प्रथमं

पर्यायमाह,—"ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम, स इदं ब्रह्म क्षत्रं पातु, ता इदं ब्रह्म क्षत्रं पान्तु, तस्मै स्वाहा ताभ्यः स्वाहा(१)" इति। ऋतेन (सत्येन) सह सर्वमनृतमभिभवतीति 'ऋताषाट्'। ऋतशब्दवाच्यो धाम (स्थानं) यस्य असौ 'ऋतधामा'। तादृशोऽग्निर्नामकः* कश्चित् 'गन्धर्वः', 'तस्य' ओषधिदेवताः 'अप्सरसः' (प्रियभार्या), 'ऊर्जः' इति तासां नामधेयम्; ऊर्जयति बलवन्तं प्राणवन्तं वा कुर्वन्तीत्यूर्जः। 'स' (गन्धर्वः) 'इदं ब्रह्म' (बृहत्) 'क्षत्रं' (फलसमर्थम्) इदं कर्म हविर्वा 'पातु' (रक्षतु फलपर्यवसन्नं करोतु)। 'ताः' च अप्सरसः 'इदं ब्रह्म क्षत्रं' च 'पान्तु' (तथा रक्षन्तु)। 'तस्मै' (गन्धर्वाय) 'स्वाहा' (हुतमस्तु)। 'ताभ्यः' (अप्सरोभ्यः) 'इदं स्वाहा' (हुतमस्तु)।

अथ द्वितीयपर्यायमाह,—"संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवः(२)" इति। सन्धीयते (सर्वम् अनुसन्धीयते) अनेनेति 'संहितः', विश्वानि सामानि (अवसितानि) अस्मिन्निति 'विश्वसामा', तादृशः सूर्यनामकः कश्चिद्गन्धर्वः, तस्य मरीचिदेवताः प्रियभार्याः, 'आयुवः' इति तासां नामधेयम्। आयन्ति शीघ्रमागच्छन्तीत्यायुवः नाम। 'स इदं ब्रह्म' इत्यादिकं सर्वत्रानुषञ्जनीयम्।

अथ तृतीयपर्यायमाह,—"सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयः(३)"† इति। शोभनं सुम्नं (सुखम्)

---

* एवमेव सर्व्वत्र पाठः। अग्निनामक इति तु भवितुं युक्तः।

† सर्व्वत्रैव एवं पाठः। व्युत्पत्त्यनुसारी तु 'वेकुरयः' इति पाठो भवितुं युक्तः।

अस्येति 'सुषुम्नः' सूर्यस्येव रश्मिर्यस्यासौ 'सूर्यरश्मिः'। चन्द्रमानामकः* कश्चिद् 'गन्धर्वः'। 'तस्य' नक्षत्रसदृशानि शरीराणि भार्याः, ताश्च बेकुरिनामकाः; चित्तविकारहेतुत्वात् 'बेकुरयः' इत्युच्यन्ते।

अथ चतुर्थपर्यायमाह,—"भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः स्तवाः[४]" इति। भुनक्ति (पालयति) विश्वमिति 'भुज्युः'। पक्षिवदाकाशगामित्वात् 'सुपर्णः'। तादृशो यज्ञनामकः कश्चिद् 'गन्धर्वः', 'तस्य' च दक्षिणारूपा देवता भार्याः, ताश्च (स्तूयन्ते इति व्युत्पत्त्या) 'स्तवाः' इत्युच्यन्ते।

अथ पञ्चमं पर्यायमाह,—"प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयः[५]" इति। प्रजानां पालकः 'प्रजापतिः' विश्वं कर्म (करणीयं) यस्यासौ 'विश्वकर्मा' तादृशो मनोनामकः कश्चिद् 'गन्धर्वः', 'तस्य' च ऋक्सामदेवता भार्याः, ताश्च सौन्दर्यं वहन्तीति 'वह्नयः' इत्युच्यन्ते।

अथ षष्ठं पर्यायमाह,—"इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदाः[६]" इति। इष्यमाणवस्तुसम्पन्नत्वात् 'इषिरः' विश्वं विशेषेणाञ्चति 'गच्छति' इति 'विश्वव्यचाः', तादृशो वातनामकः कश्चिद् 'गन्धर्वः', 'तस्य' अब्देवता भार्याः, ताश्च हर्षयुक्तत्वात् 'मुदाः' इत्युच्यन्ते।

अथ पर्यायेषु सप्तमं त्रयोदशादुपर्यं मन्त्रमाह,—"भुवनस्य पते यस्य ते उपरि गृहा इह च। स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिं[७]" इति। 'भुवनस्य'

* एवमेव सर्व्वत्र पाठः। चन्द्रमोनामक इति तु भवितुं युक्तः।

(सर्वलोकस्य) 'पते' हे पालक, 'यस्य' तव 'उपरि' (अन्तरिक्ष-द्युलोकयोः) 'इह च' पृथिव्यां 'गृहाः' सन्ति, स 'त्वं' 'नः' (अस्मभ्यं), 'आज्यानिं' 'रास्व' (वयोहान्यभावं देहि)। तथा 'रायस्पोषं' (धनपुष्टिं), 'सुवीर्यं' (शोभनपुत्रं), 'संवत्सरीणां स्वस्तिं' (संवत्सर-जीवनपरिमितां समृद्धिं च) देहि।

अथोत्तरस्मिन् पर्यायपञ्चके प्रथमपर्यायमाह,—"परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवः(८)" इति। परमे (सर्वोत्तमस्थाने) तिष्ठतीति 'परमेष्ठी', अधिकत्वेन फलपाता 'अधिपतिः', तादृशो मृत्युनामकः कश्चिद् 'गन्धर्वः', 'तस्य' विश्वाभिमानिन्यो देवता भार्याः, तास्तु भवन्ति (सर्वदा वर्तन्ते) इति 'भुवः' इत्युच्यन्ते।

अथ द्वितीयं पर्यायमाह,—"सुचितिः सुभूतिर्भद्रकृत्सुवर्वान् पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचः(९)" इति। शोभना चितिर्भूमिर्यस्यासौ 'सुचितिः' समीचीननिवासस्थान इत्यर्थः। शोभना भूतिः (ऐश्वर्यं) यस्यासौ 'सुभूतिः', भद्रं (कल्याणं) यजमानाय करोतीति 'भद्रकृत्'। 'सुवः' (स्वाधीनः स्वर्गलोकः) अस्यास्तीति 'सुवर्वान्' तादृशः पर्जन्यनामकः कश्चिद् 'गन्धर्वः', 'तस्य' च विद्युद्देवता भार्याः, तास्तु दीप्यमानत्वात् 'रुचः' इत्युच्यन्ते।

अथ तृतीयं पर्यायमाह,—"दूरेहेतिरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवः(१०)" इति। दूरेऽप्यवस्थितस्य प्रहार-साधनं हेतिर्यस्यासौ 'दूरेहेतिः', नामश्रवणमात्रेण सुखनिव-

र्त्तकत्वात् 'अन्तृडयः', तादृशो मृत्युनामकः कश्चिद् 'गन्धर्वः', 'तस्य' प्रजाभिमानिदेवता भार्याः, ताश्च बिभ्यति मृत्योरिति भीरुवः' इत्युच्यन्ते ।

अथ चतुर्थपर्यायमाह,—"चारुः कृपणकाशी कामो गन्धर्व-स्तस्याधयोऽप्सरसः शोचयन्तीर्नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा ताभ्यः स्वाहा(११)" इति । रमणीयचरणोपेतत्वात् रमणीयशरीरत्वाद्वा 'चारुः', कृपणेषु (इन्द्रियार्थेषु) प्रकाशयति (मनो दीपयतीति) 'कृपणकाशी', तादृशः कामनामकः कश्चिद् 'गन्धर्वः', 'तस्य' विषयाभिलाष-निमित्त-चित्तक्लेशाभिमानिदेवता भार्याः, ताश्चापेक्षितविषय-प्राप्त्यभावेन जनान् शोकयुक्तान् कुर्वन्तीति 'शोचयन्तीः' इत्युच्यन्ते । 'नाम, स इदं ब्रह्म' इत्यादेस्तु सर्वत्रानुषङ्गद्योतनाय पुनः पाठः ।

अथात्र पञ्चमं पर्यायरूपं द्वाविंशाहुतिसाधनं मन्त्रमाह,—"स नो भुवनस्य पते यस्य त उपरि गृहा इह च । उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ(१२)" इति । 'भुवनस्य' (सर्वलोकस्य) हे 'पते' (पालक), 'यस्य' तव उपरितनलोक-द्वये पृथिव्याञ्च 'गृहाः' 'सन्ति' स त्वं 'नः' (अस्मभ्यं) 'उरु' (विपुलं) 'शर्म' (सुखं) 'यच्छ', तथैव 'अस्मै' 'ब्रह्मणे' (ब्राह्मण-जातियुक्ताय) 'क्षत्राय' (समर्थाय) च 'महि शर्म यच्छ' (महत्सुखं देहि) ।

---

अत्र विनियोगसङ्ग्रहः—

अथ त्रयोदशजयाः 'चित्तञ्चे'त्यादयः श्रुताः।
'अग्नि'रभ्यातानमन्त्रा अष्टादश यथाश्रुताः॥
'ऋता' राष्ट्रभृतस्तद्वद्द्वाविंशतिरुदीरिताः।

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

राष्ट्रकाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रेणैवास्मै राष्ट्रमवरुन्धे राष्ट्रमेव भवति[१] आत्मने होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रं प्रजा राष्ट्रं पशवो राष्ट्रं यच्छ्रेष्ठो भवति राष्ट्रेणैव राष्ट्रमवरुन्धे वसिष्ठः समानानां भवति[२] ग्रामकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रꣳ सजाता राष्ट्रेणैवास्मै राष्ट्रꣳ सजातानवरुन्धे ग्रामी॥
॥ १॥

एव भवति[३] अधिदेवने जुहोत्यधिदेवन एवास्मै सजातानवरुन्धे त एनमवरुद्धा उपतिष्ठन्ते[४] रथमुख ओजस्कामस्य होतव्या ओजो वै राष्ट्रभृत ओजो रथ ओजसैवास्मा ओजोवरुन्धे ओजस्व्येव भवति[५] यो राष्ट्रादपभूतः स्यात् तस्मै होतव्या यावन्तोऽस्य रथाः

स्युस्तान् ब्रूयाद् युङ्ध्वमिति राष्ट्रमेवास्मै युनक्ति(६) ॥ ॥ २ ॥

आहुतयो वा एतस्या क्लृप्ता यस्य राष्ट्रं न कल्पते स्वरथस्य दक्षिणं चक्रं प्रवृह्य नाडीमभिजुहुयादाहुतीरेवास्य कल्पयति ता अस्य कल्पमाना राष्ट्रमनुकल्पते(७) सङ्ग्रामे संयत्ते होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रे खलु वा एते व्यायच्छन्ते ये सङ्ग्रामꣳ संयन्ति यस्य पूर्वस्य जुह्वति स एव भवति जयति तꣳ सङ्ग्रामं(८) मान्धुक इध्मः ॥ ३ ॥

भवत्यङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रतिवेष्टयन्ति(९) य उन्माद्येत्तस्मै होतव्या गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येते खलु वै गन्धर्वाप्सरसो यद्राष्ट्रभृतस्तस्मै स्वाहा ताभ्यः स्वाहेति जुहोति तेनैवैनां शमयति(१०) नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवत्येते वै गन्धर्वाप्सरसां गृहाः स्व एवैनान् ॥ ४ ॥

आयतने शमयति(११) अभिचरता प्रतिलोमꣳ होतव्याः प्राणानेवास्य प्रतीचः प्रतियौति तं ततो येन-केन च स्तृणुते(१२) स्वकृत इरिणे जुहोति प्रदरे वैतद्वा अस्यै निर्ऋतिगृहीतं निर्ऋतिगृहीत एवैनं निर्ऋत्या ग्राह-

यति यद्वाचः क्रूरं तेन वषट्करोति वाच एवैनं क्रूरेण प्रवृश्चति ताजगार्त्तिमार्च्छति(१३) यस्य कामयेतान्नाद्यं॥ ॥ ५ ॥

आददीयेति तस्य सभायामुत्तानो निपद्य भुवनस्य पत इति तृणानि संगृह्णीयात् प्रजापतिर्वै भुवनस्य पतिः प्रजापतिनैवास्यान्नाद्यमादत्त इदमहममुष्यामुष्यायणस्यान्नाद्यꣳ हरामीत्याहान्नाद्यमेवास्य हरति(१४) षड्भिर्हरति षड्वा ऋतवः प्रजापतिनैवास्यान्नाद्यमादायर्तवोऽस्मा अनु प्र यच्छन्ति(१५) ॥ ६ ॥

यो ज्येष्ठबन्धुरपभूतः स्यात् तꣳ स्थलेऽवसाय्य ब्रह्मौदनं चतुःशरावं पक्त्वा तस्मै होतव्या वर्ष्म वै राष्ट्रभृतो वर्ष्म स्थलं वर्ष्मणैवैनं वर्ष्म समानानां गमयति(१६) चतुःशरावो भवति दिक्ष्वेव प्रतितिष्ठति(१७) क्षीरे भवति रुचमेवास्मिन् दधाति(१८) उद्धरति शृतत्वाय(१९) सर्पिष्वान् भवति मेध्यत्वाय(२०) चत्वार आर्षेयाः प्राश्नन्ति दिशामेव ज्योतिषि जुहोति(२१) ॥ ७ ॥

ग्रामी। युनक्ति। इध्मः। स्व एवैनान्। अन्नाद्यं। यच्छन्ति। एकान्नपञ्चाशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

अनुवाके सप्तमेऽस्मिन् उक्ता राष्ट्रभृतोऽखिलाः।

अथाष्टमे तेषां काम्याः प्रयोगा उच्यन्ते। तत्रैकं प्रयोगं विधत्ते,—"राष्ट्रकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रेणैवास्मै राष्ट्रमवरुन्धे राष्ट्रमेव भवति"[१] इति। य एते पूर्वानुवाकोक्ता राष्ट्रभृत्संज्ञका मन्त्रास्तेषां राष्ट्रप्राप्तिहेतुत्वात् 'राष्ट्रम्' इत्युपचर्यते; अतस्तन्मन्त्रहोमलक्षणेन 'राष्ट्रेणैव' यजमानार्थं अध्वर्युर्भूमिविशेषरूपं 'राष्ट्रं' सम्पादयति। स च यजमानो राष्ट्रं प्राप्नोत्येव। अतो राष्ट्रप्राप्तिकाम-यजमानार्थमेते मन्त्रा होतव्याः।

अथ प्रजापश्वादिना आत्मोत्कर्षार्थं तैरेव मन्त्रैर्होमं विधत्ते,—"आत्मने होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रं प्रजा राष्ट्रं पशवो राष्ट्रं यच्छ्रेष्ठो भवति राष्ट्रेणैव राष्ट्रमवरुन्धे वसिष्ठः समानानां भवति[२]" इति। मन्त्राणां पूर्ववत्साधनत्वाद् राष्ट्रत्वं, सत्यपि भूमिविशेषरूपे राष्ट्रे, प्रजापशुश्रैष्ठ्यानामभावे सति भोगासम्भवात्, भूमिवद्भोगहेतुत्वेन प्रजादीनामपि राष्ट्रत्वम्। अतो राष्ट्ररूपमन्त्रेण 'राष्ट्रेण' प्रजादिरूपात्मोत्कर्षरूपं 'राष्ट्रम्' 'अवरुन्धे'। तथा सति 'समानानाम्' (अन्येषां) स्वयमेवातिशयेन निवासहेतुर्भवति।

अथ ग्रामप्राप्तये होमं विधत्ते,—"ग्रामकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रꣳ सजाता राष्ट्रेणैवास्मै राष्ट्रꣳ सजातानवरुन्धे ग्राम्येव भवति[१]" इति। स्वेन सहोत्पन्ना ज्ञातय एकग्रामनिवासिनश्च 'सजाताः', तेषु सर्वेषु सत्सु राष्ट्रं

सम्पूर्णं भवति इति तेषां राष्ट्रत्वम्। अतो मन्त्ररूपेण 'राष्ट्रेण' सजातरूपं 'राष्ट्रम्' 'अवरुन्धे'। ग्रामस्वामी 'भवति' 'एव'।

तस्य होमस्य देशविशेषं विधत्ते,—"अधिदेवने जुहोत्यधिदेवन एवास्मै सजातानवरुन्धे त एनमवरुद्धा उपतिष्ठन्ते[४]" इति। अधिदीव्यन्ति (द्यूतेन क्रीडन्ति) अस्मिन् स्थाने इत्यधिदेवनं, तत्र होमे सति, तस्मिन्नेव स्थाने ये सजाताः समागताः, तान् सर्वानधीनान् करोति। ते चाधीनाः सन्त एव सेवन्ते।

अथ फललाभाय होमं विधत्ते,—"रथमुख ओजस्कामस्य होतव्या ओजो वै राष्ट्रभृत ओजो रथ ओजसैवास्मा ओजोऽवरुन्ध ओजस्व्येव भवति[५]" इति। रथस्य यदीषाग्रं, तदग्रेरुपरि धारयित्वा तत्र जुहुयात्। राष्ट्रभृन्मन्त्राणां रथस्य च क्रतुहेतुत्वादोजस्त्वं। अतस्तदुभयरूपेण 'ओजसैव' यजमानस्य बलमधीनं करोति। ततो बलवान् 'भवति' 'एव'।

अथ राष्ट्राद् भ्रष्टस्य तत्प्राप्तये होमं विधत्ते,—"यो राष्ट्रादपभूतः स्यात्तस्मै होतव्या यावन्तोऽस्य रथाः स्युस्तान् ब्रूयाद्युङ्ध्वमिति राष्ट्रमेवास्मै युनक्ति[६]" इति। 'अस्य' राष्ट्रभ्रष्टस्य सतोऽपि 'यावन्तः' 'रथाः' 'सन्ति', तान् सर्वान् नरैर्योजयध्वमिति प्रैषं (ब्रूयात्)। अनेन प्रैषेण होमेन च 'अस्मै' भ्रष्टाय राष्ट्रं सम्पादयति।

यदा लब्धमपि राष्ट्रमिष्टसाधनमसमर्थन्न भवति, तदा प्रयोगविशेषं विधत्ते,—"आहुतयो वा एतस्याकॢप्ता यस्य राष्ट्रं न

कल्पते स्वरथस्य दक्षिणं चक्रं प्रवृह्य नाडीमभिजुहुयादाकृतीरेवास्य कल्पयति ता अस्य कल्पमाना राष्ट्रमनु-कल्पते"(७) इति। 'न कल्पते' (भोगे क्षमं यस्य न भवति), एतस्य पूर्वा 'आकृतयः' स्वकार्यक्षमा न भवन्ति, तदानीमयं स्वकीयरथस्य यत् 'दक्षिणं चक्रं', तदग्रेरुपरि धारयित्वा, तस्य चक्रस्य रन्ध्राभिमुखत्वेन 'जुहुयात्'। तदानीम् 'अस्य' 'आकृतीः' 'कल्पयति' 'एव' (स्वकार्यक्षम एव करोति)। 'ताः' च क्षमाः सत्यो 'राष्ट्रं' भोगे क्षमं कुर्वन्ति। अतस्ता आकृतीरनु राष्ट्रं क्षमं भवतीत्युच्यते।

अथ युद्धे प्रवृत्ते जयार्थिनो होमं विधत्ते,—"सङ्ग्रामे संयत्ते होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रे खलु वा एते व्यायच्छन्ते ये सङ्ग्रामꣳ संयन्ति यस्य पूर्वस्य जुह्वति स एव भवति जयति तꣳ सङ्ग्रामं(८)" इति। 'ये' युद्धं प्राप्नुवन्ति, 'एते' 'राष्ट्रे' निमित्तभूते सति कलहं कुर्वन्ति, तेषां च कलहं कुर्वतां मध्ये प्रथमं होमे प्रवृत्तस्य 'यस्य' एता राष्ट्रभृतो 'जुह्वति', 'स एव' समर्थो 'भवति'; न त्वन्यः। समर्थत्वाच्च 'तं सङ्ग्रामं' 'जयति'।

होताग्निं प्रज्वालयितुं काष्ठविशेषं विधत्ते,—"मान्धुक इध्मो भवत्यङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रतिवेष्टयन्ति(९)" इति। मधुकवृक्षस्य* सम्बन्धी काष्ठविशेषो 'मान्धुकः', तेन प्रत्यमित्रं पृथगग्निमुपसमाधाय जुहुयात्, तत्र मधुककाष्ठजन्या ये 'अङ्गाराः', ते 'एव' अस्य यजमानस्य विरोधि-

* 'मधूकवृक्षस्य' इति C. पुस्तके पाठः। एवं परत्रापि। एतदनुसारेण मान्धूक इति संहितायां पाठो भवितुं युक्तः।

पुरुषाणां 'एनां' प्रत्येकं 'वेष्टयन्ति'। परकीये कटकेऽग्निबाधा जायते; पुरुषाणां वा शरीरेषु ज्वरादिसन्तापो जायत इत्यर्थः।

अथोन्मादपरिहाराय होमं विधत्ते,—"य उन्माद्येत्तस्मै होतव्या गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येते खलु वै गन्धर्वाप्सरसो यद्राष्ट्रभृतस्तस्मै स्वाहा ताभ्यः स्वाहेति जुहोति तेनैवैनान् शमयति[१०]" इति। 'यः' पुरुष उन्मत्तो भवति, एनं 'गन्धर्वाप्सरसः' एवोन्मत्तं कुर्वन्ति, राष्ट्रभृन्मन्त्राश्च 'गन्धर्वाप्सरसः', तद्देवत्यत्वात्; गन्धर्वानुद्दिश्य 'तस्मै स्वाहा' इति; अप्सरस उद्दिश्य 'ताभ्यः स्वाहेति' जुहुयात्। 'तेन' होमेन, उभयविधान् उन्मादयितॄन् शान्तान् करोति।

अत्रापि पूर्ववदग्निं प्रज्वालयितुं काष्ठविशेषान् विकल्पितान् दर्शयति,—"नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवत्येते वै गन्धर्वाप्सरसां गृहाः स्व एवैनान् आयतने शमयति[११]" इति। 'एते' न्यग्रोधादयः। वैशब्दो लोकप्रसिद्धिं दर्शयति।

अभिचारार्थतयैतद्धोमं विधत्ते,—"अभिचरता प्रतिलोमꣳ होतव्याः प्राणानेवास्य प्रतीचः प्रतियौति तं ततो येन-केन च स्तृणुते[१२]" इति। प्रतिलोममन्त्रादिक्रमेण, 'अस्य' अभिचरितस्य, 'प्राणान्' 'प्रतीचः' प्राणापानादीन् विपरीतस्थानैः 'प्रतियौति' (प्रतिकूलत्वेन योजयति)। ततस्तमनायासेनैव हिनस्ति।

देशं विधत्ते,—"स्वकृत इरिणे जुहोति प्रदरे वैतद्वा अस्यै निर्ऋतिगृहीतं निर्ऋतिगृहीत एवैनं निर्ऋत्या ग्राहयति यद्वाचः क्रूरं तेन वषट्करोति वाच एवैनं क्रूरेण प्रवृश्चति ताजगार्ति-

मार्च्छति[१३]" इति। ऊषररूपायां सुषिररूपायां वा भूमावभिचारदेवतायाः स्वस्थाने तम् 'एनं' शत्रुं 'निर्ऋत्या' (तया देवतया) 'ग्राहयति', 'वाचः' 'क्रूरेण' (वषट्कारेण) 'एनं' प्रकर्षेण 'वृश्चति' (छिनत्ति)। ततः झटित्यार्त्तो भवति।

शत्रोरन्नाद्यस्य अन्नादनशक्तेस्तु हरणकामस्य कर्मविशेषं विधत्ते,—"यस्य कामयेतान्नाद्यमाददीयेति तस्य सभायामुत्तानो निपद्य भुवनस्य पत इति तृणानि सङ्गृह्णीयात् प्रजापतिर्वै भुवनस्य पतिः प्रजापतिनैवास्यान्नाद्यमादत्ते इदमहममुष्य आमुष्यायणस्यान्नाद्यꣳ हरामीत्याह अन्नाद्यमेवास्य हरति[१४]" इति। 'सभायाम्' उत्तानशरीरो निपतितः सन् 'तृणानि', 'भुवनस्य पते—इति' 'सङ्गृह्णीयात्'।

तत्र मन्त्रसङ्ख्यां विधत्ते,—"षड्भिर्हरति षड्वा ऋतवः प्रजापतिनैवास्यान्नाद्यमादाय ऋतवोऽस्मै अनु प्रयच्छन्ति[१५]" इति। 'षड्भिः' 'स नो भुवनस्य पते' इत्यन्तैः।

परकृतभयवतस्तत्परिहाराय कर्मान्तरं विधत्ते,—"यो ज्येष्ठबन्धुरपभूतः स्यात् तꣳ स्थलेऽवसाय्य ब्रह्मौदनञ्चतुःशरावं पक्त्वा तस्मै होतव्या वर्ष्म वै राष्ट्रभृतो वर्ष्म स्थलं वर्ष्मणैवैनं वर्ष्म समानानां गमयति[१६]" इति। 'ज्येष्ठबन्धुः' सन् 'यः' 'अपभूतः' (स्वयं ततो निकृष्टस्तत्पराभूत इति यावत्), 'तं स्थले' (उच्चप्रदेशे) 'अवसाय्य' (उपवेश्य) 'तस्मै' (तत्फलसिद्धये) 'होतव्याः' 'राष्ट्रभृतः', 'स्थलं' च 'वर्ष्म' (शरीरं), उभयविधेन 'वर्ष्मणैव' यजमानं स्व-'समानानां' पुरुषाणां शरीरस्थानीयं करोति,—

अग्नौ शरीरवत् प्रधानभूतः, इतरे हस्तादिवदुपसर्जनभूता यथा भवति, तथा करोतीत्यर्थः ।

शरावसङ्ख्यां प्रशंसति,—"चतुःशरावो भवति दिक्ष्वेव प्रतितिष्ठति(१७)" इति । दिशां चतुष्टयात्* तत्सङ्ख्यया तत्र प्रतिष्ठा युक्ता ।

पाकसाधनद्रव्यं विधत्ते,—"क्षीरे भवति रुचमेवास्मिन् दधाति(१८)" इति । 'रुचं' स्वादुत्वम् ।

पच्यमानस्य ओदनस्यापक्वत्वपरिहारार्थं दर्व्या उद्धरणं विधत्ते,—"उद्धरति शृतत्वाय(१९)" इति । 'शृतत्वाय' पक्वत्वाय ।

पक्वस्य घृताप्लुतत्वं विधत्ते,—"सर्पिष्वान् भवति मेध्यत्वाय(२०)" इति ।

हुतशेषस्य ऋषिसमानैरेवान्यैः प्राशनं विधत्ते,—"चत्वार आर्षेयाः प्राश्नन्ति, दिशामेव ज्योतिषि जुहोति(२१)" इति । चतुर्दिक्सम्बन्धिवह्निस्थानीयाश्चत्वारो ब्राह्मणाः, अतस्तैः प्राशितम् अग्नावेव हुतं भवति ।

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

---

* 'चतुष्टयत्वात्' इति पाठो भवितुं युज्यते ।

देविका निर्वपेत् प्रजाकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै प्रजाश्छन्दोभिरेवास्मै प्रजाः प्रजनयति(१) प्रथमं धातारं करोति मिथुनी एव तेन करोत्यन्वेवास्मा अनुमतिर्मन्यते राते राका प्र सिनीवाली जनयति प्रजास्वेव प्रजातासु कुह्वा वाचं दधाति(२) एता एव निर्वपेत् पशुकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसि ॥ १ ॥

इव खलु वै पशवश्छन्दोभिरेवास्मै पशून् प्रजनयति प्रथमं धातारं करोति प्रैव तेन वापयत्यन्वेवास्मा अनुमतिर्मन्यते राते राका प्र सिनीवाली जनयति पशूनेव प्रजातान् कुह्वा प्रतिष्ठापयति(३) एता एव निर्वपेद् ग्रामकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै ग्रामश्छन्दोभिरेवास्मै ग्रामं ॥ २ ॥

अवरुन्धे मध्यतो धातारं करोति मध्यत एवैनं ग्रामस्य दधाति(४) एता एव निर्वपेत् ज्योगामयावी छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतमभिमन्यन्ते यस्य ज्योगामयति छन्दोभिरेवैनमगदं करोति मध्यतो धातारं करोति मध्यतो वा एतस्याक्लृप्तं यस्य ज्योगामयति मध्यत एवास्य तेन कल्पयति(५) एता एव निः ॥ ३ ॥

वपेद्यं यज्ञो नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोपनमन्ति यं यज्ञो नोपनमति प्रथमं धातारं करोति मुख एवास्मै छन्दाꣳसि दधात्युपैनं यज्ञो नमति[१] एता एव निर्वपेदीजानश्छन्दाꣳसि वै देविका यातयामानीव खलु वा एतस्य छन्दाꣳसि य ईजान उत्तमं धातारं करोति ॥ ४ ॥

उपरिष्टादेवास्मै छन्दाꣳस्ययातयामान्यवरुन्धे उपैनमुत्तरो यज्ञो नमति[७] एता एव निर्वपेद्यं मेधा नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोपनमन्ति यं मेधा नोपनमति प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं मेधा नमति[८] एता एव निर्वपेत् ॥ ५ ॥

रुक्कामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै रुक् छन्दोभिरेवास्मिन् रुचं दधाति क्षीरे भवन्ति रुचमेवास्मिन् दधति मध्यतो धातारं करोति मध्यत एवैनꣳ रुचो दधाति[९] गायत्री वा अनुमतिस्त्रिष्टुग्राका जगती सिनीवाल्यनुष्टुप् कुहूर्धाता वषट्कारः[१०] पूर्वपक्षो राका परपक्षः कुहूरमावास्या सिनीवाली पौर्णमास्यनुमतिश्चन्द्रमा धाता[११]ऽष्टौ ॥ ६ ॥

वसवोऽष्टाक्षरा गायत्र्येकादश रुद्रा एकादशाक्षरा

त्रिष्टुब् द्वादशादित्या द्वादशाक्षरा जगती प्रजापति-रनुष्टुब् धाता वषट्कारः[१२] एतद्वै देविकाः सर्वाणि च छन्दाꣳसि सर्वाश्च देवता वषट्कारः[१३] ता यत् सह सर्वा निर्वपेदीश्वरा एनं प्रदहो द्वे प्रथमे निरुप्य धातुस्तृतीयं निर्वपेत्तथो एवोत्तरे निर्वपेत्तथैनं न प्रदहन्ति, अथो यस्मै कामाय निरुप्यन्ते तमेवाभि-रूपाप्नोति[१४] ॥ ७ ॥

पशुकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसि । ग्रामं । कल्पयति[५] एता एव निः । उत्तमं धातारं करोति । मेधा नमति[८] एता एव निर्वपेत् । अष्टौ । दहन्ति । नव च ॥८॥

देविकाः, प्रजाकामः, मिथुनो, पशुकामः, प्रैव, ग्रामकामः, ज्योगामयावी, यं यज्ञो, यं ईजानः, यं मेधा, रुक्कामः, अष्टौ* ॥ ९ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थ-प्रपाठके नवमोऽनुवाकः ॥ ० ॥

अष्टमे राष्ट्रभृद्धोमास्तत्कामाय वर्णिताः ।

अथ नवमे देविकाख्यानां राजसूयप्रकरणोत्पन्नानां 'धात्रे पुरोडाशम्' इत्यादीनां पञ्चहविषामुत्कर्षं कृत्वा बहुविधकाम्य-प्रयोगो निरूप्यते ।

---

* एष च सन्दर्भः A. संहितापुस्तके नास्ति ।

तत्रैकं प्रयोगं विधत्ते,—"देविका निर्वपेत् प्रजाकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै प्रजाश्छन्दोभिरेवास्मै प्रजाः प्रजनयति(१)" इति। दीव्यन्ति, अपेक्षितं फलविशेषं प्रकाशयन्ति इति धात्रादयः पञ्चेष्टयो 'देविकाः'। अनुमत्यादयः स्त्रीरूपत्वाद्देव्यः, तदीयत्वादेता 'देविकाः'। 'गायत्री वा अनुमतिः' इत्यादिच्छन्दोरूपत्वमनुत्यादीनामुच्यते, तद्द्वारा 'देविकाः' अपि 'छन्दांसि' एव। यथा छन्दांसि फलहेतुत्वात् सुखकराणि; एवं 'प्रजाः' अपि सुखहेतुत्वाच्छन्दःसमानाः, अतो देविकारूपैः 'छन्दोभिरेव' यजमानार्थं 'प्रजाः' उत्पादयति।

धात्रादीनां पञ्चानां प्रजोत्पत्तौ दृश्यगुणयोगं प्रशंसति,—"प्रथमं धातारं करोति मिथुनी एव तेन करोत्यनु एव अस्मै अनुमतिर्मन्यते, राते राका, प्र सिनीवाली जनयति, प्रजास्वेव प्रजातासु कुह्वा वाचं दधाति(२)" इति। पञ्चानां देवानां मध्ये, 'धातारं' 'प्रथमं' 'करोति' इति यत्, तेन यजमानं स्वपत्न्या सह 'मिथुनी'-'करोति 'एव'। 'अनुमतिः' 'अस्मै' यजमानाय तन्मिथुनीकरणम् 'अनु'-'मन्यते' 'एव'। 'राका' प्रजां ददाति; 'सिनीवाली' गर्भस्थां 'प्रजाम्' उत्पादयति। उत्पन्नासु 'प्रजासु' 'कुहू'-देवताद्वारेण 'वाचं दधाति', सम्भाषणाभ्यासं करोति इत्यर्थः।

अथ फलान्तराय विधत्ते,—"एता एव निर्वपेत्पशुकामः, छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै पशवश्छन्दोभिरेवास्मै पशून् प्रजनयति प्रथमं धातारं करोति प्रैव तेन वाप-

यति अनु एव अस्मै अनुमतिर्मन्यते, राते राका प्र सिनीवाली जनयति, पशूनेव प्रजातान् कुह्वा प्रतिष्ठापयति[३]” इति। प्रथमेन धात्रा गवादिषु बीजावापः सम्पद्यते। प्रजातानां पशूनां तृणोदकादिपोषणेन प्रतिष्ठापनं कुह्वा क्रियते। शेषं पूर्ववत्।

फलान्तराय विधत्ते,—“एता एव निर्वपेद्ग्रामकामश्छन्दांसि वै देविकाश्छन्दांसीव खलु वै ग्रामश्छन्दोभिरेवास्मै ग्राममवरुन्धे मध्यतो धातारं करोति मध्यत एवैनं ग्रामस्य दधाति[४]” इति। अनुमतिराकाभ्यामूर्द्ध्वं, सिनीवाली-कुहूभ्यामधस्तात्, मध्यं, तत्र ‘धातारं’ स्थापयेत्। तेनैव यजमानं ‘ग्रामस्य’ मध्ये ‘एव’ आधिपत्ये स्थापयति।

फलान्तराय विधत्ते,—“एता एव निर्वपेत् ज्योक् आमयावी छन्दांसि वै देविकाश्छन्दांसि खलु वा एतमभिमन्यन्ते यस्य ज्योक् आमयति, छन्दोभिरेवैनमगदं करोति, मध्यतो धातारं करोति मध्यतो वा एतस्य अक्लृप्तं यस्य ज्योक् आमयति मध्यत एवास्य तेन कल्पयति[५]” इति। ‘यस्य’ पुरुषस्य ‘ज्योक्’ (चिरम्) ‘आमयति’ (व्याधिबाधा भवति), एनं पुरुषं, ‘छन्दांसि’ ‘अभिमन्यन्ते’ (अभिक्रुध्यन्ति), अतो देविकानिर्वापतुष्टैः ‘छन्दोभिरेवैनं’ रोगरहितं ‘करोति’। अत्रापि पूर्ववद्धातारं मध्यतः कुर्यात्। ‘यस्य’ दीर्घव्याधिः तस्योदरमध्ये यत्किञ्चित् ‘अक्लृप्तम्’ (असामर्थ्यं) भवति। अतः ‘तेन’ (धातुर्मध्यस्थापनेन) ‘अस्य’ (रोगिणः) उदरमध्ये ‘एव’ ‘कल्पयति’ (सामर्थ्यं जनयति)।

अथ ज्योतिष्टोमादियज्ञप्राप्तये विधत्ते,—"एता एव निर्वपेद्यं यज्ञो नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोपनमन्ति यं यज्ञो नोपनमति, प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं यज्ञो नमति(६)" इति। 'यं' पुरुषं केनापि विघ्नेन 'यज्ञः' न प्राप्नोति, एनं पुरुषं यज्ञसाधनानि 'छन्दांसि' एव प्रथमं न प्राप्नुवन्ति,* तत्र धातुः 'प्रथमं' स्थापने सति अनुकूलत्वेन प्रथमत एव यजमानार्थं 'छन्दांसि' धृतानि भवन्ति; छन्दःस्वनुकूलेषु† सत्सु 'यज्ञः' 'एनं' प्राप्नोति।

प्राप्तयज्ञस्योत्तरयज्ञसिद्ध्यर्थं विधत्ते,—"एता एव निर्वपेदीजानश्छन्दाꣳसि वै देविका यातयामानीव खलु वा एतस्य छन्दाꣳसि य ईजान उत्तमं धातारं करोति, उपरिष्टादेवास्मै छन्दाꣳसि अयातयामानि अवरुन्धे उपैनमुत्तरो यज्ञो नमति(७)" इति। 'यः' पुरुषः 'ईजानः' पूर्वमिष्टवान् भवति, 'एतस्य छन्दांसि' पूर्वयज्ञे व्याप्तत्वाद्भुतसाराणीव भवन्ति, तत्र चरमस्थाने धातुः करणेन, 'उपरिष्टात्' करिष्यमाणयज्ञे 'छन्दांसि' अगतसाराणि सम्पादयति; ततः 'उत्तरो यज्ञः' 'एनम्' 'उप'-'नमति', पुनरपि प्रतिष्ठां गच्छतीत्यर्थः।

अथ मेधाप्राप्तये विधत्ते,—"एता एव निर्वपेद् यं मेधा नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोपनमन्ति

---

* एष च पाठः केवलं E. पुस्तकेऽस्ति। अन्यत्र सर्व्वत्र 'प्राप्नोति' इत्यसमीचीनः पाठः।

† एष च केवलं E. पुस्तके पाठोऽस्ति। अन्यत्र सर्व्वत्रैव, 'छन्दांस्यनुकूलेषु' इत्यसमीचीनः पाठः।

यं मेधा नोपनमति, प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं मेधा नमति(८)" इति। ग्रन्थधारणशक्तिर्मेधा। एतद्वाक्यं यज्ञप्राप्तिवाक्यवद् व्याख्येयम्।

अथ कान्तिप्राप्तये विधत्ते,—"एता एव निर्वपेद् रुक्काम-श्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै रुक् छन्दोभिरेवास्मिन् रुचं दधाति चीरे भवन्ति रुचमेवास्मिन् दधति मध्यतो धातारं करोति मध्यत एवैनꣳ रुचो दधाति(९)" इति। कान्तेः प्रियत्वेन छन्दःसाम्यम्। अत्र चरूणां चतुर्णां पाकसाधनं चीरम्। धातुः 'मध्यतः' करणेन, कान्तेः 'मध्यतः' 'एव' यजमानं स्थापयति।

गायत्र्यादिच्छन्दोरूपेणानुमत्यादिदेवताः प्रशंसति,—"गायत्री वा अनुमतिस्त्रिष्टुग्राका जगती सिनीवाल्यनुष्टुप् कुहूर्धाता वषट्कारः(१०)" इति। गायत्र्यादिच्छन्दांसि यथा अभीष्टं साधयन्ति, एवमनुमत्यादीनामभीष्टसाधनत्वाद् गायत्र्यादिरूपत्वम्।

अनेनैव न्यायेन पूर्वपक्षादिरूपत्वं दर्शयति,—"पूर्वपक्षो राका परपक्षः कुहूरमावास्या सिनीवाली पौर्णमास्यनुमतिश्चन्द्रमा धाता(११)" इति। "पूर्णे राका निशाकरे" (अमर०) इत्युक्तत्वात् पूर्णचन्द्रमण्डलोपेता 'राका', सा च शुक्लपक्षस्वरूपा। "नष्टेन्दुकला कुहूः" इत्युक्तत्वात् चन्द्रकलालेशेनापि हीना 'कुहूः', सा च कृष्णपक्षस्वरूपा। "सा दृष्टेन्दुः सिनीवाली" इत्युक्तत्वात् चतुर्दशीमिश्रिता कृष्णा पञ्चदशी 'सिनीवाली', सा च अत्र अमावास्यास्वरूपत्वेन विवक्षिता। "कलाहीने साऽनुमतिः" इत्युक्तत्वात् चतुर्दशीमिश्रा शुक्लपञ्चदशी 'अनुमतिः'। सा चात्र पौर्णमासीतिथिरूप-

त्वेन विवक्षिता। उक्तयोः पक्षयोः तिथ्योश्च निष्पादको यः 'चन्द्रमाः', सोऽत्र धातृरूपेण विवक्षितः।

इत्थं पूर्वपक्षादिरूपेण प्रशस्य, पुनर्वस्वादिरूपेण प्रशंसति,—"अष्टौ वसवोऽष्टाक्षरा गायत्र्येकादशरुद्रा एकादशाक्षरा त्रिष्टुप् द्वादशादित्या द्वादशाक्षरा जगती प्रजापतिरनुष्टुब्धाता वषट्कारः(१२)" इति। या अनुमत्यादयो गायत्र्यादिभावमापादिताः, तासां सङ्ख्यासाम्याद्वस्वादिरूपत्वम्। या कुहूरनुष्टुप्त्वेन निरूपिता, सा प्रजापतिरूपा,—'अनुष्टुभो वा इमानि भूतानि जायन्ते' इति शाखान्तरे प्रजापतिवत् अनुष्टुभः सर्वोत्पादकत्वश्रवणात्। वषट्कारवत् मुख्यत्वेन धातुस्तद्रूपत्वम्।

प्रशंसां निगमयति,—"एतद्वै दैविकाः सर्वाणि च छन्दाꣳसि सर्वाश्च देवता वषट्कारः(१३)" इति। यत्प्रशंसार्थं 'गायत्री वा अनुमतिः' इत्यादिनिरूपणम्, एतदेव दैविकानां सर्वच्छन्दोरूपत्वं सर्वदेविकारूपत्वं वषट्काररूपत्वं च।

अथ पञ्चानामेतेषां त्रेधा निर्वापं विधत्ते,—"ता यत्सह सर्वा निर्वपेदीश्वरा एनं प्रदहो द्वे प्रथमे निरुप्य धातुस्तृतीयं निर्वपेत्तथो एवोत्तरे निर्वपेत्तथैनं न प्रदहन्त्ययो यस्मै कामाय निरुप्यन्ते तमेवाभिरुपाप्नोति(१४)" इति। 'ताः' (दैविकाः) पञ्चापि सह निरुप्ताः सत्यः, 'एनं' यजमानं प्रदग्धुमीश्वराः, तस्मादनुमत्याः राकायाश्च चरुद्वयं 'निरुप्य', ततस्तृतीयत्वेन 'धातुः' पुरोडाशं निर्वपेत्। तत ऊर्द्ध्वं सिनीवाल्याः कुह्वाः* चरुद्वयं निर्वपेत्तथा

* कुह्वाश्च इति पाठो भवितुं युक्तः।

सति 'एनं' यजमानं देविका न 'प्रदहन्ति'। अथ 'यस्मै कामाय निरुप्यन्ते', 'तं' 'कामम्' 'आभिः' देवताभिः 'प्राप्नोति' 'एव'।

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः॥ ०॥

---

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो जुषस्व शन्न एधि द्विपदे शं चतुष्पदे[१]। वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या। आवः क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः[२]। यत् सायं-प्रातरग्निहोत्रं जुहोत्याहुतीष्टका एव ता उपधत्ते॥ १॥ यजमानोऽहोरात्राणि वा एतस्येष्टका य आहिताग्निर्यत् सायम्प्रातर्जुहोत्यहोरात्राण्येवाप्तेष्टकाः कृत्वोपधत्ते[३]* दश समानत्र जुहोति दशाक्षरा विराड् विराजमेवाप्तेष्टकां कृत्वोपधत्तेऽथो विराज्येव यज्ञमाप्नोति चित्यश्चित्योऽस्य भवति[४] तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्ववास्त्वेव तद्यत्ततोऽर्वाचीनं॥ २॥ रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयं प्रयायाद् रुद्र एनं भूत्वाग्निरनूत्थाय हन्याद्वास्तोष्प-

* इतः प्रभृति न मन्त्रः, किन्तु ब्राह्मणरूपः।

तीयं जुहोति भागधेयेनैवैनꣳ शमयति नार्तिमार्छति यजमानो(५) यद्युक्ते जुहुयाद्यथा प्रयाते वास्तावाहुतिं जुहोति तादृगेव तद्यदयुक्ते जुहुयाद्यथा क्षेम आहुतिं जुहोति तादृगेव तदहुतमस्य वास्तोष्पतीयꣳ स्यात् ॥ ॥ ३ ॥

दक्षिणो युक्तो भवति सव्योऽयुक्तोऽथ वास्तोष्पतीयं जुहोत्युभयमेवाकरपरिवर्गमेवैनꣳ शमयति(६) यदेकया जुहुयाद्दर्विहोमं कुर्यात् पुरोनुवाक्यामनूच्य याज्यया जुहोति स देवत्वाय(७) यद्धुत आदध्याद् रुद्रं गृहानन्वारोहयेद्यदवक्षाणान्यसंप्रक्षाप्य प्रयायाद्यथा यज्ञवेशसं वा दहनं वा तादृगेव तदयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयति ॥ ४ ॥

एष वा अग्नेर्योनिः स्व एवैनं योनौ समारोहयति(८) अथो खल्वाहुर्यदरण्योः समारूढो नश्येदुदस्याग्निः सीदेत् पुनराधेयः स्यादिति या ते अग्ने यज्ञिया तनूस्तयेह्यारोहेत्यात्मन्त्समारोहयते यजमानो वा अग्नेर्योनिः स्वायामेवैनं योन्याꣳ समारोहयते(९) ॥ ५ ॥

धत्ते । अर्वाचीनं । स्यात् । समारोहयति । पञ्चचत्वारिꣳशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥ ० ॥

नवमे देविकाख्यानि हवींष्युक्तानि विस्तरात् ।

अथ दशमे प्रयाणं करिष्यतोऽग्निहोत्रिणोऽग्निसमारोपणमभिधीयते। कल्पः,—'गृहः प्रयास्यन् वास्तोष्पतीयं जुहोति, वास्तोष्पत इत्यनुद्रुत्योत्तरया गार्हपत्ये जुहोति' इति । प्रथममन्त्रपाठस्तु,—"वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शं न एधि द्विपदे शं चतुष्पदे(१)" इति। अग्निहोत्रिणो गार्हपत्याग्निरेव गृहस्थानीयः, तेन सह यदा प्रयास्यति, तदानीं पत्नीसहितोऽग्निं गृहीत्वा प्रयास्यन्नुत्तरेण मन्त्रेण होतुमिमां पुरोनुवाक्यामनुब्रूयात्। तस्य मन्त्रस्यायमर्थः । 'वास्तोः' (अग्निहोत्रनिवासस्थानस्य गृहस्य) हे 'पते' (पालक), गार्हपत्य, 'अस्मान्' 'प्रतिजानीहि' (ग्रामान्तरे यियासून् प्रतिबुध्यस्व)। ततोऽस्माकं, 'स्वावेशः' (सुखेनावेशयिता, वासयिता) 'भव'। 'अनमीवो' (रोगनिवारकश्च) 'भव'। 'यत्' कार्यमुद्दिश्य त्वां वयम् 'ईमहे' (प्राप्नुमः), प्रार्थयामह इत्यर्थः । 'नः' (अस्मदर्थं), 'तत्' (कार्यं) 'जुषस्व' (प्रीतिपूर्वकं सेवस्व) । ततोऽस्माकं 'द्विपदे' (मनुष्याय) 'चतुष्पदे' (पशवे) च 'शम्' 'एधि' (सुखहेतुर्भव)। द्विपदे शं भव, चतुष्पदे च शं भवेति वाक्यभेदाय शमित्यस्य द्विः-पाठः ।

द्वितीयमन्त्रपाठस्तु,—"वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या । आवः क्षेमे उत योगे वरं ते यूयं पात स्वस्तिभिः सदा नः(२)" इति। हे 'वास्तोष्पते', 'संसदा' (त्वदीयया सभया), 'सक्षीमहि' (वयं संसक्ता भूयास्म)। कीदृश्या संसदा?—

'शग्मया' (सर्वार्थसाधनशक्तया), 'रण्वया' (रमणीयया), 'गातुमत्या' (गातुर्गतिरवगतिः, तद्युक्तया) सर्वज्ञयेत्यर्थः। त्वं 'नः', (अस्माकं) 'योगे' (योगनिमित्तं), 'वरम्' 'आवः' (सम्यक् रक्ष)। 'उत' (अपि च), 'क्षेमे' (क्षेमनिमित्तं) सम्यक् रक्ष। अलब्धस्यापेक्षितस्य लाभो योगः, लब्धस्य सर्वार्थस्य परिपालनं क्षेमः। यूयमिति पूजार्थं बहुवचनम्। 'ते' 'यूयं' 'नः' (अस्मान्) 'स्वस्तिभिः' (नानाविधश्रेयोभिः) 'पात' (रक्षत)।

अथैनं होमं विधातुं प्रस्तौति,— "यत्सायंप्रातरग्निहोत्रं जुहोत्याहुतीष्टका एव ता उपधत्ते यजमानोऽहोरात्राणि वा एतस्येष्टका य आहिताग्निर्यत्सायंप्रातर्जुहोति अहोरात्राण्येवाप्त्वेष्टकाः कृत्वोपधत्ते[३]" इति। अग्निहोत्री कालद्वयेन 'अग्निहोत्रं जुहोति' इति 'यत्', 'ताः' सर्वा आहुतिरूपा 'इष्टकाः' 'एव' 'यजमानः' 'उपधत्ते'। यद्यप्यत्र मृन्मया इष्टका न सन्ति, तथापि, 'यः' पुरुषः 'आहिताग्निः' भवति, 'एतस्य' 'अहोरात्राणि' एव 'इष्टकाः' सम्पद्यन्ते। अतो यदि 'सायंप्रातः' नियमेन 'जुहोति' तदानीमनुष्ठानेन 'अहोरात्राण्येव' प्राप्तकालरूपा 'इष्टकाः कृत्वा' उपधानं कृतवान् भवति।

पुनः प्रकारान्तरेण प्रस्तौति,—"दश समानत्र जुहोति दशाक्षरा विराट् विराजमेवाप्त्वेष्टकां कृत्वोपधत्तेऽथो विराज्येव यज्ञमाप्नोति चित्यश्चित्योऽस्य भवति[४]" इति। 'समानत्र' (एकत्र), 'दश' दिनानि स्थित्वा यदाऽग्निहोत्रं 'जुहोति', तदा दशसङ्ख्यासामान्यात् 'विराट्' सम्पद्यते; अतोऽग्निहोत्री 'विराजमेव'

प्राप्य तां विराजम् एकाष्टकां 'कृत्वा' उपधानं कृतवान् भवति। अपि च 'विराजि' लब्धायाम् अग्निष्टोमयज्ञं प्राप्नोति। अत एव सप्तमकाण्डेऽग्निष्टोमप्रस्तावे 'विराजमभिसम्पद्यते' इति वक्ष्यते। तदेवम् 'अस्य' (अग्निहोत्रिणः) 'चित्यश्चित्यो' 'भवति' (त्रिविधाश्चित्याग्नयः सम्पद्यन्ते, (सायंप्रातर्होमाहुतिरूपाभिरिष्टकाभिश्चित एकोऽग्निः, अहोरात्रकालरूपाभिरिष्टकाभिश्चितो द्वितीयोऽग्निः, विराड्रूपेष्टकया चितस्तृतीयोऽग्निः)। एवमस्य त्रिविधचित्याग्निसम्पत्तिः* ।

इदानीं विधत्ते,—"तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्ववास्त्वेव तत् यत् ततोऽर्वाचीनं रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयं प्रयायाद्रुद्र एनं भूत्वाऽग्निरनूत्थाय हन्याद्वास्तोष्पतीयं जुहोति भागधेयेनैवैनꣳ शमयति नार्तिमार्च्छति यजमानः(५)" इति। यस्मादेकत्र दशरात्रहोमेन विराट्सम्पत्तिः, 'तस्माद्यत्र दश' दिनानि 'उषित्वा' पश्चादग्निहोत्री 'प्रयाति', स देशो यज्ञभूमिः, 'ततोऽर्वाचीनं' कालं यत्र वसति सेयमयज्ञभूमिः 'एव', अतो दश रात्रीरेकत्रोषित्वा यत्पश्चात्प्रयाणन्तद्धोमनिमित्तम्। तस्मिन् होमे रुद्रशब्दाभिधेयो गार्हपत्याग्निर्देवता, तस्य वास्तोष्पतित्वात्। एवं सति यदि वास्तोष्पतीयहोममहुत्वा प्रयाणं कुर्यात्, ततो गार्हपत्याग्निः क्रूरो भूत्वा यजमानम् 'अनु' 'उत्थाय' "हन्यात्"। अतस्तत्परिहाराय प्रयाणकाले 'वास्तोष्पतीयं' जुहुयात्, तेन होमभागं दत्वा तमग्निं शान्तं करोति, ततो यजमानो न म्रियते।

---

* 'त्रिविधा चित्ताग्निसम्पत्तिः' इति J पु० पाठः।

(अग्निराहित्यं यथा न भवति तथा शान्तानि अकृत्वा) प्रयाणं कुर्यात्, तदा केनचित् यज्ञविघातः कृतः, यथा वा गृहदहनं कृतं,. तादृशमेव तदङ्गाराणामशमनं स्यात्, अतस्तत्परिहारार्थम् 'अयन्ते योनिः' इतिमन्त्रेण तमग्निम् 'अरण्योः' समारोहयेत्। एषोऽरण्योः सङ्गो वह्नेः कारणं, ताभ्यामुत्पन्नत्वात्, ततस्तमग्निं स्वकीये 'योनौ' समारूढङ्करोति। मन्त्रस्तु "उप प्रयन्तो अध्वरम्" इत्यनुवाके (१का०।५प्र०।५अ०) समाम्नातत्वात्तत्रैव व्याख्यातः।

अरणिसमारोहणं पाक्षिकदोषग्रस्तत्वात्तदुपेक्ष्य स्वात्मनि समारोहणं विधत्ते,"—अथो खल्वाऊर्यदरण्योः समारूढो नश्ये-दुदस्याग्निः सीदेत्पुनराधेयः स्यादिति या ते अग्ने यज्ञिया तनू-स्तया एह्यारोहेत् स्वात्मन् समारोहयते यजमानो वा अग्नेर्योनिः स्वायामेवैनं योन्याᳬ समारोहयते(९)" इति। अथ केचित् 'खल्वाऊः', 'अरण्योः समारूढो' यदि अरणिदाहापहारादिना 'नश्येत्' तदा यजमानस्य पूर्वमाहितोऽग्निः 'उत्' 'सीदेत्', अतो-ऽग्निः पुनराधातव्यः 'स्यादिति' तस्य दोषस्य परिहाराय यज-मानो 'या ते अग्ने' इति मन्त्रेण स्वात्मनि अग्निं समारोहयेत्। यथैवारण्योरग्न्युत्पादकत्वम्, एवं 'यजमानो'ऽपि शास्त्रीयाग्नेरु-त्पादकत्वात् 'योनिः' भवति, तस्माद्यजमाने समारोहितोऽग्निः स्वकीयायामेव 'योन्यां' समारोहितो भवति। अयन्तु मन्त्रो ब्राह्मणग्रन्थे द्वितीयकाण्डे पञ्चमप्रपाठके समाम्नास्यमानत्वात्तत्रैव व्याख्यास्यते।

अथ विनियोगसङ्ग्रहः—

अग्निहोत्री तु सगृहः प्रयास्यन् जुहुयाद् द्वयम्।
वास्तोः, पुरोनुवाक्यैका याज्या चान्येति तद् द्वयम्॥

अथ मीमांसा—अष्टमाध्यायस्य चतुर्थपादे (१ अ०) चिन्तितम्,—

"दर्विहोमो गुणो नाम वाऽगुणो दधिहोमवत्।
गुणासम्भवतो लोकवेदयोर्नाम तद्भवेत्॥

इदमाम्नायते,—'यदेकया जुहुयाद्दर्विहोमं कुर्यात्' इति। तत्र दर्व्या होमो दर्विहोम इति तृतीयासमासे सति, 'दध्ना जुहोति' इत्यादाविव होमानुवादेन गुणविधित्वसम्भवाद्दर्व्याख्यो गुणो विधीयते इति चेत्। मैवं, न तावल्लोकसिद्धे स्थालीपाकाष्टकादिहोमे दर्विगुणो विधातुं शक्यः, लौकिकशिष्टाचारादेव तत्र साधनप्राप्तेः। नापि वेदसिद्धेऽग्निहोत्र-नारिष्ठादिहोमे, विहितजुह्वादिबाधप्रसङ्गात्। तस्मात् 'दर्विहोमः' इति कर्मनामधेयम्"॥

तत्रैव (२ अ०) अन्यच्चिन्तितम्,—

"लौकिकस्योत सर्वस्य नामाद्योऽम्बष्ठवाक्यतः।
निमित्तसाम्याद्वेदेऽपि तदुक्तेः, सर्वनाम तत्॥

'अम्बष्ठानाम् अदार्विहोमिको ब्राह्मणः' इति श्रौताम्बष्ठस्वामिके स्मार्तहोमे तत्प्रयोगाल्लौकिकस्यैव होमस्य तत् नामेति चेत्। मैवं, दर्व्या होम इति प्रवृत्तिनिमित्तस्य लौकिकवैदिकयोः समानत्वात् 'दर्विहोमं कुर्यात्' इतिश्रुत्युक्तेः, वैदिकहोमनामलिङ्गत्वाच्च सर्वस्य होमस्यैतन्नाम"॥ तत्रैव (३ अ०) अन्यच्चिन्तितम्,—

"तद्यजेरपि नाम स्याज्जुहोतेरेव वाऽग्रिमः।

अविशेषेण मुख्यत्वाज्जुहोतेर्लक्षणाऽन्यथा ॥

तन्नाम जुहोतिचोदनानां यजतिचोदनानाञ्च भवितुमर्हति। कुतः?। अविशेषश्रवणादिति चेत्। मैवं, जुहोतिचोदनासु होमशब्दस्य मुख्यत्वात् यजतिचोदनानां तन्नामत्वे लक्षणा स्यात्। तस्माज्जुहोतिचोदनानामेव"। तत्रैव (४अ०) अन्यच्चिन्तितम्,—

"दर्विहोमे सोमधर्मा अपूर्वत्वमुताग्रिमः।

अव्यक्तेर्यज्यभावाच्च स्वाहोक्त्यादेरपूर्वता ॥

जयाभ्यातानराष्ट्रभृदादिषु दर्विहोमेषु उत्पत्तिवाक्ये देवताया अश्रवणादव्यक्तलिङ्गेन सोमधर्माः कर्त्तव्या इति चेत्। मैवं, सोमे श्रुतस्य यजतिलिङ्गस्य अभावात्। किञ्च 'पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा' इति दर्विहोमेषु स्वाहाकार आम्नातः, स च सोमविध्यन्तातिदेशे विरुध्येत? तेन स्वाहाकारविरोधिनो वषट्कारस्य प्राप्यमाणत्वात्। किञ्चोदाहृतैर्मन्त्रगतचतुर्थ्यन्तैः पदैर्देवतासमर्पणान्नास्य अव्यक्तत्वं। तस्मात् दर्विहोमानाम् अपूर्वकर्मत्वान्नास्ति तत्र कस्यापि विध्यन्तस्यातिदेशः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥०॥

---

त्वम॑ग्ने बृ॒हद्वयो॒ दधा॑सि देव दा॒शुषे॑। क॒विर्गृ॒हप॑ति॒र्युवा॑[१]। ह॒व्य॒वाड॒ग्निर॒जरः॑ पि॒ता नो॑ वि॒भुर्वि॒भावा॑ सु॒दृशी॑को अ॒स्मे। सु॒गा॒र्ह॒प॒त्याः समिषो॑ दिदी-

ह्यस्मद्रियक्संमिमीहि श्रवांसि[२]। त्वञ्च सोम नो वशो जीवातुं न मरामहे। प्रियस्तोत्रो वनस्पतिः[३]। ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणां। श्येनो गृध्राणांस्वधितिर्वनानांसोमः ॥ १ ॥

पवित्रमत्येति रेभन्[४]। आ विश्वदेवंसत्पतिंसूक्तैरद्या वृणीमहे। सत्यसवंसवितारं[५]। आ सत्येन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन्[६]। यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे। यथा तोकाय रुद्रियं[७]। मा नस्तोके तनये मा न आयुषि मा नो गोषु मा ॥ २ ॥

नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते[८]। उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः। गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अनावन्[९]। हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यसन्। बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तैादुच्च विद्वांअगायत्[१०]। एन्द्र सानसिंरयिं ॥ ३ ॥

स जित्वानंसदासहं। वर्षिष्ठमूतये भर[११]। प्र

संसाहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु। इन्द्रा भर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनां(१२)। त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः। इन्द्र ज्यैष्ठ्याय सुक्रतो(१३)। भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः। भुवो नृँश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रः ॥ ४ ॥

विश्वचर्षणे(१४)। मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिं। सत्यं चित्रश्रवस्तमं(१५)। मित्रो जनान्यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्यां। मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं घृतवद्विधेम(१६)। प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन। न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्(१७) यत् ॥ ५ ॥

चिद्धि ते विशो यथा प्र देव वरुण व्रतं। मिनीमसि द्यविद्यवि(१८)। यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि। अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः(१९)। कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म। सर्वा ता विष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः(२०) ॥ ६ ॥

सोमः। गोषु मा। रयिं। मन्त्रः। यत्। शिथिरा।

सप्त च ॥ वि वै । आ वायो । इमे वै । चित्तं च । अग्निर्भूतानां । देवा वै । ऋताषाट् । राष्ट्रकामाय । देविका । वास्तोष्पते । त्वमग्ने बृहद्वयः । एकादश ॥ ११ ॥

वि वा एतस्य । इत्याह यथायजुरेवैतत् । मृत्युर्गन्धर्वः । अवरुन्धे । त्वमग्ने । बृहस्पतयः । षट्चत्वारिꣳशत् ॥ ४६ ॥

हरिः ओम् ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

इति संहितायां तृतीयाष्टके चतुर्थोऽध्यायः ॥

वास्तोष्पतियुतो होमो दशमे परिकीर्त्तितः ।

अथैकादशे याज्याः, तत्र "देव सु वामेतानि हवीꣳषि भवन्ति" इति यानि विहितानि, तेषु "अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्" इत्यस्य पुरोनुवाक्यामाह,—"त्वमग्ने बृहद्वयो दधासि देव दाशुषे कविर्गृहपतिर्युवा(१)" इति । हे 'अग्ने' 'देव' 'त्वं' 'दाशुषे' (हविर्दत्तवते) यजमानाय 'बृहद्वयो दधासि' (महदन्नं दीर्घमायुर्वा प्रयच्छति)* कीदृशस्त्वं?—'कविः' विद्वान्, 'गृहपतिः' (गृहस्य) पालयिता, 'युवा' (नित्यतरुणः) ।

* एवमेव सर्व्वत्र पाठः । प्रयच्छसि इति तु भवितुं युक्तः ।

तत्रैव याज्यामाह,—"हव्यवाट् अग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे। सुगार्हपत्याः समिषो दिदीहि अस्मद्रियक् सम्मिमीहि अवाꣳसि[१]" इति। अयम् 'अग्निः' हव्यं वहति इति 'हव्यवाट्', 'अजरो' (जरारहितः), 'नः' (अस्माकं) 'पिता' (उत्पादकः पालयिता वा), 'विभुः' (व्यापी), 'विभावा' (विशेषेण भानशीलः), 'सुदृशीकः' (सुखदर्शनः), ईदृशो योऽग्निः, स त्वम् 'अस्मे' (अस्माकं) 'इषः' (अन्नानि) 'सम्'-'दिदीहि' (सम्यक् प्रयच्छ)। कथम्भूता इषः ?—'सुगार्हपत्याः' (शोभनगृहपतित्वहेतुभूताः)। किञ्च 'अस्मद्रियक्' (अस्मदाभिमुख्येनागतः), सं-'अवांसि' (श्रोतव्यानि यशांसि) 'सम्मिमीहि' (सम्यक् निष्पादय)।

अथ "सोमाय वनस्पतये श्यामाकञ्चरुम्" इत्यस्य पुरोनुवाक्यामाह,—"त्वं च सोम नो वशो जीवातुं न मरामहे। प्रियस्तोत्रो वनस्पतिः[२]" इति। हे 'सोम' 'त्वं च' (त्वमपि) 'नः' (अस्मान्) 'जीवातुं वशः' (जीवयितुं कामयमानोऽसि)। अतो 'न मरामहे' (त्वत्प्रसादान्न म्रियामहे)। कीदृशस्त्वं ?—'प्रियस्तोत्रः' ('सोमो वा ओषधीनां राजा' इत्यादिस्तुतिप्रियः), 'वनस्पतिः' (वनानां पालकः)।

तत्रैव याज्यामाह,—"ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणां श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्[४]" इति। 'देवानां' मध्ये 'ब्रह्मा' (श्रेष्ठः); पदं वेति अवगच्छति इति 'पदवीः', 'कवीनां' (विदुषां) मध्ये 'पदवीः' (पदवाक्यप्रमाणाभिज्ञः श्रेष्ठः); 'विप्राणां' मध्ये

'ऋषिः' (अनुष्ठानसामर्थ्येनातीन्द्रियवस्तुद्रष्टा श्रेष्ठः); 'मृगाणां' (चतुष्पदां) मध्ये शक्त्याधिक्यात् 'महिषः' (श्रेष्ठः); तथैव 'गृध्राणां' (पक्षिणां) मध्ये शक्त्याधिक्यात् 'श्येनः' (श्रेष्ठः); 'वनानां' 'मध्ये' 'स्वधितिः' (श्रेष्ठः); स्वधितिशब्देन करवालादिवद्दृढस्वरूपः भास्वान् वृक्ष उच्यते। यथा ब्रह्मादयः स्वजातिषु श्रेष्ठाः एवं सोमोऽपि। 'पवित्रं' (शुद्धिहेतुं) कुशादिकम् 'अत्येति' (अतिक्रामति)। कीदृशः सोमः?—'रेभन्' (शब्दभाक्) स्तूयमान इत्यर्थः।

अथ "सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां ब्रीहीणाम्" इत्यस्य पुरोनुवाक्यामाह,—"आ विश्वदेवꣳ सत्पतिꣳ सूक्तैरद्या वृणीमहे। सत्यसवꣳ सवितारम्[५]" इति। 'अद्य' (अस्मिन् कर्मणि) 'सवितारं' 'सूक्तैः' (शोभनवाक्यैः) 'आ'-'वृणीमहे' (फलसाधनाय प्रार्थयामहे)। कीदृशं सवितारं?—'विश्वदेवं' (विश्वे सर्व्वे देवा यस्य वशे वर्त्तन्ते, सोऽयं) विश्वदेवस्तं, 'सत्पतिं' (सन्मार्गवर्त्तिनां पालकम्) 'सत्यसवं' (अमोघानुज्ञम्)।

तत्रैव याज्यामाह,—"आ सत्येन रजसा वर्तमानो निवेशयन् अमृतं मर्त्यञ्च हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन्[६]" इति। 'सविता' (आदित्यः) 'हिरण्ययेन' 'रथेन' 'आ'-'याति' (सुवर्णनिर्मितं रथमारुह्य प्रतिदिनं पूर्वस्यां दिशि आगच्छति)। किं कुर्वन्?—'सत्येन रजसा' 'आ-वर्त्तमानः' (अमोघेन रञ्जकात्मकेन मण्डलेन उदयास्तमययोर्भ्राम्यन्), 'अमृतं मर्त्यञ्च' 'निवेशयन्' (देवशरीरं मनुष्यशरीरं स्वस्वकाले प्रकाशेन तत्त-

लोके व्यवहारक्षमं कुर्वन्), 'भुवना विपश्यन्' (सर्वलोकानवलोकयन्)।

अथ "रुद्राय पशुपतये गावीधुकञ्चरुम्" इत्येतस्य पुरोनुवाक्यामाह,—"यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे, यथा तोकाय रुद्रियम्(७)" इति। 'अदितिः' (अखण्डनीयः) 'रुद्रः' यथा 'पश्वे' (पशुभ्यः) 'नृभ्यो' गोभ्यश्च, 'यथा' 'तोकाय' (अपत्याय) यथा 'रुद्रियं' (रुद्रप्रतिपादितं रक्षणादि) यथा 'करत्' (पश्वादिभ्यः पुत्राद्यपत्याय च येन प्रकारेण रक्षणं करोति), तथा तम् अनेन हविषा राधयाम इति शेषः।

तत्रैव याज्यामाह,—"मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते(८)" इति। हे 'रुद्र' त्वं 'भामितः' (क्रुद्धः सन्) 'नः' (अस्माकं) 'तोके' (पुत्रादौ) 'तनये' (तदीयपुत्रे, अस्मत्पौत्रे) 'मा' 'रीरिषः' (हिंसाम्मा कृथाः) तथा 'नः' (अस्माकम्) 'आयुषि' 'मा' 'रीरिषः'। तथा 'नः' (अस्माकं) 'गोषु' 'मा' 'रीरिषः'। तथा, 'नः' (अस्माकम्) 'अश्वेषु' 'मा रीरिषः', तथा 'नः' (अस्माकं) 'वीरान्' (भृत्यान्) 'मा वधीः' वयं 'हविष्मन्तो' (हविर्युक्ताः) सन्तः 'ते' (तुभ्यं) 'नमसा विधेम' (नमस्कारेण परिचर्याङ्करवाम)।

अथ "बृहस्पतये वाचस्पतये नैवारञ्चरुम्" इत्यस्य पुरोनुवाक्यामाह,—"उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अना-

वन्(९)" इति। एवं 'बृहस्पतिम्' 'अभि'-लक्ष्य 'अर्काः' (अर्चनहेतवः) अस्मदीया वाग्विशेषाः 'अनावन्' (स्तुतवन्तः), कीदृशाः वाग्विशेषाः?—'उदप्रुतो न वयो रक्षमाणाः',—उदकं प्लावयन्ति भूमौ प्रवर्त्तयन्तीत्युदप्रुतो मेघाः, ते यथा अन्नोदकनिष्पादनद्वारेण मदीयं 'वयः' (आयुष्यं) पालयन्ति, तद्वन्मदीया स्तुतिरूपा वाग्विशेषास्तापमृत्युपरिहारेण आयुष्यस्य रक्षकाः। तथा 'अभ्रियस्य घोषा' इव 'वावदतः'—अभ्राणां समूहोऽभ्रियं तस्य 'घोषाः' (गर्जनशब्दाः) यथोच्चध्वनयः, एवमस्मदीया वाग्विशेषा भृशं वदन्तो भवन्ति। तथा 'गिरिभ्रजो नोर्मयो मदन्तः', यथा नदीतीरस्था गिरिस्थिर्शन ऊर्मयो नदीपूरणप्रकाशनेन हर्षं जनयन्ति, एवमस्मदीयवाग्विशेषा बृहस्पतिमहिमप्रकाशनेन हर्षयन्तो भवन्ति।

तत्रैव याज्यामाह,—"हꣳसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन्। बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौत् उत् च विद्वाꣳ अगात्(१०)" इति। अयं 'बृहस्पतिः' 'अभिकनिक्रदन्' (अभितोऽस्मदीयहविःस्वीकारपरितोषद्योतकम् उच्चैर्ध्वनिमकरोत्)। 'उत' 'गाः' 'प्रास्तौत्' (अपि च परितोषद्योतकानि वाक्यानि उच्चारितवान्), 'विद्वान्' 'उत्'-'अगायत्' 'च', (अस्मदीयपरिचर्यामभिजानन् परितुष्ट उत्कर्षेण गानमप्यकरोत्)। किं कुर्वन्?—'अश्मन्मयानि नहना व्यस्यन्' (पाषाणमयद्वारं पिधानसदृशानि फलप्रतिबन्धकानि दुरितानि अपाकुर्वन्), यथा 'हंसैः' (चतुर्थाश्रमवासिभिः) अभिष्टुतः परमेश्वरः पुरुषार्थप्रतिबन्धकमपाकरोति,

एवं 'वावदद्भिः' (अतिशयेन स्तुवद्भिः) 'सखिभिः' (ऋत्विग्भिः) परितोषितो बृहस्पतिः प्रतिबन्धकमपाकरोतीति । अपेक्षितं शेषमाहृत्य व्याख्येयम्।

अथ "इन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणाम्" इत्यस्य पुरोनुवाक्यामाह,—"ऐन्द्र सानसिꣳ रयिं सजित्वानꣳ सदासहं वर्षिष्ठमूतये भर(११)" इति। हे 'इन्द्र' 'रयिं' (धनं) 'ऊतये' (रक्षार्थं) 'आ'-'भर' (आनय)। कीदृशन्धनं?— 'सानसिं' (सनसो दानस्य सम्बन्धि) बहुभ्यो दातुम्पर्याप्तमित्यर्थः। 'सजित्वानं' (जित्वभिर्जयशीलैः पुत्रादिभिरुपेतं) 'सदासहं' (सर्वदा विरोधिनां सोढारं) तत्तिरस्कारक्षममित्यर्थः। 'वर्षिष्ठम्' (अतिशयेन प्रवृद्धम्)।

तत्रैव याज्यामाह,—"प्र ससाहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु इन्द्र आभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम्(१२)" इति। हे 'पुरुहूत' (पुरुषु बहुषु यज्ञेष्वाहूयमान*) 'शत्रून्' प्रकर्षेण 'ससाहिषे' (सर्वदा सहसे) तिरस्करोषीत्यर्थः। 'ते' 'शुष्मः' 'ज्येष्ठः' (तव बलं प्रशस्तम), 'इह' (अस्मिन्) कर्मणि 'रातिरस्तु' (फलदानमस्तु)। हे 'इन्द्र' 'दक्षिणेन' हस्तेन 'वसूनि' (धनानि) 'आहर†' (समानय)। 'सिन्धूनां' (समुद्रसमानानां) 'रेवतीनां' (प्रजानां) 'पतिः' 'असि'।

अथ तत्रैव वैकल्पिकतामन्यां पुरोनुवाक्यामाह,—"त्वꣳ सुतस्य

* 'आहूयमानः' इति J. पु० पाठः।

† अत्र 'आभर' इति पाठो भवितुं युक्तः।

पीतये सद्यो वृद्धो अजायथाः इन्द्र ज्यैष्ठ्याय सुक्रतो(१३)” इति ।
हे ‘सुक्रतो’ (शोभनकर्मन्) ‘इन्द्र’ ‘त्वं’ ‘सुतस्य’ (अभिषुतस्य) ‘पीतये’ (पानाय) ‘सद्यः’ (तदानीमेव) ‘वृद्धो अजायथाः’ (प्रवृद्धो जातोऽसि)। एतच्च सर्वेषां देवानां मध्ये तव ‘ज्यैष्ठ्याय’ सम्पद्यते ।

तत्रैव विकल्पितामन्यां याज्यामाह,—“भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः भुवो नृंश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे(१४)” इति । हे ‘इन्द्र’ ‘त्वं’ ‘ब्रह्मणा महान्’ ‘भुवः’ (स्तुतिरूपेण वेदवाक्येनाभिवृद्धो भवसि), ‘विश्वेषु सवनेषु’ (त्रिष्वपि प्रातःसवनादिषु) ‘यज्ञियो’ भुवः (यज्ञयोग्यो भवसि)। ‘नॄन्’ (प्रतिकूलान् शत्रून्) ‘च्यौत्नो’ भुवः (प्रच्यावयन् विनाशयन्) ‘वर्त्तसे’। हे ‘विश्वचर्षणे’ (विश्वे सर्वे चर्षणयो मनुष्या यस्यासौ विश्वचर्षणिः सर्वमनुष्यस्वामीत्यर्थः, तादृश) त्वं ‘विश्वस्मिन् भरे’ (सर्वस्मिन् यागे) ‘मन्त्रः’ (मननीयः) ‘ज्येष्ठः’ (प्रशस्तश्च भवसि) ।

अथ “मित्राय सत्यायाम्बानाञ्चरुम्” इत्यस्य पुरोनुवाक्यामाह,“—मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिं सत्यं चित्रश्रवस्तमम्(१५)” इति । ‘चर्षणीधृतः’ (मनुष्याणां धारयितुः) ‘मित्रस्य’ ‘देवस्य’ ‘श्रवः’ (श्रोतुं योग्यं) यशो महदस्तीति शेषः । ‘सानसिं’ (फलदानशीलं) ‘सत्यं’ (सत्यवादिनं) । चित्रं श्रवः (कीर्तिर्यस्यासौ चित्रश्रवाः, अतिशयेन तादृशं यजामहे इति शेषः ।

तत्रैव याज्यामाह,—“मित्रो जनान् यातयति प्रजानन्मित्रो दाधार पृथिवीमुत द्यां मित्रः कृष्टीरनिमिषाऽभिचष्टे सत्याय हव्यं

घृतवद्विधेम[१६]" इति। अयं 'मित्रो' देवो 'जनान्' सर्वान् 'यातयति' (स्वस्वव्यापारेषु प्रयत्नयुक्तान् करोति); 'प्रजानन्' (तत्तदधिकारं विद्वान्)। किञ्च 'मित्रः' 'पृथिवीं' 'दाधार' (धृतवान्) 'उत' (अपि च) द्यां (आधारं) दाधार। किञ्च 'मित्रः कृष्टीः' (मनुष्यान्) 'अनिमिषा' (देवांश्च) 'अभिचष्टे' (सर्वतः पश्यति), 'सत्याय' (अमोघफलाय) तस्मै मित्राय 'हव्यं' (चरुलक्षणं) 'घृतवत्' (घृतयुक्तं) 'विधेम' (कुर्मः)।

तत्रैव विकल्पितामन्यां याज्यामाह,—"प्र स मित्र मर्त्तो अस्तु प्रयस्वान् यस्ते आदित्य शिक्षति व्रतेन न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्[१७]" इति। 'यो' यजमानस्तव सम्बन्धिना 'व्रतेन' कर्मणा 'शिक्षति' (अनुष्ठातुं शक्तो भवितुमिच्छति), हे 'मित्र', 'स' 'मर्त्तः' (स मनुष्यः) (यजमानः) 'प्रयस्वान्' (कर्मफलयुक्तः प्रकर्षेण) 'अस्तु'। 'त्वोतः' (त्वया रक्षितः) स यजमानो 'न हन्यते' (रोगादिना न पीड्यते), 'न जीयते' (वैरिभिर्नाभिभूयते)। अपिच त्वया रक्षितम् 'एनं' यजमानं 'अंहः' (पाप्मा) 'अन्तितः' (समीपे) 'न' 'अश्नोति' (न व्याप्नोति), 'दूरात्' (दूरेऽपि) 'न' प्राप्नोति।

अथ "वरुणाय धर्मपतये यवमयं चरुम्" इत्यस्य पुरोनुवाक्यामाह,—"यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतं मिनीमसि द्यवि-द्यवि[१८]" इति। हे वरुणदेवते त्वदीयं 'यच्चित्' 'व्रतं' (यत्किञ्चिदपि कर्म) 'द्यवि-द्यवि' (दिने-दिने) प्रकर्षेण 'मिनीमसि' (तर्कयामहे)। तत्र दृष्टान्तः, 'विशो यथा', सर्वाः प्रजाः स्वस्व-

व्यापारं यथा तर्कयन्ति तद्वत्। 'हि' (यस्मात्) त्वदीयमेव कर्म सर्वदा तर्कयामस्तस्मात् त्वां परिचरेमेति शेषः।

तत्रैव याज्यामाह,—"यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि। अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः[१९]" इति। हे 'वरुण' 'मनुष्याः' वयं 'दैव्ये' (देवलोकवर्त्तिनि) 'जने' 'यत्किञ्चेदम्' 'अभिद्रोहं' (स्वल्पमधिकं वा द्रोहं) 'अचित्ती' (अज्ञानेन) 'चरामसि' (कुर्मः)। किञ्च 'यत्' अपि 'तव धर्माः' (त्वदीयं कर्म) 'युयोपिम' (विनाशयाम)। हे 'देव' "तस्मादेनसः' (द्रोहात् कर्मनाशाच्च) 'नः' (अस्मान्) 'मा' 'रीरिषः' (हिंसां मा कृथाः)।

तत्रैव विकल्पितामन्यां याज्यामाह,—"कितवासो यत् रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म। सर्वा ता विष्य शिथिरेव देवाथा ते स्याम वरुण प्रियासः[२०]" इति। 'कितवासः' (धूर्त्तसमानाः स्वार्थसाधनपराः) ऋत्विजो 'यत्' कर्माङ्गं 'रिरिपुः' (नाशितवन्तः)। 'न दीवि' (न तु देवने सम्यग्व्यवहृतौ) प्रावर्त्तन्त। 'वा' (अथ वा) 'यत्' पापं 'सत्यं' (अवश्यं कृतं) ज्ञात्वैव कृतमित्यर्थः। घशब्दः पादपूरणे, पापवाचको वा निपातः*; यत् 'घ' सत्यमित्यन्वयः। 'उत' (अपि च) 'यन्न विद्म' यत्पापमज्ञानेन कृतमित्यर्थः। 'सर्वा ता' (ऋत्विग्भिर्विनाशितमङ्गं, ज्ञात्वा कृतम्, अज्ञानेन कृतञ्चेति यानि सन्ति, तानि सर्वाणि) 'शिथिरेव' (शिथिलानीव) 'विष्य' विनाशयेत्यर्थः। 'अथ' (अनन्तरं) हे 'वरुण' 'ते' (तव) 'प्रियासः' 'स्याम' (प्रिया भवेम)।

---

* पापवाचिको निपातितः इत्यादर्शपुस्तकपाठः।

अत्र विनियोगसङ्ग्रहः ।

राजसूये देवसुवामिष्टौ याज्या इमाः क्रमात् ।
त्वमग्ने इहदाग्नेये; त्वञ्च सोमेति सौम्यके ॥
आ विश्वदेवं साविचे; यथा न इति रौद्रके ।
बार्हस्पत्यं उदेत्येतदेन्द्रेत्यैन्द्रे चतुष्टयम् ॥
मित्रस्येति चयं मैचे; वारुणे यदिति चयम् ।
एकादशेऽनुवाकेऽस्मिन् मन्त्रा उक्ता हि विंशतिः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थान् चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहितायां तृतीयकाण्डे चतुर्थप्रपाठके एकादशोऽनुवाकः॥ ०॥

समाप्तश्च चतुर्थः प्रपाठकः* ॥

---

* एवमेव सर्व्वत्र पुस्तकेषु पाठः। केचित् अत्र "इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये तृतीयकाण्डे चतुर्थः प्रपाठकः सम्पूर्णः" इति पाठं मन्यन्ते ॥ ० ॥

## अथ तैत्तिरीय-संहिताभाष्ये

### तृतीयकाण्डे पञ्चमप्रपाठके

#### प्रथमोऽनुवाकः ।

---

हरिः ॐ ।

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय । तस्यान्देवा अधि संवसन्त उत्तमे नाक इह मादयन्ताम् । यत्ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा । सा नो यज्ञं पिपृहि विश्ववारे रयिन्नो धेहि सुभगे सुवीरं(१) । निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती । सहस्रपोषꣳ सुभगा रराणा सा न आगन्वर्चसा ॥ १ ॥

संविदाना । अग्नीषोमौ प्रथमौ वीर्येण वसून् रुद्रानादित्यानिह जिन्वतं । माध्यꣳ हि पौर्णमासञ्जुषेथां ब्रह्मणा वृद्धौ सुकृतेन सातावथास्मभ्यꣳ सहवीराꣳ रयिन्नियच्छतं(२)* । आदित्याश्चाङ्गिरसश्चाग्नीनादधत ते दर्शपूर्णमासौ प्रैप्सन्तेषामङ्गिरसां नि-

---

* इतःपरं न मन्त्राः ।

सभः॑ हविरासीदथादित्या एतौ होमावपश्यन्तावजुहवुस्ततो वैते दर्शपूर्णमासौ ॥ २ ॥

पूर्व आलभन्त[३] दर्शपूर्णमासावालभमान एतौ होमौ पुरस्तात् जुहुयात् साक्षादेव दर्शपूर्णमासावालभते[४] ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासावालभेत य एनयोरनुलोमञ्च प्रतिलोमञ्च विद्यादित्यमावास्याया ऊर्ध्वन्तदनुलोमं पौर्णमास्यै प्रतीचीनन्तत् प्रतिलोमं यत् पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालभेतामुमपक्षीयमाणमन्वप ॥ ३ ॥

क्षीयेत[५] सारस्वतौ होमौ पुरस्तात् जुहुयादमावास्या वै सरस्वत्यनुलोममेवैनावालभतेमुमाप्यायमानमन्वाप्यायत[६] आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेत्सरस्वत्यै चरु॑ सरस्वते द्वादशकपालं[७] यदाग्नेयो भवत्यग्निव यज्ञमुखं यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते यद्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञमेवारभ्य प्र-तनुते[८] सरस्वत्यै, चरुर्भवति सरस्वते द्वादशकपालोमावास्या वै सरस्वती पूर्णमासः सरस्वान्तावेव साक्षादारभत ऋध्नोत्याभ्यां[९] द्वादशकपालः सरस्वते भवति मिथुनत्वाय प्रजात्यै[१०] मिथुनौ गावौ दक्षिणा समृद्ध्यै[११] ॥ ४ ॥

वर्चसा। वैते दर्शपूर्णमासौ। अपं। तनुते सर्र्-
.स्वत्यै। पञ्चविंशतिश्च॥ १॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चम-
प्रपाठके प्रथमोऽनुवाकः॥ ०॥

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
प्रपाठके चतुर्थे हि काम्या नैमित्तिकाः श्रुताः।
प्रपाठके पञ्चमे तु सोमेष्ट्योः शेष उच्यते॥

तत्र प्रथमानुवाके दर्शपूर्णमासेष्ट्यङ्गभूतान्वारम्भणीयेष्टिर्वि-धातव्या।

कल्पः, 'पूर्णा पश्चात् यत्ते देवा अदधुरिति सारस्वतौ होमौ हुत्वा आरम्भणीयामिष्टिन्निर्वपति' इति। पाठस्तु,—"पूर्णा पश्चा-दुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय। तस्यां देवा अधि संवसन्त उत्तमे नाक इह मादयन्तां। यत्ते देवा अदधु-र्भागधेयममावास्ये संवसन्तो महित्वा। सा नो यज्ञं पिपृहि विश्ववारे रयिन्नो धेहि सुभगे सुवीरं[१]" इति। 'पूर्णा' (पौर्णमास्यभिमानिदेवता), 'पश्चात्' (यज्ञभूमेः पश्चिमायां दिशि) 'उत्'-'जिगाय' (उत्कर्षेण जयं प्राप्तवती); अपि च पूर्वस्यां दिशि, तयोर्दिशोर्मध्यदेशेऽपि उज्जिगाय। 'तस्यां' (पौर्णमास्याम्) 'अधि'-

ष्ठाथ 'इह' यज्ञे सम्यग्वसन्तः, सर्वे 'देवा' 'उत्तमे नाके' (भोगबहुले स्वर्गे) 'मादयन्ताम्' अस्मान् हर्षयन्तु। हे 'अमावास्ये', 'यत्' (यस्मात्कारणात्) 'ते' 'महिना' (महिम्ना) सम्यक् निवसन्तो देवा 'भागधेयम्' 'अदधुः' (हविर्भागं प्राप्तवन्तः); तस्मात् कारणात् हे 'विश्ववारे' (सर्वानिष्टनिवारिके) अमावास्याभिमानिदेवते, 'सा' त्वं 'नः' (अस्मदीयम्) 'यज्ञं पिपृहि' (पूर्णं कुरु)। हे 'सुभगे' (सौभाग्ययुक्ते) 'नः' (अस्मभ्यं) 'रयिं' (धनं) 'सुवीरं' (शोभनपुत्रञ्च) 'धेहि' (सम्पादय)।

अथ तत्रैव विकल्पितावन्यौ मन्त्रावाह,—"निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती। सहस्रपोषꣳ सुभगा रराणा सा न आगन्वर्चसा संविदाना। अग्नीषोमौ प्रथमौ वीर्येण वसून् रुद्रानादित्यानिह जिन्वतं। माध्यꣳ हि पौर्णमासं जुषेथां ब्रह्मणा वृद्धौ सुकृतेन सातावथास्मभ्यꣳ सहवीराꣳ रयिं नियच्छतम्(१)"इति। 'सा' (तादृशी देवता) 'नः' (अस्मान्) प्रति 'आगन्' (आगच्छतु)। कीदृशी?—तदुच्यते,—'निवेशनी' (समीचीनेषु गृहेषु नितरामस्मान् प्रवेशयन्ती); 'वसूनां' 'सङ्गमनी' (धनानां प्रापयित्री)। रूप्यन्ते मणिमुक्तादिभिर्बहुभिः प्रकारैर्निरूप्यन्ते इति 'रूपाणि' बहूनीत्यर्थः; तानि 'वसूनि' (धनानि) 'विश्वा' (सर्वाणि) अपि 'आवेशयन्ती' (अस्मद्गृहेषु प्रवेशयन्ती); 'सहस्रपोषं' 'रराणा' (सहस्रसंख्यादिधनपुष्टिं प्रयच्छन्ती); 'सुभगा' (सौभाग्ययुक्ता); 'वर्चसा संविदाना' (बलेन संयोजयन्ती)। हे 'अग्नीषोमौ', युवां 'प्रथमौ' (देवानां मध्ये मुख्यौ), अतो

'वीर्येण' (अतो भवदीयसामर्थ्येन) 'इह' (कर्मणि) वस्त्रादीन् 'जिन्वतं' (प्रीणयतम्)। 'माध्यं' (पश्चात् पुरस्ताच्च पौर्णमासीदेवतया रक्षिते मध्यदेशे क्रियमाणमिदं), 'पौर्णमासं' (पौर्णमासीसम्बन्धि), हविः 'जुषेयाम्'। कीदृशौ युवां?—'ब्रह्मणा वृद्धौ' (स्तुतिरूपेण मन्त्रेण सन्तुष्टौ); 'सुकृतेन सातौ' (सम्यगनुष्ठितेनानेन कर्मणा फलस्य दातारौ)। हविःसेवनानन्तरम् 'अस्मभ्यं' 'सहवीरां' (पुत्रसहितां) 'रयिं नियच्छतं' (नितरां प्रयच्छतम्)।

अथ होमं विधातुं प्रस्तौति,—"आदित्याश्चाङ्गिरसश्चाग्नीन् आदधत ते दर्शपूर्णमासौ प्रेप्सन्तेषामङ्गिरसां निरुप्तꣳ हविरासीदथादित्या एतौ होमावपश्यन्तावजुहवुस्ततो वै ते दर्शपूर्णमासौ पूर्वं आलभन्त(३)" इति। 'आदित्या' देवा 'अङ्गिरसः' ऋषयः 'च' आधानादूर्द्ध्वं यदा 'दर्शपूर्णमासौ' प्राप्तुमैच्छन्, तदा 'तेषाम्' (उभयेषां) मध्ये येऽङ्गिरस ऋषयस्ते सारस्वतहोमौ अज्ञात्वा प्रथममेवान्वारम्भणीयेष्ट्यर्थं हविर्निर्वापं कृतवन्तः, अथ तदानीम् 'आदित्याः' देवा 'एतौ' (अन्वारम्भणीयेष्ट्यङ्गभूतौ) सारस्वतहोमौ कर्त्तव्याविति निश्चित्य तौ 'अजुहवुः'। ततोऽन्वारम्भणीयेष्टेः साङ्गत्वादङ्गिरोभ्यः पूर्वभाविन एव सन्तो दर्शपूर्णमासौ उपक्रान्तवन्तः।

इदानीं विधत्ते,—"दर्शपूर्णमासावालभमान एतौ होमौ पुरस्तात् जुहुयात् साक्षादेव दर्शपूर्णमासावालभत(४)" इति। 'दर्शपूर्णमासौ' आरब्धुमिच्छन्* पुरुष आरभणीयेष्टेरुपक्रमे,—"पूर्णा पश्चात्" इति मन्त्राभ्यां जुहुयात्। तेन होमेन विलम्बमन्तरेणैव दर्शपूर्णमासावारब्धुं योग्यो भवति।

* आरब्धुमैच्छन् इति E. पुस्तकं विना सर्व्वत्रैव पठितम्।

उक्तयोर्होमयोर्देवताविशेषं विधातुं प्रस्तौति,—"ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासावालभेत य एनयोरनुलोमञ्च प्रतिलोमञ्च विद्यादित्यमावास्याया ऊर्ध्वं तदनुलोमं पौर्णमास्यै प्रतीचीनन्तत् प्रतिलोमं यत् पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालभेतामुमपक्षीयमाणमन्वपक्षीयेत(५)" इति। तत्रेदं चिन्त्यते,—किं पौर्णमासी प्रथमा आलब्धव्या आहोस्विदमावास्या? इति, तदर्थमन्यदप्येतत् चिन्तनीयं,—कालस्य स्वरूपं कीदृशमनुलोमं, कीदृशञ्च प्रतिलोमम्? इति; न चेयमप्रस्तुता चिन्ता। यो यजमान एतयोर्दर्शपूर्णमाससम्बन्धिकालयोः 'अनुलोमं' प्रतिलोमञ्च' स्वरूपं वेद, स एव दर्शपूर्णमासारम्भे मुख्योऽधिकारी नान्य इति 'ब्रह्मवादिनः' परस्परमाहुः, तत्र कश्चिद्बुद्धिमान् अनुलोमप्रतिलोमभागमेवं ब्रूते,—'अमावास्याया ऊर्ध्वं' शुक्लप्रतिपदमारभ्यानुलोमं कालस्वरूपम्, दिने-दिने चन्द्रस्य वर्धमानत्वात्। पौर्णमास्याः प्रतीचीनमुपरितनं कृष्णप्रतिपदमारभ्य कालस्य 'यत्' स्वरूपं, 'तत् प्रतिलोमं' दिने-दिने चन्द्रस्यापक्षीयमाणत्वात्। एवं सति यदि पौर्णमासीं पूर्वभाविनीं कृत्वा यागारम्भं कुर्यात्, तदा प्रतिलोमस्वरूपेणैव तौ दर्शपूर्णमासावारब्धवान् भवति। तथा सति पौर्णमास्यामारब्धायां सत्यां समनन्तरमेव चन्द्रोऽपक्षीयते। तञ्च 'अपक्षीयमाणम्' 'अनु' यजमानोऽपि 'अपक्षीयेत'।

अतः प्रातिलोम्यदोषपरिहारकृते देवताविशेषौ विधत्ते,—"सारस्वतौ होमौ पुरस्तात् जुहुयादमावास्या वै सरस्वत्यनुलोम-

मेवैनावालभतेऽमुमाप्यायमानमन्वाप्यायते(६)" इति। आरम्भणीयेष्टेः पुरस्तात् यौ होमौ, तौ 'सारस्वतौ'; सरस्वती च सरस्वांश्च ययोर्होमयोस्तौ सारस्वतौ; एतदीयहोमेन प्रातिलोम्यदोषस्य परिहृतत्वादानुलोम्येनैव तौ दर्शपूर्णमासयागावारब्धवान् भवति। तथा वर्धमानं चन्द्रम् 'अनु' यजमानो वर्धते।

प्राच्याङ्गरूपौ होमौ विधाय अङ्गिरूपामान्वारम्भणीयेष्टिं त्रिहविष्कां विधत्ते,—"आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेत् सरस्वत्यै चरुꣳ सरस्वते द्वादशकपालम्(७)" इति। पूर्वत्र अमावास्यायाः प्रथमारम्भे सति आनुलोम्येन दोषाभावेऽपि तत्प्राथम्यमुपेक्ष्य प्रातिलोम्यदोषपरिहारप्रयत्नो विहितः, अतस्तदन्यथानुपपत्त्या पौर्णमासी एव प्रथममालब्धव्येति गम्यते। तादृशपौर्णमास्यारम्भात् 'पुरस्तात्' इदं हविस्त्रयं निर्वपेत्।

तत्राग्नावैष्णवं प्रशंसति,—"यदाग्नेयो भवत्यग्निर्वै यज्ञमुखमेवर्द्धिं पुरस्ताद्धत्ते यद्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञमेवारभ्य प्र तनुते(८)" इति। अग्निमन्तरेण यज्ञस्यानिष्पत्तेरग्निरेव यज्ञस्य मुखम्। अत आग्नेयेन हविषा यज्ञमुखमेवोद्दिश्य प्रथमतः समृद्धिं सम्पादयति। यज्ञस्य सर्वाङ्गव्यापित्वाद्विष्णुत्वम्। अतः वैष्णवेन हविषा यज्ञमेवोपक्रम्य प्रकर्षेण विस्तृतवान् भवति।

उत्तरं हविर्द्वयं प्रशंसति,—"सरस्वत्यै चरुर्भवति सरस्वते द्वादशकपालोऽमावास्या वै सरस्वती पूर्णमासः सरस्वान् तावेव साक्षादारभत ऋध्नोत्याभ्याम्(९)" इति। स्त्रीलिङ्गनिर्देशात् अमावास्यायाः सरस्वतीत्वं; तथा पुंलिङ्गशब्दनिर्देशात् 'पूर्णमासः

सरस्वान्'। तथा सति अनेन देवताद्वयेन तदात्मकौ दर्शपूर्णमासौ यागावेव व्यवधानमन्तरेणोपक्रान्तवान् भवति। किञ्च 'आभ्यां' देवताभ्यां यजमानः समृद्धिं प्राप्नोति।

तृतीये हविषि सारस्वतीं परित्यज्य सरस्वत्स्वीकारं प्रशंसति,—"द्वादशकपालः सरस्वते भवति मिथुनत्वाय प्रजात्यै(१०)" इति। द्वितीयहविषः स्त्रीदेवताकत्वात् इतरस्य पुंदेवताकत्वं यजमानस्य 'मिथुनत्वाय' सम्पद्यते; तच्च प्रजोत्पत्त्यर्थं भवति।

तत्र दक्षिणां विधत्ते,—"मिथुनौ गावौ दक्षिणा समृद्ध्यै(११)" इति।

अत्र विनियोगसङ्ग्रहः—

पूर्णत्वारम्भणीयेष्टौ द्वौ सारस्वतहोमयोः।
मन्त्रौ विकल्पितावन्याविति चत्वार ईरिताः॥

अथ मीमांसा, नवमाध्यायस्य प्रथमपादे ( ११अ० ) चिन्तितम्।

"अन्वाधानाङ्गमारम्भो यद्वा पुरुषसंस्कृतिः।
फलवत्त्वादादिमोऽन्त्यः पुंयोगान्न पृथक् फलम् इति।

दर्शपूर्णमासयोरन्वाधानस्य प्रथमपदार्थत्वेनारम्भरूपत्वात्, आरम्भप्रयुक्तेयम् इष्टिरन्वाधानस्याङ्गम्; तथा सति यागफलेनैव फलवती स्यात्; कर्तुः संस्कारपक्षे तु पृथक्फलं कल्प्येत! तस्मात् प्रतिप्रयोगमन्वाधानावृत्तौ तदङ्गभूता इयमिष्टिः। इति प्राप्ते ब्रूमः,—आरम्भो नाम पुरुषस्य प्रथमप्रवृत्तिर्न तु आधानपदार्थः, अतो न अन्यन्वाधानाङ्गम्; किन्तु आरप्स्यमानो निर्वपेदिति पुरुषयोगात् तत्संस्कारोऽयं। न च, फलकल्पनाप्रसङ्गः, क्रता-

रम्भस्य पुरुषस्य प्रयोगपरिगृहीतत्वेन पृथक्फलाकाङ्क्षाया अभावात्। नन्वेवमपि तत्तत्प्रयोगमारप्स्यमानस्य संस्कारावृत्तिः स्यात्। मैवं; प्रयोगमारप्स्यमान इत्यश्रुतत्वात्; दर्शपूर्णमासावारप्स्यमान इति श्रूयते; तयोश्चैक एवारम्भः। तस्मान्नास्ति आवृत्तिः"।

तत्रैवान्यच्चिन्तितम् (११अ०)।

"प्रतिप्रयोगारम्भणीयेष्टिरस्ति* न वाग्न्यसौ।
अङ्गत्वेन न तत्सर्वधर्म आधानवद्भवेत्॥

'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इति विहितः इयमारम्भणीयेष्टिः, 'दर्शपूर्णमासौ कर्त्तव्यौ' इत्यध्यवसाय आरम्भः, स चैक एव. तेन चारम्भेण प्रयुक्ता इयमिष्टिः; तस्मान्नावर्त्तनीया। यथा, आधानं सर्वक्रतुसाधारणत्वात् सकृदेव कर्त्तव्यं; तद्वदाधानस्य सकृदनुष्ठानमेकादशस्य तृतीयपादे (२अ०) वक्ष्यते"।

दशमाध्यायस्य प्रथमपादे (४अ०) चिन्तितम्।

"तस्यां सास्ति न वाङ्गत्वेऽप्यस्याः पृथगुपक्रमात्।
अस्ति, मैवं वचोऽशक्तेर्विधाने चातिदेशने॥

या इयमारम्भणीया, सापि इष्टित्वात् दर्शपूर्णमासप्रकृतिः, अतस्तस्याम् अपि दर्शपूर्णमासयोरिवारप्स्यमानपुरुषसंस्काराय सा अनुष्ठेया न वा? इति संशयः। चोदकप्राप्तत्वादनुष्ठेया। ननु सोमाङ्गदीक्षणीयादिवत् अस्या दर्शपूर्णमासाङ्गत्वेन आरम्भद्वारं लुप्यते। न वैषम्यात्,—ऋत्विग्वरणादिना सोममारभ्य अनुतिष्ठतः पुरुषस्यानुष्ठानमध्ये दीक्षणीया प्रवर्त्तते, दर्शपूर्णमासा-

---

* "प्रतिप्रयोगमारम्भयजिरस्ति" इति न्यायमालायां पाठः।

रम्भस्तु अन्वारम्भणीयायामनुष्ठितायां सम्पद्यते, पश्चादेव ततो दर्शपूर्णमासोपक्रमात् अन्य आरम्भणीयोपक्रम इति द्वारसद्भावात्, आरम्भणीयामारप्स्यमानस्य संस्कारार्थमन्यारम्भणीयां* कुर्यात्। अनवस्था तु लोकसिद्धवीजाङ्कुरादिदृष्टान्तेन समाधेयेति।

एवं प्राप्ते ब्रूमः, आरम्भणीयायामारम्भणीयान्तं न कर्त्तव्यम्। कुतः ?। अङ्गान्तरवदतिदेष्टुमशक्यत्वात्। तथाहि प्रकृतौ, 'समिधो यजति' इत्यादिवाक्यैः प्रयाजाद्यङ्गानां स्वरूपमतिदिश्यते, प्रकरणेन चाङ्गाङ्गिभावो बोध्यते। ततः, 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादिकायां विकृतौ निर्वापानुमितं चोदकवाक्यमेवं प्रवर्त्तते, इष्टिवच्चरौ प्रयाजाद्यङ्गानि अनुष्ठेयानि, एवञ्च सति आरम्भणीयायामिदं वक्तव्यं,—किम् 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इत्येतद्वाक्यं समिदादिवत् अङ्गभूतामारम्भणीयां विदधातु, किं वा, यथा, सौर्यादिवाक्यमङ्गातिदेशमनुमापयति, दर्शपूर्णमासाङ्गभूतायाम् आरम्भणीयायाम् अन्यस्या आरम्भणीयाया अतिदेशमनुमापयतु, उत उभयं करोतु? इति।

नाद्यः, अङ्गविधावुपक्षीणत्वेन अतिदेशानुमाने शक्त्यभावात्। न द्वितीयः, अविहितत्वेनातिदेष्टुमयोग्यस्याङ्गस्यातिदेशे शक्त्यभावात्। न तृतीयः, वाक्यभेदापत्तेः। ननु अनेन न्यायेन सौर्यवाक्येऽपि वाक्यभेदः प्रसज्येत! एकस्यैव वाक्यस्य यागविध्यङ्गातिदेशयोः प्रवृत्तत्वात्। मैवं, वाक्यद्वयसद्भावात्, प्रत्यक्षं वाक्य यागविधा-

---

* अन्वारम्भणीयामिति J. पु० पाठः।

थकम्, अनुमितं वाक्यमङ्गातिदेशकम्। तर्हि अत्रापि तादृशं वाक्यद्वयं भवत्विति चेत्। बाढं, अत एवारम्भणीयायां प्रयाजाद्यङ्गानि अनुष्ठीयन्ते, तद्वदारम्भणीयान्तररूपमप्यङ्गमनुष्ठीयतामिति चेत्। न; दर्शपूर्णमासप्रकरणे प्रयाजाद्यङ्गविधायकसमिदादिवाक्यवत् आरम्भणीयान्तररूपाङ्गविधायिनः कस्यचिद्वाक्यस्य अभावात्; न हि, प्रकृतौ अविद्यमानम् अङ्गं विकृतौ अतिदेशमर्हति; तस्मात् सम्प्रतिपन्नस्यैवारम्भणीयाविधायिनो वाक्यस्य अङ्गस्वरूपविधानाय समिदादिवाक्यस्थानीयत्वम्, अतिदेशाय सौर्यवाक्यस्थानीयत्वं चेत्याकारद्वयं वर्णनीयं। तथा सति आवृत्तिलक्षणो वाक्यभेदः केन वार्येत; तस्मादारम्भणीयायाम् आरप्स्यमानपुरुषसंस्काराय आरम्भणीया न कर्त्तव्या" ॥

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

---

ऋषयो वा इन्द्रं प्रत्यक्षन्नापश्यन्तं वसिष्ठः प्रत्यक्षमपश्यत्सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्रवोच इति तस्मा एतान् स्तोमभागानब्रवीत् ततो वसिष्ठपुरोहिताः प्रजाः प्रजायन्त[१] तस्माद्वासिष्ठो ब्रह्मा कार्यः प्रैव जायते[२] रश्मिरसि क्षयाय त्वा क्षयं जिन्वति ॥ १ ॥

आह देवा वै क्षयो देवेभ्य एव यज्ञं प्राह[३] प्रेति-

रसि धर्माय त्वा धर्मं जिन्वेत्याह मनुष्या वै धर्मो मनुष्येभ्य एवं यज्ञं प्राह(४) अन्वितिरसि दिवे त्वा दिवं जिन्वेत्याहैभ्य एव लोकेभ्यो यज्ञं प्राह(५) विष्टम्भोसि वृष्ट्यै त्वा वृष्टिं जिन्वेत्याह वृष्टिमेवाव ॥ २ ॥

रुन्धे(६) प्रवास्यनुवासीत्याह मिथुनत्वाय(७) उशिगसि वसुभ्यस्त्वा वसून् जिन्वेत्याहाष्टौ वसव एकादश रुद्रा द्वादशादित्या एतावन्तो वै देवास्तेभ्य एव यज्ञं प्राह(८) ओजोसि पितृभ्यस्त्वा पितॄं जिन्वेत्याह देवानेव पितॄननुसन्तनोति(९) तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व ॥ ३ ॥

इत्याह पितॄनेव प्रजा अनुसन्तनोति(१०) पृतनाषाडसि पशुभ्यस्त्वा पशूं जिन्वेत्याह प्रजा एव पशूननुसन्तनोति(११) रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वेत्याहौषधीष्वेव पशून् प्रतिष्ठापयति(१२) अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेत्याहाभिजित्या(१३) अधिपतिरसि प्राणाय त्वा प्राणं ॥ ४ ॥

जिन्वेत्याह प्रजास्वेव प्राणं दधाति(१४) त्रिवृदसि प्रवृदसीत्याह मिथुनत्वाय(१५) सꣳरोहोसि नीरोहोसीत्याह प्रजात्यै(१६) वसुकोसि वेषश्रिरसि वस्यष्टिरसीत्याह प्रतिष्ठित्यै(१७) ॥ ५ ॥

जिन्वति। अर्वं। प्रजा जिन्व। प्राणं। चि॒ऽशच्च॥ २॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः॥ ०॥

इष्टिरन्वारम्भणीया समन्त्रा प्रथमे श्रुता।

अथ द्वितीयानुवाके सौमिकब्रह्मत्वविधिरुच्यते। यदुक्तं सूत्रकारेण, 'वासिष्ठो ब्रह्मा ज्योतिष्टोमेषो* वा कश्चित् स्तोमभागान् विद्यात्' इति। तदेतद्विधातुं प्रस्तौति,—"ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन् तं वसिष्ठः प्रत्यक्षमपश्यत् सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्रवोच इति तस्मै एतान् स्तोमभागान् अब्रवीत्ततो वसिष्ठपुरोहिताः प्रजाः प्रजायन्त(१)" इति। वसिष्ठप्रमुखाः सर्वेऽपि 'ऋषयः' कदाचिदिन्द्रमुखात् मन्त्रविशेषानवगन्तुमागताः। तदानीमिन्द्रोऽनधिकारिभ्यो मन्त्रा न वक्तव्या इत्यभिप्रेत्य अन्तर्हितोऽभूत्। अन्तर्धानं प्राप्य अवस्थितं तं इन्द्रं 'ऋषयः' चक्षुषा 'न अपश्यन्', तदानीं योगसामर्थ्ययुतो 'वसिष्ठः' दिव्येन चक्षुषा 'तम्' इन्द्रम् 'अपश्यत्'। 'सः' इन्द्रः 'तं' वसिष्ठं प्रति एवम् 'अब्रवीत्'—सौमिकब्रह्मत्वोपयोगिमन्त्रजातं यस्मिन् प्रतिपाद्यते, तादृशं 'ब्राह्मणम्' अहं तुभ्यं 'वक्ष्यामि', त्वमेव 'पुरोहितः' मन्त्रोपदेष्टा यासां प्रजानां ताः 'त्वत्पुरोहिताः', तथाविधाः 'प्रजाः' यथा

* ब्रह्मज्योतिष्टोमेय इति J. मु० पाठः।

उत्पत्स्यन्ते, तथाविधमेतद्वक्ष्यमाणस्य ब्राह्मणस्य सामर्थ्यात् तादृशं ब्राह्मणं श्रुत्वा 'अथ' (अनन्तरं) त्वं माम् 'इतरेभ्यः' (मन्त्रानधिकारिभ्यः) 'ऋषिभ्यः' 'मा प्रवोचः',—इत्युक्त्वा 'तस्मै' वसिष्ठाय 'एतान्' रश्मिरसीत्यादिकान् स्तोमभागनामकान् मन्त्रान् 'अब्रवीत्' 'स्तोमाः' बहिष्पवमानादीनि स्तोत्राणि, तान् स्तोमान् भजन्ते इति 'स्तोमभागाः,' एतान् हि मन्त्रान् उच्चार्य ब्रह्मा स्तोत्राणि अभ्यनुजानाति, तस्मादेते स्तोमभागा इत्युच्यन्ते। तत इन्द्रप्रसादात् सर्वाः 'प्रजाः' 'वसिष्ठपुरोहिताः' उत्पन्नाः। वसिष्ठं गुरुत्वेन पुरस्कृत्य वर्त्तन्त इत्यर्थः।

इदानीं विधत्ते,—"तस्माद्वासिष्ठो ब्रह्मा कार्यः प्रैव जायते(२)" इति। यस्माद्वसिष्ठस्य ब्रह्मत्वोपयुक्तं सर्वमिन्द्र उक्तवान्, 'तस्मात्' सोमयागं चिकीर्षुणा पुरुषेण यो वसिष्ठगोत्रोत्पन्नः तदीयविद्यासम्प्रदायेन स्तोमभागाभिज्ञो वा भवति, स एव 'ब्रह्मा कार्यः', तथा सति अयं यजमानः तथाविधाः प्रजाः जनयति। ते च स्तोमभागमन्त्राश्चतुर्थकाण्डस्य चतुर्थे प्रपाठकादौ समाम्नाताः। ते चैकत्रिंशत्सङ्ख्यकाः। तेष्वेकैको मन्त्रः एकैकं स्तोत्रमभ्यनुज्ञातुं ब्रह्मणा प्रयोक्तव्यः; अत एव सूत्रकार आह, 'रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति स्तुतेति प्रस्तौति, स च स्तोत्राणामेष कल्पः, उत्तरमुत्तरस्तोमभागानां दधाति, द्वादशाग्निष्टोमे, पञ्चदशोक्थ्ये, षोडश षोडशिनि, सप्तदश वाजपेये, एकोनत्रिंशतमतिरात्रे, त्रयस्त्रिंशतमप्तोर्यामे' इति। तत्रैकत्रिंशं स्तोमभागं त्रिरावृत्य त्रयस्त्रिंशत्सङ्ख्या अप्तोर्यामे पूरणीया।

तत्र प्रथमं स्तोमभागमनूद्य व्याचष्टे,—"रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह देवा वै क्षयो देवेभ्य एव यज्ञं प्राह(१)" इति। पञ्चमकाण्डोक्तब्राह्मणे "रश्मिरित्येवादित्यमसृजत प्रेतिरिति धर्मम्" इत्यादिना मन्त्राणामादित्यधर्मादिसृष्टिहेतुत्वाभिधानादादित्यादिपरतया मन्त्रा व्याख्येयाः। हे आदित्य, त्वं 'रश्मिरसि' (रश्मियुक्तोऽसि)। 'देवाः' यस्मिन् सङ्घे क्षियन्ति (निवसन्ति), सोऽयं सङ्घः 'क्षयः', तस्मै 'क्षयाय', देवसङ्घाय (तत्प्रीत्यर्थं), हे आदित्य त्वां स्मरामि। अतः 'क्षयं' (देवसङ्घं) 'जिन्व' (प्राणय)। अस्मिन् मन्त्रे क्षयशब्दस्य देवा एवार्थः। अतो 'देवेभ्य एव' एनं 'यज्ञं' होता प्रोक्तवान् भवति।

द्वितीयस्तोमभागे धर्मानुष्ठातृत्वान्मनुष्या धर्मशब्देन विवक्षिता इत्येतद्दर्शयति,—"प्रेतिरसि धर्माय त्वा धर्मं जिन्वेत्याह मनुष्या वै धर्मा मनुष्येभ्य एव यज्ञं प्राह(४)" इति। हे धर्माभिमानिदेव, त्वं 'प्रेतिरसि' प्रकृष्टा 'इतिः' (गतिः प्राण्युपकाररूपा) यस्य, असौ 'प्रेतिः', अतो धर्मानुष्ठातृपुरुषार्थं त्वां स्मरामि, तं धर्मानुष्ठातृपुरुषं प्रीणय। अनेन मन्त्रेण धर्मोपलक्षितमनुष्यार्थमिमं मन्त्रमुक्तवान् भवति।

तृतीय-चतुर्थ-पञ्चम-स्तोमभागानां तात्पर्यं दर्शयति,—"अन्वितिरसि दिवे त्वा दिवं जिन्वेत्याहेभ्य एव लोकेभ्यो यज्ञं प्राह(५)" इति। हे द्युलोकाभिमानिदेव, त्वम् 'अन्वितिरसि', देवानामनुकूला 'इतिः' (गतिः) यस्यासौ 'अन्वितिः', तादृशं त्वां द्युलोकार्थं स्मरामि, तञ्च द्युलोकं प्रीणय। यद्यपि अन्तरिक्ष-

भूलोकप्रतिपादकौ चतुर्थ-पञ्चमौ स्तोमभागौ अत्र नानूदितौ, तथापि तृतीयस्य तदपेक्षकत्वमभिप्रेत्य "एभ्य एव लोकेभ्यः" इति समुदायतात्पर्यं दर्शितम्।

षष्ठस्तोमभागं वृष्टिप्राप्तिहेतुत्वेन प्रशंसति,—"विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्वेत्याह वृष्टिमेवावरुन्धे(६)" इति। हे वृष्ट्यभिमानिदेव, त्वं 'विष्टम्भोऽसि' (विशेषेणोदकस्य धारकोऽसि)।

सप्तमाष्टमस्तोमभागयोः प्रतीकद्वयमनूद्याह्नो रात्रेश्च प्रतिपादकत्वेन मिथुनत्वसम्पत्तिं दर्शयति,—"प्रवास्यनुवासीत्याह मिथुनत्वाय(७)" इति। हे अहरभिमानिदेव, त्वं 'प्रवाऽसि' (जगत्प्रवासकत्वरूपेण प्रकर्षेण वाति, गच्छति, प्रवर्त्तते इति 'प्रवा', हे रात्र्यभिमानिदेव, त्वम् 'अनुवाऽसि', निद्रादिव्यवहारस्य अनुकूलत्वेन वाति, गच्छति, वर्त्तते इति 'अनुवा'; तयोर्द्वित्वेन मिथुनत्वप्राप्तिसाधनत्वम्।

नवम-दशमैकादशस्तोमभागानां सङ्क्षेपेण तात्पर्यं दर्शयति,—"उशिगसि वसुभ्यस्त्वा वसून् जिन्वेत्याहाष्टौ वसव एकादश रुद्रा द्वादशादित्या एतावन्तो वै देवास्तेभ्य एव यज्ञं प्राह(८)" इति। हे वसुगणपालक, त्वम् 'उशिगसि' 'उशिक्' (कामयमानः)। रुद्रादित्यप्रतिपादकयोरपि स्तोमभागयोर्वसुविषयस्तोमभागेनैवोपलक्षितत्वात् सङ्क्षिप्य तात्पर्याभिधानम्।

देवप्रतिपादकेभ्यस्त्रिभ्यस्तोमभागेभ्य ऊर्ध्वं पितृप्रतिपादकस्य द्वादशस्य स्तोमभागस्याभिधानाद्देवानां पितॄणाञ्च नैरन्तर्यं सम्पादितं भवतीत्येतद्दर्शयति,—"आजोऽसि पितृभ्यस्त्वा पितॄन् जिन्वेत्याह

देवानेव पितॄननुसन्तनोति(९)" इति। हे पितृपालक देव, त्वम् 'ओजोऽसि' (बलरूपोऽसि)।

पितृप्रतिपादकस्तोमभागादूर्ध्वं प्रजापतिप्रतिपादकस्य त्रयोदशस्य स्तोमभागस्याभिधानात् पितॄणाञ्च प्रजानाञ्च नैरन्तर्यं सिध्यतीत्येतद्दर्शयति,—"तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्वेत्याह पितॄनेव प्रजा अनुसन्तनोति(१०)" इति। हे प्रजाभिमानिदेव, त्वं 'तन्तुरसि' (पुत्रपौत्रादिविस्तारहेतुरसि)।

पशुप्रतिपादकेन चतुर्दशेन स्तोमभागेन प्रजानाञ्च पशूनाञ्च नैरन्तर्यं सिध्यतीत्येतद्दर्शयति,—"पृतनाषाडसि पशुभ्यस्त्वा पशून् जिन्वेत्याह प्रजा एव पशूननुसन्तनोति(११)" इति। हे पशुपालक देव, त्वं 'पृतनाषाडसि' (पृतनां परकीयसेनाम्-आत्पशूनामपहन्त्रीं सहते विनाशयति इति पृतनाषाट्।

ओषधिप्रतिपादकेन पञ्चदशेन स्तोमभागेन पशुस्तोमभागानन्तरभाविनां पशूनामोषधीषु प्रतिष्ठापनं भवतीत्येतद्दर्शयति,—"रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वेत्याहौषधीष्वेव पशून् प्रतिष्ठापयति(१२)" इति। हे ओषधिपालक देव, त्वं 'रेवदसि' (धनवानसि)। पञ्चमकाण्डे, 'रश्मिरित्येवादित्यमसृजत' इत्यारभ्य, 'रेवदित्योषधीः' इत्यन्तेषु पञ्चदशेषु मन्त्रेषु 'असृजत' इति ब्राह्मणेन व्याख्यातत्वात्तदभिमानिदेवपरत्वेन मन्त्राणामादिवाक्यानि अस्माभिर्व्याख्यातानि।

अथ षोड़शस्तोमभागस्यादिवाक्यं वज्रपरत्वेन तत्रैव व्याख्यातम्, अतोऽत्रापि वज्रसाध्याभिजपार्थं दर्शयति,—"अभिजिदसि युक्त-

ग्रावेन्द्राय त्वेन्द्रं जिन्वेत्याहाभिजित्यै(१३)" इति। हे वज्र, त्वं 'अभिजित्' 'युक्तग्रावा' 'असि',—अभितो जयतीति 'अभिजित्', युक्ताः संयुक्ता ग्रावाणो यस्यासौ युक्तग्रावा। यथा पाषाणा दृढ़ा*, एवमस्यापि दृढ़त्वात्पाषाणगुणेन दार्ढ्येन संयोग एव ग्रावसंयोग इत्युच्यते।

सप्तदशेन स्तोमभागेन प्राणानां स्थापनं दर्शयति,—"अधिपतिरसि प्राणाय त्वा प्राणं जिन्वेत्याह प्रजास्वेव प्राणान् दधाति(१४)" इति। हे प्राणाभिमानिदेव, त्वम् 'अधिपतिरसि' प्राणानामाधिक्येन पालयितासि। अपान-चक्षुः-श्रोत्र प्रतिपादकानामष्टादशैकोनविंश विंशानां त्रयाणां स्तोमभागानां प्राणप्रतिपादकस्तोमभागेनैवोपलक्षितत्वमभिप्रेत्य संग्रहेण तात्पर्यं दर्शयितुं 'प्राणान्' इति बहुवचनं निर्दिष्टम्।

एकविंशद्वाविंशत्रयोविंशचतुर्विंशानां स्तोमभागानां चतुर्णां मिथुनत्वसम्पादकत्वं दर्शयति,—"त्रिवृदसि प्रवृदसीत्याह मिथुनत्वाय(१५)" इति। हे मिथुनीभाव, त्वं त्रिगुणोऽसि, प्रवर्त्तकश्चासि। पुमान्, योषित्, संयोगस्तेत्येवं त्रैगुण्यं, संयोगानन्तरभावी मन्थनव्यापारः प्रवृत्तिः; एताभ्यां त्रैगुण्यप्रवृत्तिप्रतिपादकाभ्यां, मन्थनसमाप्तिविश्लेषरूपमिथुनीभावावयवद्वयप्रतिपादकावुत्तरावपि स्तोमभागौ उपलक्ष्येते। संवृत् मथनव्यापारसमाप्तिः, विवृत् दम्पत्योर्विश्लेषः; अनेन स्तोमभागचतुष्टयेन मिथुनत्वं साकल्येन सम्पादितम्।

---

* पाषाणदृढ़ा इति आदर्शपुस्तके J पुस्तके च पाठः।

पञ्चविंशषड्विंशसप्तविंशाष्टविंशानां स्तोमभागानां चतुर्णां प्रजोत्पादनपरत्वं दर्शयति,—"संरोहोसि नीरोहोसीत्याह प्रजात्यै[११]" इति। हे प्रजननव्यापार, त्वं 'संरोहोऽसि', नीरोहश्चासि शुक्रशोणितसंश्लेषेण गर्भाभिव्यक्तिः 'संरोहः', निःशेषाणामवयवानाम् अभिव्यक्तिः 'नीरोहः'; एताभ्यामुभाभ्यां स्तोमभागाभ्यां प्ररोहानुरोहप्रतिपादकावन्यावपि स्तोमभागावुपलक्ष्येते। प्रथमस्य अपत्यस्योत्पत्तिः 'प्ररोहः'; पश्चाद्भाविनामपत्यानामुत्पत्तिः 'अनुरोहः'। एतेन स्तोमभागचतुष्टयेन प्रजोत्पत्तिः सम्पद्यते।

एकोनत्रिंशत्त्रिंशदेकत्रिंशस्तोमभागैस्त्रिभिरुत्पन्नानां प्रजानां प्रतिष्ठां दर्शयति,—"वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्याह प्रतिष्ठित्यै[१०]" इति। हे उत्पन्नप्रजाभिमानिदेव, त्वं 'वसुकः' (वासयिता) असि। वेषाय अनुकूला श्रीर्यस्य सः; व्याप्तिसमर्थश्चासि, 'वसेः' (निवासस्य) 'अष्टिः' (व्याप्तिः) यस्यासौ 'वस्यष्टिः'। अनेन स्तोमभागत्रयेण प्रजानां प्रतिष्ठा सम्पद्यते।

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः॥ ०॥

---

अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान् पादयाम्यवैनान्बाधे प्रत्येना-

न्नुदेस्मिन् क्षयेस्मिन् भूमिलोके योस्मान् द्वेष्टि यञ्च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि[1] इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण ॥ १ ॥

सहजान्[2] विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणापरजान्[3] इन्द्रेण सयुजा वयꣳ सासह्याम पृतन्यतः। घ्नन्तो वृत्राण्यप्रति। यत्ते अग्ने तेजस्तेनाहन्तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासं[4] ॥ २ ॥

बृहता साम्ना वषट्कारेण वज्रेण। षट्चत्वारिꣳशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ० ॥

यद्ब्रह्मत्वं स्तोमभागैर्द्वितीये तदुदीरीतम्।

अथ तृतीयानुवाके विष्णुतिक्रमा उच्यन्ते, कल्पः,—‘अग्निना देवेन पृतना जयामीति विष्णुतिक्रमान्’ इति। पाठस्तु,—“अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान् पादयाम्येनान्

बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि(१)" इति। देवः, छन्दः, स्तोमः, साम, वज्रश्चेत्येतानि परकीयां पृतनामभिभवितुं साधनानि; पृतनां जित्वा, 'भ्रातृव्यान् अधरान् पादयामि'। त्रिविधा हि भ्रातृव्याः—पूर्वजाः सहजा अपरजाश्चेति; पितृ-पितामहादिष्वपि अनुवर्तमानाः पूर्वजाः; सपत्नमातृजाः सहजाः; इदानीमेव स्वकार्यघातिनो परजाः; तेषु त्रिविधेषु मध्ये ये पूर्वजाः, तान् शत्रून् मत्तो नीचान्, यथा भवन्ति, तथा सम्पादयामि, सम्पाद्य च 'एनान्' 'अव'-'बाधे' येन अवमता यथा भवन्ति, तेन तथा शृङ्खलादिना बाधङ्करोमि), कृत्वा च 'एतान्' 'प्रति' 'नुदे' (प्रत्येकं विनाशयामि)। किञ्च 'अस्मिन्' 'क्षये', मदीये (निवासगृहे); अथ वा किमनेन सङ्कोचेन, 'अस्मिन् भूमिलोके' सर्वस्मिन्, 'यो' भ्रातृव्यः 'अस्मान्' उदासीनानपि 'द्वेष्टि', 'यञ्च' भ्रातृव्यमुदासीनमपि 'वयं द्विष्मः'। एतान् सर्वान् विद्वेषिणो, विष्णुरूपस्य यजमानस्य मम 'क्रमेण' (पादविन्यासेन) 'अति'-'क्रामामि' (लङ्घयामि)।

द्वितीयमन्त्रपाठस्तु,—"इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण सहजान्(२)" इति। अत्र "भ्रातृव्यान् अधरान् पादयामि" इत्यादिकमनुषज्य पूर्ववद्व्याख्येयम्।

तृतीयमन्त्रपाठस्तु,—"विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेण

परंजान्[१]" इति। अत्रापि "भ्रातृव्यानधरान्" इत्यादिकमनुषज्य व्याख्येयम्। त्रिवृदादिस्तोमानां रथन्तरादिसाम्नाञ्च स्वरूपं "समिधमातिष्ठ" इत्यनुवाके (१।८।१३अ०) दर्शितम्।

कल्पः,—'इन्द्रेण सयुजो वयमित्याहवनीयमुपतिष्ठते' इति। पाठस्तु, "इन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः। घ्नन्तो वृत्राण्यप्रति यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासम्"[४] इति। 'पृतना' (अस्मद्विरोधिनी सेना) आत्मन इच्छन्ति इति 'पृतन्यतः'* शत्रून्, वयं 'सासह्याम' (अतिशयेन सोढुं, शक्ताः स्मः)। कीदृशा वयं?—'इन्द्रेण सयुजः', परमैश्वर्ययोगात्, आहवनीय इन्द्रः, तेन सह युज्यन्ते युक्ता भवन्ति इति 'सयुजः'; वृत्राणि शत्रून्, 'अप्रति' (अस्मान्) प्रतिकूलत्वं यथा नास्ति, तथा, 'घ्नन्तः' (वधं कुर्वतः) हे अग्ने, 'ते' (त्वदीयं) 'यत्' 'तेजः' (कान्तिरूपं) तेनाहमपि कान्तिमान् 'भूयासम्'। 'वर्चः' (बलं)। 'हरः' (रश्मिरूपं तेजः)।

अथ विनियोगसङ्ग्रहः,—

यजमानोऽग्निमैन्द्रेण विश्वेभिर्विष्णुतिक्रमान्।
क्रामत्युत्तरयोर्भ्रातृव्यानित्याद्यनुषज्यते॥
इन्द्रे पूर्वाग्न्युपस्थानं मन्त्रास्त्वार ईरिताः।

एते मन्त्रा "उरुꣳ हि राजा" इत्यनुवाकात् (१।४।४५अ०) पूर्वं द्रष्टव्याः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः॥ ॰॥

ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयं[१,२]। आगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति। नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि-रोचने दिवः[३]। ये देवा यज्ञहनो यज्ञमुषोन्तरिक्षे-ध्यासते[४]। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयं[५]। यास्ते रात्रीः सवितः ॥ १ ॥

देवयानीरन्तरा द्यावापृथिवी वियन्ति। गृहैश्च सर्वैः प्रजयान्वग्ने सुवोरुहाणास्तरता रजाꣳसि[६] ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासते[७]। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयं[८]। येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः। तेनाग्ने त्वमुत वर्ध-येमꣳ सजातानाꣳ श्रैष्ठ्य आधेह्येनं[९]*। यज्ञहनो वै देवा यज्ञमुषः ॥ २ ॥

सन्ति त एषु लोकेष्वासत आददना विमथ्नाना यो ददाति यो यजते तस्य[१०]। ये देवा यज्ञहनः पृथिव्याम-ध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳस्ती-र्त्वा सगृहः सपशुः सुवर्गं लोकमेति[११] अप वै सोमे-

* इतः परं न मन्त्राः।

नेज्ञानाद्देवताश्च यज्ञश्च क्रामन्त्याग्नेयं पञ्चकपालमुद्वसानीयं निर्वपेदग्निः सर्वा देवताः॥ ३ ॥

पाङ्क्तो यज्ञो देवताश्चैव यज्ञञ्चावरुन्धे[१२] गायत्रो वा अग्निर्गायत्रछन्दास्तं छन्दसा व्यर्धयति यत्पञ्चकपालं करोत्यष्टाकपालः कार्योष्टाक्षरा गायत्री गायत्रोग्निर्गायत्रछन्दाः स्वेनैवैनं छन्दसा समर्धयति[१३]। पङ्क्तौ याज्यानुवाक्ये भवतः पाङ्क्तो यज्ञस्तेनैव यज्ञान्नैति[१४] ॥ ४ ॥

सवितः। देवा यज्ञमुषः। सर्वा देवताः। त्रिचत्वारिंशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

विष्णवतिक्रमणे मन्त्रास्तूतीये समुदीरिताः।

अथ चतुर्थेऽतिमोचमन्त्रा उच्यन्ते। कल्पः,—'वेदमुपस्थाय अन्तर्वेदि आसीनोऽतिमोचान् जपति' इति। अतिमोचशब्देन "ये देवा यज्ञहनः" इत्यादयो मन्त्रा विवक्षिताः, सूत्रकारेणान्यत्र, 'ये देवा यज्ञहन इत्यतिमोचाः' इत्युक्तत्वात। पाठस्तु,—"ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्[१।१]" इति। अत्र 'यज्ञमुषः' इति पदं पृथक्कृत्य मन्त्रभेदः कर्त्तव्यः। तत्र प्रथममन्त्रे 'पृथिव्यामध्यासते'

इत्याद्यन्तभागोऽनुषञ्जनीयः। द्वितीयमन्त्रे तु 'ये देवाः' इत्ययं पूर्वभागोऽनुषञ्जनीयः। देवानां मध्ये म्लेच्छजातयः केचित् देवाः यज्ञभागामर्हाः सन्तो द्रष्टुमसहमानाः केचिद्यज्ञं विनाशयन्ति, इति; अपरे तु यज्ञसाधनानि अपहृत्य अन्यत्र गच्छन्ति; तत्र यज्ञविघातिनो 'ये देवाः' 'पृथिव्यां' यं—कञ्चित् देशमधिष्ठाय अवतिष्ठन्ते, तेभ्यो यज्ञविघातिभ्यः 'अग्निः' 'मा' 'रक्षतु'। वयं 'सुकृतः' (सुष्ठु यज्ञं निष्पादितवन्तः) 'गच्छेम' (यज्ञफलं प्राप्नुयामः)। एवं यज्ञमुषां मन्त्रोऽपि व्याख्येयः।

तृतीयमन्त्रपाठस्तु,—"आगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति। नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिवः[१]" इति। हे 'वरेण्या' 'मित्रावरुणा' (श्रेष्ठौ मित्रावरुणौ) यज्ञसम्बन्धीनां* 'रात्रीणां' मध्ये वर्तमानायाम् अस्यां रात्रौ 'युवयोः' सम्बन्धी वशानूबन्ध्यारूपो 'यो' 'भागः' 'अस्ति', तेन वयं 'नाकं' (स्वर्गसुखं) 'गृह्णानाः' 'आगन्म' (सर्वतः प्राप्ताः स्मः)। कुत्रैतत् स्वर्गसुखग्रहणमिति?—तदुच्यते,—'सुकृतस्य' अस्य यज्ञस्य सम्बन्धिनि 'तृतीये' 'लोके'; कीदृशे?—'अधिरोचने' (अधिकं भासमाने)। भासमानोऽपि लोकः कुत्रेति?—तदुच्यते,—'दिवः' 'पृष्ठे' (स्वर्गस्योपरि)। पृथिव्यन्तरिक्षापेक्षया तृतीयत्वम्। पातालेलोकोऽपि तादृशो भवति इति व्यवच्छेदाय 'दिवः पृष्ठे' इत्युक्तं। रौरवादिनरकव्यावृत्तये 'सुकृतस्य' इत्युक्तं; नरको हि दुष्कृतस्य, न सुकृतस्य।

* एवमेव सर्व्वत्र पाठः। यज्ञसम्बन्धिनीनामिति तु भवितुं युक्तः।

अथ पूर्ववदनुषङ्गभेदभिन्नौ चतुर्थपञ्चममन्त्रावाह,—"ये देवा यज्ञहनो यज्ञमुषोऽन्तरिक्षेऽध्यासते(४)" इति। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्(५)" इति। पूर्ववद्व्याख्येयम्।

षष्ठमन्त्रमाह,—"यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति। गृहैश्च सर्वैः प्रजयान्वग्रे सुवो रुहाणास्तरता रजाꣳसि(६)" इति। हे 'सवितः' 'द्यावापृथिवी' 'अन्तरा' (द्यावापृथिव्योर्मध्ये), 'ते' (तव) सम्बन्धिन्यो 'याः' 'रात्रीः' (यज्ञानुष्ठानयोग्याः रात्रयः) 'वियन्ति' (विशेषेण गच्छन्ति) प्रवर्त्तन्ते; यद्यप्येकैव रात्रिः सुत्या कर्मार्हा, तथापि दीक्षोपसत्सहिता बह्वो रात्रयो भवन्ति; तासाञ्च सवितृप्रेरितत्वात् तत्सम्बन्धः। कीदृश्यो रात्रयः?—'देवयानीः' देवान् यान्ति इति देवयान्यः) दैविककर्मयुक्ता इत्यर्थः। तासु रात्रिषु कर्म अनुतिष्ठन्तः 'सर्वैः' 'गृहैश्च' 'प्रजया' अनुगृहवर्त्तिभिर्भृत्यैः* पुत्रादिना च सार्धं 'सुवो रुहाणाः' (स्वर्गं प्राप्नुवन्तः) यजमाना यूयं 'रजांसि' (रञ्जनीयानि सुखानि) 'तरत' (प्राप्नुत)।

पूर्ववदनुषङ्गभेदभिन्नौ सप्तमाष्टममन्त्रावाह,—"ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासते(७)" इति। "सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्(८)" इति। पूर्ववद्व्याख्येयम्।

अथ नवमं मन्त्रमाह,—"येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः। तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्ये आधेह्येनम्(९)" इति। हे 'जातवेदः', 'येन' 'उत्तमेन'

---

* अनुगृहवर्त्तिभिर्भृत्यः इति J पु० पाठः।

'हविषा' (उत्तमहविःस्वरूपेण) 'पर्यामि' (चीररसस्वादून्) सोमरसान् 'इन्द्राय' 'सभरः' (संभृतवानस्मि) । 'तेन' हविषा हे 'अग्ने' 'त्वम्' 'इमं' यजमानं 'वर्धय' । 'उत' अपि च (एनं) 'यजमानं' 'सजातानां' 'श्रैष्ठ्ये' (स्वाम्ये) 'आधेहि' ।

अथैतान् प्रशंसति,—"यज्ञहनो वै देवा यज्ञमुषः सन्ति त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य(१०)" इति । कपटरूपधारिणः केचन देवा यज्ञभागरहिता यज्ञशालादाहाद्युपद्रवेण यज्ञघातिनो भवन्ति; अपरे च ग्रहचमससोमरसापहारेण यज्ञमुषो भवन्ति । एवमुभयविधा ये 'सन्ति', ते त्रिष्वप्येतेषु 'लोके' अवतिष्ठन्ते ; किं कुर्वन्तः ? —'यो' यजमानो दक्षिणां 'ददाति', तदीयं दक्षिणाद्रव्यं गवादिकमपहरन्तीत्यर्थः । 'यो' यजमानो 'यजते' तदीयं ग्रहचमसादिकं 'विमथ्नानाः' (भङ्गपरित्यागादिना विलोडयन्तः) ।

तस्योपद्रवस्य सर्वस्यैतैर्मन्त्रैः परिहारं दर्शयति,—"ये देवा यज्ञहनः पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳस्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेति(११)" इति । अत्र 'यज्ञमुषः' इत्यत्र पृथक्मन्त्रत्वं दर्शयितुं तत्पदं परित्यज्यानुषङ्गेण सह 'यज्ञहनः' इत्येतावदेवोदाहृतम् । एतैर्मन्त्रैरुपद्रवसहितान् 'इमान्' लोकानुत्तीर्य 'सगृहः' (कलत्रपुत्रादिसहितः) 'सपशुः' (गवाश्वादिपशुसहितः) स्वर्गं प्राप्नोति । त एते मन्त्राः "उरुꣳ हि राजा" इत्येतस्मादनुवाकात् (१।४।४।अ०) पूर्वं द्रष्टव्याः ।

अथोदवसानीयं विधत्ते,—"अप वै सोमेनेजानाद्देवताश्च यज्ञश्च क्रामन्त्याग्नेयं पञ्चकपालमुदवसानीयं निर्वपेदग्निः सर्वा देवताः पाङ्क्तो यज्ञो देवताश्चैव यज्ञञ्चावरुन्धे(११)" इति। यः 'सोमेन' इष्टवानभवत्, एतस्मात् 'देवताश्च यज्ञश्च' 'अप' 'क्रामन्ति' —अनेन यजमानेन प्रयोजनाभावं मन्वाना एनं परित्यजन्ति; अतस्तदपक्रमणं वारयितुमग्निदेवतया युक्तं 'पञ्चकपालं' तादृश-पुरोडाशेन साध्यमुदवसानीयाख्यं कर्म कुर्यात्। अयम् 'अग्निः' सर्वदेवतात्मकः, 'यज्ञः' च 'पाङ्क्तः' (पञ्चसंख्योपेतः); 'ते देवा बिभ्यतोऽग्निं प्राविशन्'; 'धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते' इत्यादिश्रुतिद्वयात्। अत आग्नेयत्वेन सर्वा 'देवताः' 'अवरुन्धे', पञ्चकपालेन 'यज्ञम्' अपि अवरुन्धे।

अथ पञ्चकपालं दूषयित्वा अष्टाकपालं विधत्ते,—"गायत्रो वा अग्निर्गायत्रच्छन्दास्तं छन्दसा व्यर्धयति यत् पञ्चकपालं करोत्यष्टाकपालः कार्य्यः अष्टाक्षरा गायत्री गायत्रोऽग्निर्गायत्रच्छन्दाः स्वेनैवैनं छन्दसा समर्धयति(१२)" इति। अग्नेर्गायत्र्याश्च प्रजापतिमुखजन्यत्वेन 'गायत्रो' 'अग्निः'; पञ्चकपाले सति 'तम्' (अग्निं) स्वकीयेन 'छन्दसा' वियोजयति। अष्टाकपाले तु सति गायत्र्या अष्टाक्षरत्वादग्निं स्वकीयेन 'छन्दसा' समृद्धं करोति।

अत्र, 'अग्ने तमद्याश्वम्' इत्येते अक्षरपङ्क्त्यौ विधत्ते,—"पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तो यज्ञस्तेनैव यज्ञान्नैति(१४)" इति। अत्र तु गायत्रत्वसिद्धयेऽष्टाकपालः स्वीकृतः, तथापि

पाङ्क्तमन्त्रपाठेन धानादिद्वारा पाङ्क्तयज्ञादप्ययं यजमानो नौ पगच्छति।

अत्र विनियोगसङ्ग्रहः—

ये देवा इत्यतीमोचान्* मन्त्रानेतान् जपेन्नव।
यज्ञहन् यज्ञमुख्येति भेदान्मन्त्रभिदेष्यते॥

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः॥४॥

---

सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानोऽग्निर्मा पातु चक्षुषः। सक्ष शूष सवितर्विश्वचर्षण एतेभिः सोमनामभि विधेम ते तेभिः सोमनामभिर्विधेम ते[१]। अहं परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार। यदन्तरिक्षं तदु मे पिताभूदहꣳ सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः समानानां[२]॥१॥

आसमुद्रादान्तरिक्षात् प्रजापतिरुदधिं च्यावयातीन्द्रः प्रस्नौतु मरुतो वर्षयन्तु[३] उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः। उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिं[४]। पशवो वा एते यदादित्य एष रुद्रो यदग्नि-

* एवमेव सर्वत्र पाठः।

रोषधीः प्रास्याग्नावादित्यं जुहोति रुद्रादेव पशूनन्त-
र्दधात्यथो ओषधीष्वेव पशून् ॥ २ ॥

प्रतिष्ठापयति(५) कविर्यज्ञस्य वितनोति पन्थान्नाक-
स्य पृष्ठे अधि रोचने दिवः। येन हव्यं वहसि यासि।
दूत इतः प्रचेता अमुतः सनीयान्(६)। यास्ते विश्वाः
समिधः सन्त्यग्ने याः पृथिव्यां बर्हिषि सूर्ये याः। तास्ते
गच्छन्त्वाहुतिं घृतस्य देवायते यजमानाय शर्म(७)।
आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियं। बृहस्प-
तिना राया स्वगाकृतो मह्यं यजमानाय, तिष्ठ(८) ॥ ३ ॥

समानानाम्। ओषधीष्वेव पशून्। मह्यं यजमानाय।
एकञ्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चम-
प्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

अतीमोक्षजपे मन्त्रास्तुर्ये समुदीरिताः।
अथ पञ्चमेऽनुवाके आदित्यग्रहमन्त्रा उच्यन्ते।

कल्पः,—'सूर्यो मा देव इति दर्भैर्हस्तेनापिधायोत्तिष्ठति'
इति। पाठस्तु। "सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्य-
जमानोऽग्निर्मा पातु चक्षुषः। सक्ष शूष सवितर्विश्वचर्षण एतेभिः
सोमनामभिर्विधेम ते तेभिः सोमनामभि विधेम ते(१)" इति।
अयम आदित्यग्रहः सूर्यवाय्वात्मकः अतः सूर्यरूपोऽयं 'देवो' यज्ञ-

विघातिभ्यो मां 'पातु', तथा वायुरूपोऽयं विघ्नकारिदेवयुक्तात् 'अन्तरिक्षात्' मां पातु। तथा 'यजमानो' (यागहेतुः) अयम् 'अग्निः' 'चक्षुषः' (विरोधिदेवदृष्टेः) सकाशात् मां 'पातु'। हे 'सोम' सक्षादीनि चत्वारि यानि तव नामानि, एतैर्नामभिः 'ते' (तव) 'विधेम' (परिचर्याम् करवाम)। यानि च पूर्वोक्तानि सूर्यवाय्वग्निनामानि, 'तेभिः' (तैः) च नामभिस्तव परिचर्यां करवामहे। 'सक्ष' (पात्रमङ्ग), 'सूष' (लवन्), हे 'सवितः' (प्रेरक), हे 'विश्वचर्षणे' (सर्वमनुष्यानुग्राहक), एतैः सम्बोधनरूपैर्नामभिर्विधेमेत्यन्वयः।

कल्पः,—'अहं परस्तादित्यादित्यं यजमानोऽन्वारभते अहम्' इति। पाठस्तु,—"अहं परस्तादहमवस्तादहं ज्योतिषा वितमो ववार। यदन्तरिक्षन्तदु मे पिताभूदहꣳ सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः समानानाम्(१)" इति। 'अहं' (यजमानः) 'परस्तात्' (परभागे) 'ग्रहमन्वारभे' इति शेषः। 'अहम्' 'अवस्तात्' (अवरभागे) अपि ग्रहमन्वारभे। 'अहम्' अस्य आदित्यग्रहस्य 'ज्योतिषा' विशेषेण 'तमो ववार' (वारितवानस्मि)। उपरिभागाधोभागयोर्मध्यवर्ति 'यदन्तरिक्षं' 'तदु' (तदपि) 'मे पिता', (पितृवत्पालकम्) 'अभूत्'। 'अहं' 'सूर्यम्' (आदित्यग्रहं) 'उभयतः' (ऊर्ध्वाधोभागयोर्दक्षिणोत्तरभागयोर्वा) 'ददर्श' (दृष्टवानस्मि)। अतः 'अहं' 'समानानां' (यजमानानां) मध्ये 'उत्तमो' 'भूयासम्'।

कल्पः,—'आ समुद्रादिति दर्भैर्ग्रहाच्यावयति' इति। पाठस्तु, —"आ समुद्रात् आ अन्तरिक्षात् प्रजापतिरुदधिं च्यावयतीन्द्रः

प्रस्तौतु मरुतो वर्षयन्तु(१)" इति। 'प्रजापतिः' इमं ग्रहं चतुर्दिक्षु 'आ समुद्रात्' (समुद्रपर्यन्तं) दर्भैः 'आ'—'च्यावयति' इति। तथैवो-र्ध्वभागेऽपि 'आ अन्तरिक्षात्' (अन्तरिक्षपर्यन्तं); 'उदधिं'(समुद्रस-मानम्) आदित्यग्रहं 'च्यावयति'।'इन्द्रो' गवामूध इव ग्रहं 'प्रस्तौतु' (प्रस्तुतं करोतु), 'मरुतो वर्षयन्तु' (मेघा इव सन्ततधाराः कुर्वन्तु)।

कल्पः,—'उन्नम्भय पृथिवीमिति वृष्टिकामस्य जुहुयात्' इति । पाठस्तु,—"उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः ।उद्नो दिव्यस्य नो देह्रीशानो विसृजादृतिम्(४)" इति । हे आदित्य, 'पृथिवीम्' 'उन्नम्भय' (उत्कर्षेण क्लिन्नां कुरु) 'इदं' 'दिव्यं' 'नभो' 'भिन्धि' (द्युलोकस्थाकाशवर्त्तिमेघमिव ग्रहं भिन्धि, भिन्नं कुरु)। 'दिव्यस्य' (दिविभवस्य) 'उद्नः' (उदकस्य) समृद्धिं 'नः' (अस्मभ्यं) धेहि* । 'ईशानः' (समर्थः) त्वं 'दृतिं' 'विसृज' (जलविधारकं दृतिसमानं मेघं विमुञ्च)।

अथ विधत्ते,—"पशवो वा एते यदादित्य एष रुद्रो यद-ग्निरोषधीः प्रास्याग्नावादित्यं जुहोति रुद्रादेव पशूनन्तर्दधा-त्यथो ओषधीष्वेव पशून् प्रतिष्ठापयति(५)" इति। आदित्यग्रह इति 'यत्' 'एते' 'पशवो वै', तस्य पशुप्राप्तिहेतुत्वात्। अग्निरि-ति 'यत्' 'एष' क्रूरो देवः, तस्मात् क्रौर्यपरिहारायाग्नौ 'ओषधीः' प्रक्षिप्य पश्चादादित्यग्रहं 'जुहोति', तथा सति रुद्ररूपाग्निसकाशा-दादित्यग्रहरूपान् पशूनन्तर्हितानेव करोति। किञ्च 'ओषधीष्वेव' आदित्यग्रहरूपान् पशून् प्रतिष्ठितान् करोति ।

* अत्र 'देहि' इति पाठो भवितुं युक्तः।

कल्पः,—'कविर्यज्ञस्य वितनोति पन्थामिति यद्दं हुत्वा' इति । पाठस्तु,—"कविर्यज्ञस्य वितनोति पन्थां नाकस्य पृष्ठे अधिरोचने दिवः । येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान्(१)" इति। 'यज्ञस्य' 'कविः' (विद्वान्) अयमादित्यग्रहो 'नाकस्य' 'पन्थां' 'वितनोति' (स्वर्गस्य मार्गं वितनोति, विस्तृतं करोति)। कुत्र?—इति तदुच्यते,—'अधिरोचने' आधिक्येन भासमाने 'दिवः पृष्ठे' (द्युलोकस्योपरि); हे अग्ने, 'येन' (पथा) 'हव्यं हवसि', 'देवानां' 'दूतः' त्वम् 'इतो' निर्गत्य येन पथा 'यासि'; तादृशं पन्थानं 'वितनोति' इति पूर्वत्रान्वयः। कीदृशो दूतः?—(प्रकर्षेण चेतते, कर्मानुष्ठातारं जानाति इति, 'प्रचेताः', अमुष्मिन् (स्वर्गे) 'सनीयान्' (अतिशयेन फलस्य दाता)।

कल्पः,—'यास्ते विश्वाः समिधः सन्त्यग्न इति दर्भानाहवनीये प्रास्य' इति। पाठस्तु,—"यास्ते विश्वाः समिधः सन्त्यग्ने याः पृथिव्यां बर्हिषि सूर्ये याः। तास्ते गच्छन्त्वाहुतिं घृतस्य देवायते यजमानाय शर्म(२)" इति। हे 'अग्ने' त्वदीयाः 'समिधः' (सम्यग्दीप्यमाना ज्वालाः) 'याः' सन्ति, ता एव विशेषाकारेणोच्यन्ते,—'पृथिव्यां' (भूलोके) 'बर्हिषि' (यज्ञदेशे) 'या' 'दीप्तयः' 'सन्ति' 'सूर्ये' च 'या' दीप्तयः सन्ति, 'ते' (त्वदीयाः) 'ता' दीप्तयो 'घृतस्य' 'आहुतीः' 'गच्छन्तु' (प्राप्नुवन्तु)। (देवानात्मन इच्छति इति, देवायन्, तस्मै) 'देवायते' 'यजमानाय' 'शर्म' (सुखं) प्रयच्छन्तु। आदित्यग्रहविषयास्ते एते मन्त्राः, "कदाचन स्तरी" इत्यनुवाकादूर्ध्वं द्रष्टव्याः।

अथ कल्पे, 'यूपं यजमान उपतिष्ठते नमः खरुभ्यः' इत्युपक्रम्य, अन्ते पठितम्,—'आशासानः सुवीर्यम् इति चोपस्थाय' इति। पाठस्तु,—"आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियं। बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठ(८)" इति। हे यूप, त्वं 'यजमानाय' 'मह्यं' 'रायस्पोषम्' 'आशासानः' 'तिष्ठ'। कीदृशं पोषं?—'सुवीर्यं' (शोभनेन भोगसामर्थ्येनोपेतं); 'स्वश्वियं' (शोभनैरश्वैरुपेतं)। कीदृशो यूपः?—'बृहस्पतिना' देवेन 'राया' (आद्यनेकधननिमित्तं) (?) 'स्वगाकृतः' (यजमानस्य स्वगतो यथा भवति तथा कृतः)। सोऽयं मन्त्रः पशुप्रकरणगतात् "समुद्रं गच्छ" इत्यनुवाकादूर्ध्वं द्रष्टव्यः।

अत्र विनियोगसङ्ग्रहः,—

सूर्यो, तृतीयसवन आदित्यग्रहहस्तकः।
उत्तिष्ठेदहमित्यस्मात् स्वाम्यन्वारभते ग्रहम् ॥
आ समु, च्यावयेद्दर्भैस्त्वं, वृष्ट्यर्थिहोमकः।
कविर्हरेद्ग्रहं, यास्ते, वक्रौ प्रास्यति दर्भकान् ॥
आशा, यूपोपस्थितिः स्यात्तत्र मन्त्रा इहेरिताः।

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ०॥

---

सन्त्वा॑ नह्यामि॒ पय॑सा घृ॒तेन॒ सन्त्वा॑ नह्याम्यप ओष॑धीभिः। सन्त्वा॑ नह्यामि प्र॒जया॒हम॒द्य सा दी॑क्षि-

ता सनवो वाजमस्मे[१]। प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन
सीदतु[२]। अथाहमनुकामिनी स्वे लोके विशा इह[३]।
सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम। अग्ने सपत्न-
दम्भनमदब्धासो अदाभ्यं[४]। इमं विष्यामि वरुणस्य
पाशं ॥ १ ॥

यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य
लोके स्योनं मे सह पत्या करोमि[५]। प्रेह्युदेह्यृतस्य वामी-
रन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यन्ददताꣳ रुद्रावसृष्टासि
युवा नाम मा मा हिꣳसीः[६]। वसुभ्यो रुद्रेभ्य आदित्ये-
भ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय
वः पन्नेजनीः सादयामि[७]। विश्वस्य ते विश्वावतो
वृष्णियावतः ॥ २ ॥

तवाग्ने वामीरनु सन्दृशि विश्वा रेताꣳसि धिषीय[८]।
अगन्देवान् यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्
सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा
गन्धर्वमातिष्ठतानु। वातस्य पत्मन्निड ईडिताः[९] ॥ ३ ॥

पाशं। वृष्णियावतः। त्रिꣳशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चम-
प्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

आदित्यग्रहमन्त्रा ये ते पञ्चम उदीरिताः।

अथ षष्ठेऽनुवाके पत्नीविषया मन्त्रा उच्यन्ते। कल्पः,—'अत्र दर्शपूर्णमासवत्पत्नीꣳ सन्नह्यति सन्त्वा नह्यामीति विकार' इति। पाठस्तु,—"सन्त्वा नह्यामि पयसा घृतेन सन्त्वा नह्याम्यप ओषधीभिः। सन्त्वा नह्यामि प्रजयाहमद्य सा दीक्षिता सनवो वाजमस्मे[१]" इति। हे पत्नि, त्वां 'पयसा घृतेन' च निमित्तभूतेन 'सं'—'नह्यामि' (तदुभयसिद्ध्यर्थं सम्यक् योक्त्रेण बध्नामि)। तथा 'ओषधीभिः' सहिता 'अप' उद्दिश्य (तदुभयसिद्ध्यर्थं) त्वां 'सं'—'नह्यामि'। 'प्रजया' निमित्तभूतया 'अहम्' अस्मिन् कर्मणि त्वां 'सं'—'नह्यामि'। 'अस्मे' (अस्मासु) 'वाजम्' (अन्नम्) सनवः (सनितुं, दातुं) 'सा' 'पत्नी' 'दीक्षिता' भवतु।

कल्पः,—'प्रैतु ब्रह्मणस्पत्नीति प्रतिप्रस्थाता पत्नीमुदानयति' इति। पाठस्तु,—"प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु[२]" इति। 'ब्रह्मणो' (ब्राह्मणस्य) यजमानस्य 'पत्नी' 'प्रैतु,' (पत्नीशालाया निर्गत्य प्रकर्षेण गच्छतु), गत्वा प्राप्नोतु।

कल्पः,—'अथाहमनुकामिनीति पत्नी शालामुखीयमुपोपविश्य' इति। पाठस्तु,—"अथाहमनुकामिनी स्वे लोके विशा इह[३]" इति। 'अथाहम्' 'इह' 'स्वे लोके' (स्थाने) 'विशे' (उपविशामि)। कीदृशी?—'अनुकामिनी' (यजमानस्यानुकूल्यं कामयमाना)।

कल्पः,—'सुप्रजसस्त्वा वयमिति जपति' इति। पाठस्तु,—"सुप्रजसस्त्वा वयꣳ सुपत्नीरुपसेदिम। अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम्[४]" इति। हे 'अग्ने', 'सुप्रजसः'(शोभनापत्याः)'सुपत्नीः'

(धर्मपत्न्यो) वयम्, 'अदब्धासः' (केनाप्यतिरस्कृताः) सत्यः त्वाम् 'उपसेदिम' (तव समीपे उपविष्टा स्मः)। कीदृशं त्वां?— 'सपत्नदम्भनं' (वैरिनाशकं) 'अदाभ्यं' (केनाप्यतिरस्कार्यम्) ।

कल्पः,—'विचचृत* इमं विष्यामीति पत्नी योक्त्रम्' इति। पाठस्तु,—"इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि(५)" इति। 'सुकेतः' (शोभनज्ञानयुक्तः) 'सविता' (प्रेरकोऽन्तर्यामी) योक्त्ररूपं 'वरुणस्य पाशं' पूर्वम् 'अबध्नीत'। तम् 'इमं' 'विष्यामि' (विमुञ्चामि)। ततः 'सुकृतस्य' फलभूते उत्तमे 'लोके' 'धातुश्च' (परमेश्वरस्य) 'योनौ' (स्थाने) 'पत्या' 'सह' 'मे' 'स्योनं' (सुखं) 'करोमि' ।

कल्पः,—'प्रेह्युदेहीति नेष्टा पत्नीमुदानयति' इति। पाठस्तु, —"प्रेह्युदेहि ऋतस्य वामीरन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यं ददताꣳ रुद्रावसृष्टासि युवा नाम मा मा हिꣳसीः(६)" इति। हे पत्नि, 'प्रेहि' (शालामुखीयस्थानान्निर्गत्य पत्नेजनीरप आनेतुं प्रकर्षेण गच्छ)। 'उदेहि' (विलम्बमकृत्वा उत्थाय गच्छ)। 'ऋतस्य वामीः' (यज्ञस्य प्रेरकः) अयम् 'अग्निः' 'ते' गमनम् 'अनु'मन्यमानः 'अग्रं नयतु' (पुरतः प्रेरयतु)। 'अदितिः' (भूमिश्च) 'मध्यं ददतां' (उभयोः पार्श्वयोर्मध्येऽवस्थितं मार्गं प्रयच्छतु)। त्वं च 'रुद्रावसृष्टासि' (क्रूरेणोपद्रवकारिणा देवेन विमुक्तासि) ; अतो 'युवा' 'नाम' 'असि' (युवतिर्वा, बाधकेभ्यः पृथग्भूता वा असि); इत्यमाकारयन्तं मां नेष्टारं 'मा हिंसीः' (मा बाधस्व) ।

---

* विवचृत इति E. पु० पाठः। विवृत्त इति J. पु० पाठः।

कल्पः,—'पन्नेजनीर्गृह्णाति प्रत्यङ्तिष्ठन्तो वसुभ्यो रुद्रेभ्य आदित्येभ्यः' इति। पाठस्तु,—"वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीः साद-यामि(७)" इति। हे आपः, 'वो' (युष्मान्) 'पन्नेजनीर्गृह्णामि। किमर्थं?—वस्वादिदेवप्रीत्यर्थं; किञ्च यज्ञार्थमपि पन्नेजनीर्वो गृह्णामि।

कल्पः,—'पत्नी पन्नेजनीः सादयति प्रत्यङ्तिष्ठन्ती वसुभ्यो रुद्रेभ्य आदित्येभ्यः' इति। अत्र सादयामीत्येतावान् आम्नातो मन्त्रः, तस्य च शेषत्वेन, 'वसुभ्यः' इत्यादिकं 'गृह्णामि' इतिपद-व्यतिरिक्तं सर्वमनुषज्य पूर्ववद्व्याख्येयम्।

कल्पः,—'विश्वस्य ते विश्वावत इति हिङ्कारमनूद्गाता पत्नीम् सङ्ख्यापयति' इति। हिङ्कारमुच्चार्य अनन्तरमुद्गाता यथा पत्नीं पश्यति, तथा अध्वर्युरिमं मन्त्रमुच्चारयन् प्रदर्शयेदित्यर्थः। पाठस्तु,—"विश्वस्य ते विश्वावतो वृष्णियावतस्तवाग्ने वामीरनु सन्दृशि विश्वा रेताꣳसि धिषीय(८)" इति। हे 'अग्ने', 'विश्वस्य ते' 'सन्दृशि' (विश्वात्मकस्य तव कटाक्षवीक्षणे सति) तथा, (विश्वस्यास्ति* इति) विश्वावान्, (वृष्णियं बलमस्यास्तीति) वृष्णियावान्; तादृशस्य 'तव' वीक्षणे सति 'वामीः' (वननीयस्यानुष्ठानस्य प्रवर्त्तकोऽहं) 'विश्वा रेतांसि' (बहुपुत्रकारणानि सर्वाण्यपि वीर्याणि) 'धिषीय' (अनुक्रमेण पत्न्यां स्थापयेय)।

कल्पः,—'अगन्देवानिति च पत्न्यत्र उपप्रवर्त्तयति' इति।

---

* विश्वमस्यास्तीति क्वचित् पाठः साधुः

पाठस्तु,—"अगन्देवा'न् यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन् सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमातिष्ठतानु। वातस्य पत्मन्निड ईडिताः(९)" इति। अयं 'यज्ञो' 'देवान्' 'अगन्' (प्राप्नोतु)। 'देवीः' (द्योतमानाः) 'आपः' 'देवेभ्यः' अस्मदीयं 'यज्ञं' नितराम् 'अशिषन्' (विस्पष्टमुक्तवत्यः)। 'अस्मिन्' (यजमाने) 'सुन्वति' (सोमाभिषवं कुर्वति) 'स्वाहाकृताः' (स्वाहाकारेण सम्पादिताः) समुद्रसमाने स्वर्गेऽवस्थिताः 'आशिषः' (फलविशेषाः ये सम्पद्यन्ते, ते) सर्वेऽप्यनुक्रमेण 'गन्धर्वं' (पत्न्या मम गन्धर्ववत् प्रियं) यजमानम् 'आतिष्ठत' (प्राप्नुवन्तु)। 'वातस्य' (यज्ञप्रवर्तकस्य वायोः) 'वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते' इत्यन्यत्राम्नातम्; तस्य वायोः 'पत्मन्' (पतने प्रेरणे) सति 'इडः' (फलसाधनभूताः स्तोत्रविशेषाः) 'ईडिताः' (ऋत्विग्भिः प्रयुक्ताः); तस्मात्तत्फलं सर्वं यजमानः प्राप्नोत्विति तात्पर्यार्थः।

अत्र "सन्त्वा नह्यामि" इत्ययं योक्त्रबन्धनमन्त्रो दीक्षाप्रकरणे "इन्द्रस्य योनिरसि" इत्येतस्मात् मन्त्रात् पूर्वं द्रष्टव्यः। तत्रैव "अथाहं" "सुप्रजसः" इत्येतौ द्रष्टव्यौ। "इमं विष्यामि" इति मन्त्रोऽवभृथानुवाके "देवीराप एष वः" इत्येतस्मात् पूर्वं द्रष्टव्यः। "प्रेद्युदेहि" इति मन्त्रो "हृदे त्वा" इत्यनुवाके "देवीरापो अपान्नपात्" इत्येतस्मात् पूर्वं द्रष्टव्यः। "वसुभ्यः" इति ग्रहणसादनमन्त्रो "समुद्रस्य वोक्षित्या उन्नय" इत्येतस्मादूर्ध्वं द्रष्टव्यौ।

अत्र विनियोगसङ्ग्रहः,—

मन्त्वा, पत्न्यां योक्त्रबन्धः, प्रैतु, शालामुखे नयेत् ।
अथाहमुपविश्यैषा सुप्रजेति जपेदथ ॥
इमं, काले योक्त्रमोकः, प्रेहि, पत्नीमुदानयेत् ।
वसुपत्नेजनीः, पत्नी गृहीला तेन सादयेत् ॥
विश्वस्य पत्नीमुद्गात्रा सङ्ख्यापयति, सा त्वगन्, ।
अपः प्रवर्त्तयन्तूरावत्र मन्त्रा दश स्मृताः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

वषट्कारो वै गायत्रियै शिरोऽच्छिनत्तस्यै रसः परापतत्स पृथिवीं प्राविशत्स खदिरोऽभवद्यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यति सरसा अस्याहुतयो भवन्ति(१) । तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत्तत्पर्णस्य पर्णत्वं यस्य पर्णमयी जुहूः ॥ १ ॥

भवति सौम्या अस्याहुतयो भवन्ति जुषन्तेऽस्य देवा आहुतीः(२) । देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत् सुश्रवा वै नाम यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति(३) । ब्रह्म वै पर्णो विण्मरुतोऽन्नं

विण्मारुतोऽश्वत्थो यस्य पर्णमयी जुहूर्भवत्याश्वत्थ्युप-भृद्ब्रह्मणैवान्नमवरुन्धेऽथो ब्रह्म ॥ २ ॥

एव विश्यध्यूहति[४]। राष्ट्रं वै पर्णो विडश्वत्थो यत् पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्राष्ट्रमेव विश्यध्यूह-ति[५]। प्रजापतिर्वा अजुहोत्सा यत्राहुतिः प्रत्यतिष्ठ-त्ततो विकङ्कत उदतिष्ठत्ततः प्रजा असृजत यस्य वैक-ङ्कती ध्रुवा भवति प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रैव जायते[६]। एतद्वै स्रुचाꣳ रूपं यस्यैवꣳरूपाः स्रुचो भवन्ति सर्वाण्येवैनꣳ रूपाणि पशूनामुपतिष्ठन्ते नास्या-परूपमात्मञ्जायते[७]* ॥ ३ ॥

जुहूः। अथो ब्रह्म। स्रुचाꣳ। सप्तदश च ॥ ७ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चम-प्रपाठके सप्तमोऽनुवाकः ॥ ० ॥

षष्ठेऽनुवाके सम्प्रोक्ता योक्त्रबन्धादिमन्त्रकाः।

अथ सप्तमेऽनुवाके दर्शपूर्णमासाङ्गभूतानां स्रुचां वृक्षविशेषा विधीयन्ते।

तत्र स्रुववृक्षं विधत्ते,—"वषट्कारो वै गायत्रियै शिरोऽच्छिन-त्तस्यै रसः परापतत्स पृथिवीं प्राविशत् स खदिरोऽभवद्यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनावद्यति सरसा अस्याहुतयो भव-

* नायमनुवाको मन्त्ररूपः।

न्ति[१]" इति। वषट्काराभिमानी देवः केनापि विरोधेन गायत्र्याः शिरश्चिच्छेद, तदा तस्या गायत्र्याः छिन्नप्रदेशाज्जलं भूमौ पतित्वा 'खदिरो' वृक्षः 'अभवत्'; अतः स्रुवः खादिरः कर्त्तव्यः। तथा सति स्रुवेण यद्यदवद्यति, तत्सर्वं छन्दोरसेनावत्तं भवति, ततः 'अस्य' यजमानस्य 'आहुतयः' (सरसाः) भवन्ति।

अथ जुह्वा वृक्षविशेषं विधत्ते,—"तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत्तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत् तत् पर्णस्य पर्णत्वं यस्य पर्णमयी जुहूर्भवति सौम्या अस्याहुतयो भवन्ति जुषन्तेऽस्य देवा आहुतीः[२]" इति। 'इतो' (भूलोकादारभ्य) गण्यमानो यो द्युलोकः तृतीयो भवति, तत्र 'सोमः' पूर्वम् 'आसीत्' 'तं' च 'गायत्री' सम्—'आहरत्'। आहरणप्रकारः "कद्रूश्च" इत्यनुवाके प्रपञ्चितः। 'तस्य' (आह्रियमाणस्य सोमस्य) एकं 'पर्णं' भूमौ पतित्वा पलाशवृक्षः 'अभवत्'। पर्णजन्यत्वात्तस्य वृक्षस्य पर्णनाम सम्पन्नम्। तादृशेन पर्णवृक्षेण जुहूं निष्पादयेत्; तथा सति जुह्वा हूयमाना आहुतयः सर्वाः सोमसम्बन्धिन्यो भवन्ति। देवाश्च ता आहुतीः प्रीतिपुरःसराः सेवन्ते।

तं पर्णवृक्षं प्रकारान्तरेण प्रशंसति,—"देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत् सुश्रवा वै नाम यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति[३]" इति। यदा 'देवा' ब्रह्मतत्त्वविषये परस्परं संवादं रहसि कृतवन्तः, तदानीं पर्णवृक्षाभिमानी देवः तद्वृक्षच्छायायामुपविष्टानां देवानां वचनमशृणोत्; तस्मात् 'सुश्रवाः' इति तस्य नाम सम्पन्नम्। यस्मादयं वृक्षः 'सुश्रवाः',

तस्मात् जुह्वाः तन्मयत्वे इति यजमानः शोभनं स्तुतिरूपमेव वाक्यं सर्वदा 'शृणोति', नतु कदाचिदपि, 'पापं श्लोकं' (निन्दावचनं) 'शृणोति'।

अथ जुह्वाः पर्णमयीत्वदृष्टान्तार्थमनुवदन् उपभृतोऽश्वत्थवृक्षं विधत्ते,—"ब्रह्म वै पर्णो विण्मरुतोऽन्नं विण्मारुतोऽश्वत्थो यस्य पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्ब्रह्मणैवान्नमवरुन्धे अथो ब्रह्मैव विश्यध्यूहति(४)" इति। देवैरुच्यमानस्य ब्रह्मणः श्रवणात्पर्णवृक्षोऽपि 'ब्रह्म' एव। वैश्यजात्यभिमानित्वेन मरुतां सृष्टत्वात् मरुतोऽपि विशरूपाः। कृष्यादिपरैर्वैश्यैः सम्पादितत्वादन्नमपि मरुद्रूपम्। 'मरुतां वा एतदोजो यदश्वत्थः' इति श्रवणादश्वत्थस्य मारुतत्वम्। एवं स्थिते सति यो यजमानो जुहूं पर्णमयीं करोति, स एवोपभृतमाश्वत्थं कुर्यात्। उभयस्मिन् कृते सति जुहूरूपेण ब्रह्मणैवाश्वत्थस्वामिनां मरुतां विड्रूपान्नमवरुद्धं भवति। किं च ब्राह्मणजातिमेव वैश्यजातावधिकत्वेन स्थापयति*।

तदुभयमपि प्रकारान्तरेण प्रशंसति,—"राष्ट्रं वै पर्णो विडश्वत्थो यत्पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्राष्ट्रमेव विश्यध्यूहति(५)" इति। पर्णवृक्षस्वामिब्राह्मणजातिनिवासस्थानत्वाद्राष्ट्रत्वम् (पर्णरूपत्वम्)। मरुद्देवताद्वारा अश्वत्थस्य विड्रूपत्वम्; अतः पूर्वोक्तरीत्या जुहूपभृतोर्वृक्षद्वयनिष्पादितयोः सत्योः ब्रह्मरूपं राष्ट्रमश्वत्थरूपायां† 'विशि' अधिकत्वेन स्थापितं भवति।

---

* आस्थाप्यते इति J. पु० पाठः।

† अश्वत्थरूपायाम् इति E. पु० पाठः। 'अश्वत्थरूपायाम्' इति तु भवितुं युक्तः।

अथ ध्रुवाया विकङ्कतवृक्षं विधत्ते,—"प्रजापतिर्वा अजुहोत्सा यत्राहुतिः प्रत्यतिष्ठत्ततो विकङ्कत उदतिष्ठत्ततः प्रजा असृजत यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रैव जायते(६)" इति। प्रजापतिना पूर्वाहुतिर्यत्र आस्थिता, तस्माद्देशात् विकङ्कतवृक्ष उदपद्यत। तस्माद्विकङ्कतात् यज्ञसाधनभूतात् प्रजा असृजत। तस्मात् ध्रुवां वैकङ्कतीं कुर्यात्। तथा सति 'अस्य' यजमानस्याहुतयः प्रतिष्ठिता भवन्ति; किं चायं प्रजा उत्पादयति।

स्रुग्वृक्षविधिमुपसंहरति,—"एतद्वै स्रुचाᳬ रूपं यस्यैवᳬ रूपाः स्रुचो भवन्ति सर्वाण्येवैनᳬ रूपाणि पशूनामुपतिष्ठन्ते नास्यापरूपमात्मन् जायते(७)" इति। खादिरत्वं, पर्णमयीत्वम्, आश्वत्थत्वं, वैकङ्कतत्वं चेति यत्, 'एतत्' एव क्रमेण 'स्रुचां' जुहूपभृद्ध्रुवाणां मुख्यं स्वरूपं; तथा सति 'यस्य' यजमानस्य 'स्रुचः' 'एवंरूपा' भवन्ति'; 'एनं' यजमानं गवाश्वादिरूपाणि (सर्वाणि) अपि प्राप्नुवन्ति। किं च 'अस्य' यजमानस्य 'आत्मन्' (स्वोदरे) किञ्चिदप्यपत्यं 'अपरूपं' (विरुद्धस्वरूपोपेतं) न जायते, किं तु सर्वमप्यपत्यं सुस्वरूपमेव जायते।

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः॥७॥

---

उ॒प॒या॒मगृ॑हीतोसि प्र॒जाप॑तये त्वा॒ ज्योति॑ष्मते॒ ज्योति॑ष्मन्तं गृह्णामि॒ दक्षा॑य दक्ष॒वृधे॑ रा॒तं दे॒वेभ्यो॑ऽग्निजि॒-

ह्वभ्यस्त्वतायभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वाता-पिभ्यः पर्जन्यात्मभ्यो दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा[१]। अपेन्द्र द्विषतो मनोप जिज्यासतो जह्यप यो नोरातीयति तं जहि[२]। प्राणाय त्वापानाय त्वा व्यानाय त्वा सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यो, विश्वेभ्य-स्त्वा भूतेभ्यो यतः प्रजा अखिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने* ज्योतिष्मते ज्योतिष्मन्तं जुहोमि[३] ॥ १ ॥

ओषधीभ्यः। चतुर्दश च ॥ ८ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चम-प्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

दध्यङ्गानां सुचां वृत्ताः सप्तमे समुदीरिताः।

अथाष्टमे दधिग्रहमन्त्रा उच्यन्ते। कल्पः,—'उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीति दधि गृहीत्वा' इति। पाठस्तु,—"उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्य-स्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्यो दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा[१]" इति। हे दधिग्रह, उपयामेन (पार्थिवपात्रेण) गृहीतोऽसि, 'ज्योतिष्मते' 'प्रजापतये' 'ज्योतिष्मन्तं' 'गृह्णामि'। (दक्षान् कर्मकुशलान् वर्धयतीति, दक्षवृधु,

* विभूदाव्ने इति A. सं० पु० पाठः।

तस्मै) 'दक्षवृधे' 'दक्षाय' (दक्षनाम्ने) 'रातं' (पूर्वं प्रजापतिना दत्तं) किं च, 'देवेभ्यो' 'रातं' (दत्तं)। कीदृशेभ्यः?—'अग्निजिह्वेभ्यः' (अग्निरेव जिह्वा येषान्तेऽग्निजिह्वाः); (ऋतं सत्यमात्मन इच्छन्तीति) 'ऋतायवः', (इन्द्रो ज्येष्ठो येभ्यस्ते) 'इन्द्रज्येष्ठाः' (वरुणो राजा येषान्ते) 'वरुणराजानः', (वातं वायुमाप्नुवन्तीति) 'वातापिनः', वाताहारा इत्यर्थः; (पर्जन्य एवात्मा येषान्ते) 'पर्जन्यात्मानः', वृष्ट्यादिसहिष्णव इत्यर्थः। ईदृशेभ्यो देवेभ्यो 'रातं' 'त्वां' 'गृह्णामि'। तथा 'दिवे' (द्युलोकप्राप्त्यर्थं) 'त्वां' 'गृह्णामि'। एवम् 'अन्तरिक्षाय त्वा', 'पृथिव्यै त्वा' इत्युभयं योज्यम्।

कल्पः,—'अपेन्द्र द्विषतो मन इति हरति' इति। पाठस्तु,—"अपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तं जहि(१)" इति। त्रिविधो हि शत्रुः,—द्विषत्—जिज्यासद्—अरातीयाश्चेति; यजमानस्य विद्यमानं द्रव्यादिकं यो विनाशयति, स द्विषन्नित्युच्यते; यस्तु द्रव्यमपहर्तुमशक्तोऽस्य बधः (हानिं मरणम्) एवेच्छति, स जिज्यासन्नित्युच्यते। रातिर्दानम्, अरातिरदानं, तदात्मने इच्छति, देयत्वेन प्राप्तं किमपि न ददाति इत्यर्थः, तादृशः अरातीय इत्युच्यते। हे 'इन्द्र' 'त्वं' 'द्विषतः' (शत्रोः) 'मनः' 'अप'—'जहि'। तथा, 'जिज्यासतः', शत्रोर्मनोऽपजहि। तथा 'यः' अस्माकं अरातिमिच्छति, तमपजहि।

कल्पः,—'प्राणाय त्वा अपानाय त्वेति जुहोति' इति। पाठस्तु,—"प्राणाय त्वा अपानाय त्वा व्यानाय त्वा सते त्वा असते त्वाद्भ्यस्त्वो-

षधीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि[२]" इति। हे दधिग्रह, 'प्राणाय' (प्राणप्रीत्यै) त्वां जुहोमि। एवम् "अपानाय त्वा' इत्यादिषु योज्यम्। प्राण ऊर्ध्ववृत्तिः। अपानः अवाग्वृत्तिः। व्यानो मध्यवृत्तिः। शास्त्रीयमार्गवर्ती पुरुषः सन्। तद्विपरीतः असन्। आप ओषधयश्च प्रसिद्धाः। 'ओषधीभ्यः' इत्यत्र अनाम्नातमपि 'त्वा' इति पदमनुषञ्जनीयम्। विश्वानि भूतानि सर्वप्राणिनः, तेषां सर्वेषां प्रीत्यै त्वां जुहोमि। किं च 'यतः' (प्रजापतेः) सकाशात् 'प्रजाः' 'सर्वाः' 'अक्खिद्राः' (खेदरहिताः) उत्पन्नाः, सः प्रजापतिः, विभुत्वम् (ऐश्वर्यं) ददाति इति विभूदावा, सर्वप्रकाशकत्वेन ज्योतिष्मन्तं त्वां जुहोमि।

अत्र विनियोगसङ्ग्रहः,—

उपया, दधि गृह्णात्यपेन्द्रेति हरति ग्रहम्।
प्राणायेति जुहोत्येवं त्रयो मन्त्रा इहेरिताः॥

एते च मन्त्रा "यमग्ने पृत्सु मर्त्यम्"इत्येतस्मात् मन्त्रादूर्ध्वं द्रष्टव्याः।

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके अष्टमोऽनुवाकः॥०॥

---

यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते प्राजापत्यं दधिग्रहं गृह्णीयात् प्रजापतिः सर्वा देवता देवताभ्य एव निह्नुवाते[१] ज्येष्ठो वा एष ग्रहाणां यस्यैष गृह्यते ज्यैष्ठ्यमेव गच्छति[२] सर्वासां

वा एतद्देवतानाꣳ रूपं यदेष ग्रहो यस्यैष गृह्यते सर्वाण्येवैनꣳ रूपाणि पशूनामुपतिष्ठन्त(३) उपयामगृहीतः ॥ १ ॥

असि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीत्याह ज्योतिरेवैनꣳ समानानां करोति(४) अग्निजिह्वेभ्यस्त्वर्तायुभ्य इत्याहैतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णाति(५) अपेन्द्रद्विषतो मन इत्याह भ्रातृव्यापनुत्त्यै(६) प्राणाय त्वापानाय त्वेत्याह प्राणानेव यजमाने दधाति(७) तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि ॥ २ ॥

इत्याह प्रजापतिः सर्वा देवताः सर्वाभ्य एवैनं देवताभ्यो जुहोति(८) आज्यग्रहं गृह्णीयात्तेजस्कामस्य तेजो वा आज्यं तेजस्व्येव भवति सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्य ब्रह्मवर्चसं वै सोमो ब्रह्मवर्चस्येव भवति दधिग्रहं गृह्णीयात् पशुकामस्योग्वै दध्यूर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे(९) ॥ ३ ॥*

उपयामगृहीतः। जुहोमि। चित्वारिꣳशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ० ॥

---

* नायमनुवाको मन्त्ररूपः।

दधिग्रहस्य ये मन्त्रा अष्टमे ते प्रकीर्तिताः।

अथ नवमेऽनुवाके ते मन्त्रा व्याख्यातव्याः। तत्रादौ दधिग्रहं विधत्ते,—"यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्चेते प्राजापत्यं दधिग्रहं गृह्णीयात् प्रजापतिः सर्वा देवता देवताभ्य एव निह्नुवाते[१]" इति। सोमयागे देवताबाहुल्यादध्वर्युयजमानौ प्रमादेन यस्या देवताया अन्तरायं कुर्वाते, 'तस्या' देवताया उभौ विच्छिन्नौ* भवतः, तस्या देवताया अपराधिनावित्यर्थः। अतोऽपराधपरिहाराय प्रजापतिदेवताकं 'दधिग्रहं गृह्णीयात्', प्रजापतिश्च स्रष्टृत्वात् सर्वदेवतारूपः, अतस्तस्मै ग्रहं दत्त्वा सर्वदेवताभ्योऽन्नवन्तावित्येवं निह्नवम् (अपलापं) कुरुतः। तेनापलापेन देवता द्वेषं मुञ्चति।

अस्य ग्रहस्य सर्वग्रहेभ्यः प्राथम्यं विधत्ते,—"ज्येष्ठो वा एष ग्रहाणां यस्यैष गृह्यते ज्यैष्ठ्यमेव गच्छति[२]" इति। 'ग्रहाणां' मध्ये 'ज्येष्ठः' (प्रथमभावी), तस्मात् प्रथमं गृह्णीयादित्यर्थः। 'यस्य' यजमानस्य 'एष' ग्रहः प्रथमं 'गृह्यते', स यजमानो 'ज्यैष्ठ्यमेव गच्छति' (सर्वेषां यजमानानां मध्ये मुख्यत्वं प्राप्नोत्येव)।

तस्य ग्रहस्य प्रजापतिदेवताकत्वं प्रशंसति,—"सर्वासां वा एतद्देवतानाꣳ रूपं यदेष ग्रहो यस्यैष गृह्यते सर्वाण्येवैनꣳ रूपाणि पशूनामुपतिष्ठन्ते[३]" इति। 'एष' प्रजापतिदेवताको ग्रह इति 'यत्' 'एतत्' 'सर्वासाम्' एव 'देवतानां' स्वरूपम्, प्रजापतेः सर्वदेवतात्मकत्वात्, अतो 'यस्य' यजमानस्य 'एष'

* विच्छिन्नौ इति J. पु० पाठः।

गृह्यते, 'एनं' यजमानं पशूनां 'सर्वाणि' (रूपाणि) गवाश्वादीनि प्राप्नुवन्ति।

अत्र ग्रहणमन्त्रस्य पूर्वभागे ज्योतिर्विशेषणं प्रशंसति,—"उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीत्याह ज्योतिरेवैनꣳ समानानां करोति(४)" इति। 'एनं' यजमानं 'समानानां' मध्ये 'ज्योतिरेव' (तेजोयुक्तमेव) 'करोति'।

उत्तरभागे प्रजापत्यवयवभूतानां देवतानां प्रतिपादकानि 'अग्निजिह्वेभ्यः' इत्यादीनि नवसङ्ख्याकानि चतुर्थ्यन्तपदानि, तेषां तात्पर्यं संगृह्य दर्शयति,—"अग्निजिह्वेभ्यस्त्वर्तावृधभ्य इत्याहैतावती वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णाति(५)" इति।

हरणमन्त्रगतस्य 'अप—जहि' इत्येतस्य तात्पर्यं दर्शयति,—"अपेन्द्रद्विषतो मन इत्याह भ्रातृव्यापनुत्त्यै(६)" इति।

होममन्त्रपूर्वभागे प्राणादिपदतात्पर्यं दर्शयति,—"प्राणाय त्वा अपानाय त्वेत्याह प्राणानेव यजमाने दधाति(७)" इति।

प्रजापतिपदतात्पर्यं दर्शयति,—"तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि इत्याह प्रजापतिः सर्वा देवताः सर्वाभ्य एवैनं देवताभ्यो जुहोति(८)" इति। 'एनं' दधिग्रहम्।

अत्र काम्यान् गुणविशेषान् त्रीन् विधत्ते,—"आज्यग्रहं गृह्णीयात्तेजस्कामस्य तेजो वा आज्यं तेजस्व्येव भवति सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्य ब्रह्मवर्चसं वै सोम ब्रह्मवर्चस्येव भवति दधिग्रहं गृह्णीयात् पशुकामस्योर्ग्वै दध्यूर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे(९)" इति।

अथ मीमांसा,—

चतुर्थाध्यायस्य चतुर्थपादे (५ अ०) चिन्तितम्,—

"नित्ये नैमित्तिकत्वे वा नित्यतैव दधिग्रहे।
देवतान्तरायात् ज्यैष्ठ्यात् स्यादस्योभयरूपता॥
निमित्तत्वद्योतिनोऽत्र यदिशब्दादयो नहि।
अतोऽस्य न निमित्तत्वं केवला नित्यतोचिता॥

ज्योतिष्टोमे श्रूयते,—"यां वै काञ्चिदध्वर्युर्यजमानस्य देवतामन्तरितः तस्या आवृश्च्यते यत् प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनाम्"इति; सोऽयं दधिग्रहो नित्यो नैमित्तिकश्चोभयात्मकः। कुतः ?। आकारद्वयसद्भावात्, देवतान्तरायेण तद्देवताक्षोभमुपन्यस्य ग्रहेण समाधानाभिधानात्, अन्तरायो निमित्तं, ग्रहो नैमित्तिक इति प्रतिभाति। तथा ज्येष्ठत्वमाम्नातं,—'ज्येष्ठो वा एष ग्रहाणाम्' इति; ज्येष्ठत्वं नाम प्रशस्तत्वं, तच्च नित्यत्वे सति उपपद्यते। नैमित्तिकस्य पाक्षिकत्वादप्रशस्तं। तस्मात् हेतुद्वयबलात् उभयात्मक इति चेत्। मैवं, देवतान्तरायस्यानिमित्तत्वात्, निमित्तत्वे यदिशब्द उपबध्येत, सप्तमी वा श्रूयेत। यच्छब्दो वा अन्तरायकर्त्रोरध्वर्युयजमानयोः सामानाधिकरण्येन प्रयुज्येत। "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् गृह्णीयात्, भिन्ने जुहोति, यो वै संवत्सरमुख्यमभृत्वा अग्निं चिनुते" इत्यादिषु सम्प्रतिपन्ननिमित्तेषु तद्दर्शनात्। तस्मात् केवलनित्यत्वमेव दधिग्रहस्योचितं, देवताक्षोभतत्समाधानोपन्यासो विधेयदधिग्रहस्तुतये,—इत्यर्थवादः।

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः॥ ०॥

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः। स्वादोः स्वादीयः स्वादुना सृजा समतऊषु मधु मधुनाभियोधि। उपयामगृहीतोसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा[१] प्राणग्रहान् गृह्णात्येतावद्वा अस्ति यावदेते ग्रहास्तोमाश्छन्दांसि पृष्ठानि दिशो यावदेवास्ति तत् ॥ १ ॥

अवरुन्धे[२] ज्येष्ठा वा एतान् ब्राह्मणाः पुराविदामक्रन्तस्मात्तेषां सर्वा दिशोभिजिता अभूवन् यस्यैते गृह्यन्ते ज्यैष्ठ्यमेव गच्छत्यभि दिशो जयति[३] पञ्च गृह्यन्ते पञ्च दिशः सर्वास्वेव दिक्ष्वृध्नुवन्ति[४] नव नव गृह्यन्ते नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधति[५] प्रायणीये चोदयनीये च गृह्यन्ते प्राणा वै प्राणग्रहाः ॥ २ ॥

प्राणैरेव प्रयन्ति प्राणैरुद्यन्ति[६] दशमेहन् गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणेभ्यः खलु वा एतत् प्रजा यन्ति यद्वामदेव्यं योनेश्च्यवते दशमेहन् वामदेव्यं योनेश्च्यवते यद्दशमेहन् गृह्यन्ते प्राणेभ्य एव तत् प्रजा न यन्ति ॥ ३ ॥

तत्। प्राणग्रहाः। सप्तचिंशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥ ० ॥

अनुवाके तु नवमे दधिग्रहविधिः श्रुतः ।

अथ दशमेऽनुवाके गवामयनेऽतिग्राह्याः प्राणग्रहाश्चोच्यन्ते ।

कल्पः,—'अतिग्राह्यायतने चत्वार्यतिग्राह्यपात्राणि प्रतिदिशं निहितानि भवन्ति मध्ये पञ्चमम्' इत्युपक्रम्य, पञ्चसु पात्रेषु तत्तन्मन्त्रैर्ग्रहाणां सादने अभिधाय इदमुक्तं, 'तान् अन्यस्मिन पात्रे आनीय सर्वान्मध्यमे गृह्णाति त्वे क्रतुमपि वृञ्जन्ति विश्वे' इति । पाठस्तु,—"त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः । स्वादोः स्वादीयः स्वादुना सृजा समत ऊषु मधु मधुनाभियोधि । उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा(१)" इति । हे अतिग्राह्य, 'त्वे' (त्वयि) 'क्रतुमपि वृञ्जन्ति', (सर्वमपि क्रतुमृत्विजः समापयन्ति) । ग्रहान्तरेभ्यः अस्य को विशेषः ? इति, तदुच्यते, 'यत्' (यस्मात्कारणात्) 'द्विः' 'त्रिः' (द्विवारं त्रिवारं) वेत्येवं पञ्चसु पात्रेषु गृहीता एते रसाः, 'विश्वे' (सर्वेऽपि) 'ऊमा' (रक्षका) भवन्ति, तस्मात्त्वयि क्रतोः समापनं युक्तम् ; अतस्त्वमपि 'स्वादोः' अपि (रसातिशयेन स्वादु यथा भवति) तथा 'स्वादुना' 'सं'—'सृज' (स्वादुत्वेन संसर्गं कुरु) । 'अत ऊषु' (अतोऽपि सुष्ठु यथा भवति) तथा 'मधु मधुना अभियोधि', (मधुनो भागं मधुना भागान्तरेण अभियोधि) । य एवं मधुरसम् उपयामेन (पार्थिवपात्रेण) 'गृहीतोऽसि', 'प्रजापतये जुष्टं' (प्रियमितरपात्रेभ्य आनीतं) त्वां मध्यमपात्रे 'गृह्णामि' ; सोऽयं ग्रहणमन्त्रः । 'एष' (खरप्रदेशः) 'ते' 'योनिः' (तव स्थानं) । अतः प्रजापत्यर्थं

लोमत्र सादयामि। अनेन मन्त्रेण गवामयनस्य संवत्सरसत्र-स्योपान्त्येऽह्नि महाव्रताख्येऽतिग्राह्यं गृह्णीयात्।

अथ चतुर्थकाण्डसमाम्नातैः "अयं पुरो भुवः" इत्यादिभिर्मन्त्रैः पृश्निग्रहवत् सोमोन्मानरूपान् ग्रहान् विधत्ते,—"प्राणग्रहान् गृह्णात्येतावद्वा अस्ति यावदेते ग्रहास्तोमाश्छन्दाᳪसि पृष्ठानि दिशो यावदेवास्ति तदवरुन्धे[२]" इति। यथा, 'यत् पृश्नयो गृह्यन्ते' इत्यत्र, 'वायुरसि प्राणो नाम' इत्यादिभिर्मन्त्रैः, सोमो-न्मानविशेषा एव ग्रहाः—इत्युक्तं, एवमत्रापि "अयं पुरोभुवः" इत्यादिभिः प्राणमन्त्रैः सोमोन्मानविशेषाः प्राणग्रहा इत्युच्यन्ते; तान् गृह्णीयात्, सोमोन्मानं कुर्यादित्यर्थः। 'एते' 'ग्रहा' इति 'यावत्' 'एतावत्' एवात्रापेक्षितम् 'अस्ति'। 'स्तोमाः' त्रिवृत्पञ्चदशादयः। 'छन्दांसि' गायत्र्यादीनि। 'पृष्ठानि' मध्यन्दिन—पवमानानन्तरभावीनि स्तोत्राणि। 'दिशः' प्राच्या-द्याः,—इत्येतादृशं 'यावत्' एवापेक्षितम् 'अस्ति', 'तत्' सर्वमेतैर्ग्रहैः 'अवरुन्धे'।

प्रकारान्तरेण प्राणग्रहान् प्रशंसति,—"ज्येष्ठा वा एतान् ब्राह्मणाः पुराविदाम् अक्रन् तस्मात्तेषाᳪ सर्वा दिशोऽभिजिता अभूवन् यस्यैते गृह्यन्ते ज्यैष्ठ्यमेव गच्छत्यभिदिशो जयति[२]" इति। यस्मात् 'एतान्' ग्रहान् गृह्णन्तो 'ब्राह्मणा' 'ज्येष्ठा' दिशाञ्जेतारश्च 'अभूवन्', तस्मात् 'यस्यैते गृह्यन्ते', स इतरेभ्यो 'ज्यैष्ठ्यं' (प्राशस्त्यम्) एव प्राप्नोति, नानादिक्षु अवस्थिताश्च पुरुषास्तस्य भवन्ति।

प्राणग्रहपर्यायाणां सङ्ख्यां विधत्ते,—"पञ्च गृह्यन्ते पञ्च दिशः

सर्वास्वेव दिक्ष्वृध्नुवन्ति(४)" इति। "अयं पुरोभुवः" इत्यादिभिः मन्त्रैः प्रथमः पर्यायः; "अयं दक्षिणा विश्वकर्मा" इत्यादिभिर्द्वितीयः; "अयं पश्चाद्विश्वव्यचा" इत्यादिभिस्तृतीयः; "इदमुत्तरात् सुवर्" इत्यादिभिश्चतुर्थः; "इयमुपरि मतिः" इत्यादिभिः पञ्चमः। प्राच्यादय ऊर्ध्वान्ताः पञ्च दिशः; तासु 'दिक्षु' 'सर्वासु' अनेन पञ्चविधग्रहणेन समृद्धिं प्राप्नुवन्ति।

एकैकस्मिन् पर्याये सोमांशुसङ्ख्यां विधत्ते,—"नव नव गृह्यन्ते नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधति(५)" इति। शिरोवस्थितेषु सप्तसु छिद्रेषु अधोऽवस्थितयोश्च द्वयोः छिद्रयोः सञ्चरन्तः प्राणा नवसङ्ख्याकाः, नवांशुग्रहणेन तान् यजमानेषु स्थापयति।

अस्य ग्रहणस्य कालं विधत्ते,—"प्रायणीये चोदयनीये च गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणैरेव प्रयन्ति प्राणैरुद्यन्ति(६)" इति। संवत्सरसत्रस्य प्रथमम् अहः प्रायणीयम्, चरमम् अहः उदयनीयं, तयोरुभयोर्ग्रहीयात्, तदा सति तेषां ग्रहाणां प्राणरूपत्वात् 'प्राणैरेव' संवत्सरमुपक्रम्य, 'प्राणैः' एव समापितवन्तो भवन्ति।

कालान्तरञ्च विधत्ते,—"दशमेऽहन् गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणेभ्यः खलु वा एतत् प्रजा यन्ति यद्वामदेव्यं योनेश्च्यवते दशमेऽहन् वामदेव्यं योनेश्च्यवते यद्दशमेऽहन् गृह्यन्ते प्राणेभ्य एव तत् प्रजा न यन्ति(७)" इति। संवत्सरसत्रस्य द्वादशाहविकृतित्वात् तदीयानि अहानि अत्र प्रयोक्तव्यानि; तेषु

यद्दशममहः, तस्मिन् प्राणग्रहान् गृह्णीयात्। वामदेव्याख्यस्य साम्नः "कया नश्चित्र आभुवत्" इत्येषा योनिः दशमेऽहनि तु तां योनिं परित्यज्य अन्यस्यामृचि तत् साम गीयते, तथा सति 'वामदेव्यं' स्व-'योनेः' 'च्यवते' इति 'यत्', एतेनापराधेन 'प्रजाः' प्राणेभ्यो 'यन्ति' (अपगच्छन्ति)। तत्र प्राणग्रहाणां प्राणरूपत्वात् दशमेऽहनि तेषां ग्रहणेन 'प्रजाः' प्राणेभ्यो नापगच्छन्ति।

अत्र विनियोगसङ्ग्रहः,—

त्वे, गवामयने पात्रेऽतिग्राह्यग्रहणं भवेत्।
अयं पुरोभुवः, प्राणग्रहाणां पञ्च मन्त्रकाः॥
सोमांशवो नव नव, ग्राह्याः पर्यायपञ्चके।
कया नश्चित्र एतस्या योनेर्भ्रष्टन्तु साम तत्॥
अग्निं नर इति ह्यत्र गीयते दशमेऽहनीति।

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः॥१०॥

---

प्र देवं देव्या धिया भरता जातवेदसं। हव्या नो वक्षदानुषक्[१] अयमु ष्यः प्र देवयुर्होता यज्ञाय नीयते। रथो न योरभीवृतो घृणीवां चेतति त्मना[२]। अयमग्निरुरुष्यत्यमृतादिव जन्मनः। सहसश्चित्सहीयान्देवो जीवातवे कृतः[३]। इडायास्त्वा पदे वयन्नाभा पृथिव्या अधि। जातवेदो निधीमह्यग्ने हव्याय वोढवे[४] ॥ १ ॥

अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिं । कुलायिनं घृतवन्तं सवित्रे यज्ञन्नय यजमानाय साधु(५)। सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञं सुकृतस्य योनौ। देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः(६)। नि होता होतृषदने विदानस्त्वेषो दीदिवां असदत्सुदक्षः। अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः(७)। त्वं दूतस्त्वं ॥ २ ॥

उ नः परस्पास्त्वं वस्य आ वृषभ प्रणेता। अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः(८)। अभि त्वा देव सवितरीशानं वार्याणां। सदावन् भागमीमहे(९)। मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां। पिपृतान्नो भरीमभिः(१०)। त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः(११) तमु ॥ ३ ॥

·त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः। वृत्रहणं पुरन्दरं(१२)। तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमं। धनञ्जयं रणेरणे(१३)। उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि। धनञ्जयो रणेरणे(१४) आ यं हस्ते न खादिनं शिशुञ्जातं न बिभ्रति। विशामग्निं स्वध्वरं(१५)। प्र देवं

देववीतये भरता वसुवित्तमं। आ स्वे योनौ निषी-
दतु[१६]। आ॥ ४॥

जातं जातवेदसि प्रियꣳ शिशीतातिथिं। स्योन आ-
गृहपतिं[१७]। अग्निनाग्निः समिध्यते कविर्गृहपति-
र्युवा हव्यवाड्जुह्वास्यः[१८]। त्वꣳ ह्यग्ने अग्निना विप्रो
विप्रेण सन्त्सता। सखा सख्या समिध्यसे[१९]। तं
मर्जयन्त सुक्रतुं पुरोयावानमाजिषु। स्वेषु क्षयेषु वा-
जिनं[२०]। यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि
प्रथमान्यासन्। ते ह नाकं महिमानः सचन्ते यत्र
पूर्वे साध्याः सन्ति देवाः[२१]॥ ५॥

वोढवे। दूतस्त्वं। तमु। सीद त्वा। यत्र। चत्वारि
च॥ ११॥

पूर्णाः। ऋषयः। अग्निना। ये देवाः। सूर्यो मा।
सन्त्वा नह्यामि। वषट्कारः। उपयामगृहीतोसि।
यां वै। त्वे क्रतुं। प्र देवम्। एकादश॥ ११॥
पूर्णाः। सहजान्। तवाग्ने। वामीः। प्राणैरेव। षट्-
त्रिꣳशत्॥ ३६॥ पूर्णाः। सन्ति देवाः।

हरिः॥ ॐ

इति तैत्तिरीयसंहितायां तृतीयकाण्डे पञ्चम-
प्रपाठके एकादशोऽनुवाकः॥ ०॥

॥ ०॥ समाप्तश्च तृतीयकाण्डः॥ ०॥

अतिग्राह्य-प्राणनामग्रहा दशम ईरिताः।

अथैकादशे पाशुकहौत्रोपयोगिमन्त्रा उच्यन्ते। तत्र ब्राह्मण-ग्रन्थे तृतीयकाण्डे षष्ठप्रपाठके, (१ अ०) "अञ्जन्ति त्वामध्वरे देव-यन्तः" इत्यत्र पाशुकहौत्रमन्त्राः प्रायेणोक्ताः, अवशिष्टास्तु मन्त्रा इहाभिधीयन्ते। तत्राष्टभिर्मन्त्रैरुत्तरवेदिं प्रति अग्निं प्रणयेत्।

तेषु प्रथमं मन्त्रमाह,—"प्र देवं देव्या धिया भरता जात-वेदसं। हव्या नो वक्षदानुषक्[१]" इति। हे ऋत्विग्, यजमानाः 'जातवेदसं' (उत्पन्नस्य जगतो वेदितारं) 'देवं' 'देव्या' (प्रकाश-रूपया, विवेकयुक्तया) 'धिया' प्रकर्षेण 'भरत' (पोषयत)। सोऽपि जातवेदा 'आनुषक्' (अनुषक्त आदरयुक्तः) अस्माकं 'हव्या' 'वक्षत्' (हवींषि वहतु)।

अथ द्वितीयं मन्त्रमाह,—"अयमु ष्य: प्र देवयुर्होता यज्ञाय नीयते। रथो न योरभीवृतो घृणीवान् चेतति त्मना[२]" इति। 'अयम्' एव 'स्यः' (सोऽग्निः) यज्ञार्थं उत्तरवेदिं प्रति प्रकर्षेण 'नीयते'। कीदृशोऽग्निः?—(देवान् आत्मन इच्छति इति) 'देवयुः', 'होता' (होमस्य निष्पादकः), 'रथो न योः' (रथ इव यवयिता पृथक्कर्त्ता),—यथा रथः स्वस्मिन्नारूढं पुरुषं भूमिष्ठेभ्यः पृथक्कृत्य ग्रामे नयति, तथा अयमग्निः स्वस्मिन् हुतं हविः इतरेभ्यो हविर्भ्यः पृथक्कृत्य देवेषु नयति; 'अभीवृतः' (यज-मानैराभिमुख्येन स्वीकृतः), 'घृणीवान्' (रश्मियुक्तः), तादृशो-ऽग्निः 'त्मना' 'चेतति' (स्वयमेव यजमानभक्तिं) जानाति।

तृतीयमन्त्रपाठस्तु,—"अयमग्निरुरुष्यत्यमृतादिव जन्मनः।

सहसश्चित्सहीयान् देवो जीवातवे कृतः(३)" इति। 'अयं' प्रणीयमानः 'अग्निः' 'जन्मनो' (जन्ममात्रेण) 'उरुष्यति' (प्रवृद्धो भवितुमिच्छति), 'अमृतादिव' (यथा पीतेनामृतेन मरणरहितः प्रवर्धते तद्वत्)। किं चायं 'देवो' 'जीवातवे' (जीवनौषधाय) 'सहसश्चित्सहीयान्' 'कृतः' (बलवतोऽप्यतिप्रबलः कृत):, यदा अयमग्निः प्रबलो भवति, तदा स्वयमपि विनाशरहितो जीवति, यजमानमपि यज्ञनिष्पादनेन जीवयतीत्यर्थः।

चतुर्थमन्त्रपाठस्तु,—"इडायास्त्वा पदे वयन्नाभा पृथिव्या अधि। जातवेदो निधीमह्यग्ने हव्याय वोढवे(४)" इति। हे 'जातवेदः' 'अग्ने', 'हव्याय वोढवे' (हवींषि वोढुं) त्वां 'वयं' 'धीमहि'* (नितरां स्थापयामः)। कुत्रेति?—तदुच्यते,—'पृथिव्या' 'अधि' (उपरि) 'नाभा' (नाभिसदृशे) आहवनीयायतने, तच्चायतनम्, इडापदसदृशं;—यथा गोरूपाया इडायाः पदं घृतयुक्तं, तथेदं घृताहुतियुक्तं, तादृशस्थाने स्थापयामः।

पञ्चममन्त्रपाठस्तु,—"अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिं। कुलायिनं घृतवन्तꣳ सवित्रे यज्ञं नय यजमानाय साधु(५)" इति। 'विश्वेभिः' 'देवैः' 'स्वनीक' (सर्वेऽपि देवा अस्य सेनारूपाः, तादृश) हे 'अग्ने', 'प्रथमः' (देवानां मध्ये मुख्यः) त्वं 'योनिं' 'सीद'(स्थानं प्राप्नुहि)। कीदृशं योनिं?— 'ऊर्णावन्तं' यथा कम्बलास्तरणोपेतो देशो मृदुः, तथा अयं सेव्यः, तादृशं, 'कुलायिनं', यथा पक्षिणां नीडः सम्यङ्निर्मितः,

* अत्र निधीमहि इति पाठो भवितुं युक्तः।

एवमयमपि तादृशः; 'घृतवन्तं' (घृताहुत्याधारभूतं)। यद्वा आहवनीयाख्यं कुलायोपेतं घृताहुतियुक्तं 'यज्ञं' 'सवित्रे' (अनुष्ठात्रे) 'यजमानाय', 'साधु' 'नय' (सम्यक् समाप्तिं गमय)।

षष्ठमन्त्रमाह,—"सीद होतः स्व उ लोके चिकित्वान् सादया यज्ञꣳ सुकृतस्य योनौ। देवावीर्देवान् हविषा यजास्यग्ने बृहत् यजमाने वयो धाः[६]" इति। हे 'होतः' (होमनिष्पादक), 'चिकित्वान्' (अभिज्ञः) त्वं स्वकीयस्थाने उत्तरवेदिरूपे 'सीद' (उपविश), 'यज्ञं' चेमं 'सुकृतस्य योनौ' (पुण्यकर्मणो योग्यस्थाने) 'सादय' (स्थापय); (देवान् वेति कामयते इति) 'देवावीः' देवप्रिय इत्यर्थः; तादृशस्त्वं 'देवान् हविषा' 'यजासि' (पूजयसि), हे 'अग्ने', 'यजमाने' 'बृहत्' 'वयो' (दीर्घमायुः) स्थापय।

सप्तममन्त्रमाह,—"नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः। अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः[७]" इति। 'होतृषदने' (होमनिष्पादकस्य योग्यस्थाने) उत्तरवेदिरूपे अयमग्निर्नितराम् 'असदत्' (सम्यगुपविष्टवान्)। कीदृशोऽग्निः),—'होता' (देवानामाह्वाता), 'विदानः' (स्थानाभिज्ञः), 'त्वेषो' (दीप्तिमान्), 'दीदिवान्' (देवेभ्यो हविषो दाता), 'सुदक्षः' (अत्यन्तं कुशलः), 'अदब्धव्रतप्रमतिः' (अहिंसिते कर्मणि प्रकृष्टा मतिर्यस्य स तथाविधः), 'वसिष्ठः' (अतिशयेन वासयिता), (सहस्रसङ्ख्याकानि हवींषि भरति पोषयति इति) 'सहस्रम्भरः', (शुचिः शुद्धा होमयोग्या जिह्वा ज्वाला यस्यासौ) 'शुचिजिह्वः'।

अष्टममन्त्रमाह,—"त्व दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता। अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः[८]" हे 'अग्ने', 'त्वं' देवानां 'दूतः' असि, 'अग्निर्देवानां दूत आसीत्' इति श्रुत्यन्तरात्। 'त्वमु नः परस्पाः' (त्वमेवास्माकमतिशयेन पालकः); 'त्वं वस्यः' (त्वमेवास्मिन् कर्मणि निवासयोग्यः); हे 'वृषभ' (देवश्रेष्ठ), 'आ'—'प्रणेता' (त्वमेवागत्य यागस्य प्रवर्त्तकः); 'तोकस्य'* (अस्मदपत्यस्य) 'तनूनां' 'तने' (शरीराणां विस्तारे) 'अप्रयुच्छन्' (प्रमादमकुर्वन्), 'दीद्यत्' (तमोनिवारणेन दीपयन्); अथ वा (देवेभ्यो हविर्ददानः); 'गोपाः' (पालकः) सन् 'बोधि' (बुध्यस्व) अप्रमत्तो भवेत्यर्थः। एतेऽष्टौ मन्त्रा उत्तरवेदिं प्रति अग्निप्रणयनकाले होत्रा पठनीयाः।

अथाग्निमन्थने पञ्च मन्त्राः पठनीयाः।

तत्र प्रथमं मन्त्रमाह,—"अभि त्वा देव सवितरीशानं वार्याणां। सदावन् भागमीमहे[९]" इति। हे 'सवितः' 'देव' (प्रेरक, परमेश्वर),'वार्याणां' (निवारणीयानां) विघ्नानाम् 'ईशानं' (विनिवारणे समर्थं), त्वाम् 'अभि' (प्राप्नुमिति शेषः) 'सदावन्' (सर्वदा हे रक्षक), 'भागं' (भजनीयमग्निं) 'ईमहे' (त्वत्प्रसादात् प्राप्नुमः)।

अथ द्वितीयो मन्त्रः,—"मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां। पिपृतां नो भरीमभि.[१०]" इति। महती 'द्यौः' 'पृथिवी' चेत्येते उभे 'नः' (अस्मदीयम्) 'इमं यज्ञं मिमिक्षतां'

* अत्र तोकस्य नः इति पाठो धर्तुमुपयुक्तः।

(आज्यहोमादिभिर्हविर्द्रव्यैः सेनुमिच्छां कुरुतां)। 'भरीमभिः' (भरणैः) अस्मान् 'पिपृतां' (पूरयताम्)।

अथ तृतीयः,—"त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघत(११)" इति। हे 'अग्ने', अथर्वाख्य ऋषिः 'पुष्करादधि' (पद्मपत्रस्योपरि) 'त्वां' 'निरमन्थत' (निःशेषेण मथितवान्)। अत एव पञ्चमकाण्डे ब्राह्मणमाम्नातम्,—"पुष्करपर्णे ह्येनमुपश्रितमविन्दत्" इति। कीदृशात् पुष्करात्?—'मूर्ध्नः' (उत्तमाङ्गवत् प्रशस्तात्); 'विश्वस्य वाघतः' (सर्वस्य जगतो वाहकात्)। इदं हि पुष्करपर्णं अग्निमन्थनयज्ञनिष्पादनादिद्वारा सर्वं जगन्निवहति।

अथ चतुर्थः,—"तमु त्वा दध्यङ् ऋषिः पुत्र ईधे अथर्वणः। वृत्रहणं पुरन्दरम्(१२)" इति। हे 'अग्ने', 'अथर्वणः' 'पुत्रो' 'दध्यङ्'-नामक 'ऋषिः' 'तमु त्वा' 'ईधे' (तम् उ त्वाम् प्रज्वालितवान्)। कीदृशं त्वां?—'वृत्रहणं' (वैरिविनाशनम्), 'पुरन्दरं' (रुद्ररूपेणासुरसम्बन्धिनां त्रयाणां पुराणां विदारयितारम्)।

अथ पञ्चमः,—"तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमं। धनञ्जयꣳ रणेरणे(१३)" इति। हे अग्ने, पाथ्य-नामकः कश्चित् ऋषिः 'तमु त्वा' 'समीधे' (तमेव त्वां सम्यक् प्रज्वालितवान्), कीदृशः पाथ्यः?—'वृषा' (श्रेष्ठः), 'कीदृशं त्वां?—'दस्युहन्तमं' (तस्कराणाम् अतिशयेन हन्तारं), 'रणेरणे' 'धनञ्जयं' (तेषु तेषु संग्रामेषु धनस्य जेतारम्)।

अथ वह्नौ जाते ऋक्त्रयं होता पठेत्। तत्रेयं प्रथमा, "उत

ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि धनञ्जयो रणेरणे[१४]" इति। 'उत जन्तवः' (सर्वेऽपि प्राणिनः), परस्परमेवं 'ब्रुवन्तु', किमिति?— 'अग्निः' 'उत्'—'अजनि' इति। कीदृशोऽग्निः ?—'वृत्रहा', (शत्रु-घाती), 'रणेरणे धनञ्जयश्च'।

अथ द्वितीया, "आ यं हस्ते न खादिनꣳ शिशुं जातं न बिभ्रति विशामग्निꣳ स्वध्वरम्[१५]" इति। 'खादिनं' (हविषां भक्षकम्) 'यम्' 'अग्निं' 'हस्ते न' (पाणाविव कस्मिंश्चित्पात्रे) 'आ'— 'बिभ्रति' (आ निधानात् ऋत्विजो धारयन्ति)। कमिव ?—'जातं शिशुं न' (सद्यःसमुत्पन्नं शिशुमिव)। कीदृशमग्निं? 'विशां स्वध्वरं' (प्रजानां सम्यगहिंसकम्)। तमग्निं पुरतः पश्याम इति शेषः।

अस्याग्नेः पूर्वाग्निना सह मेलने, 'प्र देवम्' इत्याद्याः षडृचो होता पठेत्।

तत्र प्रथमामाह,—"प्र देवं देववीतये भरता वसुवित्तमं। आ स्वे योनौ निषीदतु[१६]" इति। 'देववीतये' (देवानां हविः-स्वादनाय) 'देवं' (दीप्तिमन्तम्) अग्निं 'भरत' (हे ऋत्विजः प्रकर्षेण पोषयत)। कीदृशं देवं ?—'वसुवित्तमं' (अतिशयेन हवि-र्लक्षणधनाभिज्ञं)। स च देव 'आ'—गत्य 'स्वे योनौ' (पूर्वाग्निरूपे स्वकीये स्थाने) 'निषीदतु' (नितरां उप समीपे प्रविष्टो भवतु)।

अथ द्वितीयामाह,—"आ जातं जातवेदसि प्रियꣳ शिशी-तातिथिं। स्योन आगृहपतिम्[१७]" इति। हे ऋत्विजः, इदानीं 'जातं' 'प्रियम्' अतिथिरूपम् एनमग्निं पूर्वमेव स्थिते 'जातवेदसि' 'शिशीत' (शयानं कुरुत)। कीदृशे जातवेदसि?—'स्योने'

(सुखरूपे)। कीदृशं जातं?—'आगृहपतिं' (सर्वतो गृहस्य पालकम्)।

अथ तृतीयामाह,—"अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा। हव्यवाड् जुह्वास्यः[१८]" इति। पूर्वसिद्धेन 'अग्निना' सह इदानीमानीतः 'अग्निः' 'समिध्यते' (सम्यक् प्रज्वाल्यते)। कीदृशोऽग्निः?—'कविः' (विद्वान्), 'गृहपतिः' (गृहस्य पालयिता), 'युवा' (नित्यतरुणः), (हव्यं वहतीति) 'हव्यवाट्', (जुह्वरेवास्यं मुखं यस्यासौ) 'जुह्वास्यः'।

अथ चतुर्थीमाह,—"त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन् सता। सखा सख्या समिध्यसे[१९]" इति। हे नूतनाग्ने, त्वं पूर्वेण 'अग्निना' सह सम्यक् प्रज्वाल्यसे। कीदृशस्त्वं?—'विप्रः' (ब्राह्मणजात्यभिमानी), 'सन्' (विनाशराहित्येन सर्वदा अवस्थितः), 'सखा' (सखिवदितरस्मिन्नग्नौ प्रीतियुक्तः)। कीदृशेनाग्निना?—'विप्रेण' 'सता' 'सख्या' च।

अथ पञ्चमीमाह,—"तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु। स्वेषु क्षयेषु वाजिनम्[२०]" इति। हे ऋत्विजः, 'तम्' इमं मथितमग्निं 'मर्जयन्त' (शोधयत)। कीदृशं?—'सुक्रतुं' (सुष्ठु क्रतुनिष्पादकम्)। 'आजिषु' (संग्रामेषु) 'पुरोयावानं' (पुरतो गन्तारं)। 'स्वेषु क्षयेषु' (यजमानसम्बन्धिषु स्वकीयगृहेषु) 'वाजिनम्' (अन्नसम्पादकम्)।

अथ षष्ठीमाह,—"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः

सन्ति देवाः(११)" इति। 'देवाः' (देवत्वं प्रेप्सवः) यजमानाः 'यज्ञेन' (यज्ञसाधनेन नूतनेनाग्निना सह) 'यज्ञं' (यज्ञसाधनं) पुरातनम् अग्निम् 'अयजन्त' पूजितवन्तः। 'तानि' मिलित्वाग्निचयनसाध्यानि कर्माणि सुकृतानि 'प्रथमानि' 'आसन्' (मुख्यानि अभवन्)। 'ते'* 'महिमानः' (ते खलु महान्तः) यजमानाः 'नाकं सचन्ते', (स्वर्गं समवयन्ति)। 'यत्र' स्वर्गे 'पूर्वे' यजमानाः 'साध्याः' (साध्यफलोपेताः) 'देवाः' 'सन्ति' (ये वा भूत्वा वर्तन्ते, ते नाकं सेवन्त इति पूर्वत्रान्वयः)।

अत्र विनियोगसङ्ग्रहः,—

अथ पाशुकहोत्रस्य शेष औत्तरवेदिके।
अग्निप्रणयने ह्यष्टौ प्र देवमिति मन्त्रकाः॥
अथाग्निमन्थने पञ्च जाते वक्षावुत द्वयम्।
प्र दे, ऽग्न्योर्मेलने षट्स्युर्मन्त्रा अत्रैकविंशतिः॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये तृतीयकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः॥०॥

समाप्तश्चायं पञ्चमप्रपाठकः॥

॥०॥ समाप्तश्च तृतीयकाण्डः॥ ०॥

---

*अत्र, ते ह इति पाठे। धर्त्तुं युक्तः।